माणिकचन्द्र-दिगम्बर-जैनग्रन्थमालायाः त्रयोविंशतितमो ग्रन्थः ।

श्रीमद्वट्टकेराचार्यविरचितो

# मूलाचारः ।

( द्वितीयो भागः )

श्रीवसुनन्दिश्रमणकृतया टीकया समेतः ।



प्रकाशिका—

मा० दि० जैनग्रन्थमालासमितिः ।

श्रावण, श्रीवीरनिर्वाणसंवत् २४४९.

वि० सं० १९८० ।

# अधिकार-सूची ।



श्रीवट्टकेरस्वामिकृतो

# मूलाचारः ।



श्रीवसुनन्दिसिद्धान्तचक्रवर्तिविरचितटीकासहितः ।

## द्वादशानुप्रेक्षाधिकारः ।



**सिद्धे णमंसिदूण य झाणुत्तमखवियदीहसंसारे ।**
**दह दह दो दो य जिणे दह दो अणुपेहणा वुच्छं ॥१॥**

सिद्धान् नमस्कृत्य च ध्यानोत्तमक्षपितदीर्घसंसारान् ।
दश दश द्वौ द्वौ च जिनान् दश द्वे अनुप्रेक्षा वक्ष्ये ॥ १ ॥

**टीका**—सिद्धान् लब्धात्मस्वरूपान् । नमंसित्वा प्रणम्य । किंविशिष्टान्? ध्यानेनोत्तमेन क्षपितो दीर्घसंसारो यैस्ते ध्यानोत्तमक्षपितदीर्घसंसारास्तान् शुक्लध्यानविध्वस्तामिथ्यात्वासंयमकषाययोगान् । दश दश वीप्सावचनं चैतत् विंशतितिर्थिकरान्, द्वौ द्वौ चतुरश्चतुर्विंशतितीर्थकरांश्च जिनान् प्रणम्य । दश द्वे च द्वादशानुप्रेक्षा वक्ष्य इति संबंधः । ध्यानमध्ये[1] या द्वादशानुप्रेक्षाः सूचितास्तासां प्रपंचोऽयमिति ॥ १ ॥

---

१ ध्यानमध्ये या द्वादशानुप्रेक्षाः सूचितास्तासां प्रपंचोयमिति प्रतिज्ञावाक्येन सूचितास्तासां प्रपंचोऽयमिति, प्रेस–पुस्तके पाठः ।

अद्धुवमसरणमेगत्तमण्णसंसारलोगमसुचित्तं ।
आसवसंवरणिज्जरधम्मं बोधिं च चिंतिज्जो ॥ २ ॥

अध्रुवमशरणमेकत्वं अन्यत्वसंसारलोकं अशुचित्वं ।
आस्रवसंवरनिर्जराधर्मं बोधिं च चिंतयेत् ॥ २ ॥

ठाणाणि आसणाणि य देवासुरमणुयइड्ढिसोक्खाइं ।
मादुपिदुसयणसंवासदा य पीदी वि य अणिच्चा ॥ ३ ॥

स्थानानि आसनानि च देवासुरमनुजर्द्धिसौख्यानि ।
मातृपितृस्वजनसंवासता च प्रीतिरपि च अनित्यानि ॥ ३ ॥

जम्मजरामरणसमाहिदह्मि सरणं ण विज्जदे लोए ।
जरमरणमहारिउवारणं तु जिणसासणं मुच्चा ॥ ६ ॥

जन्मजरामरणसमाहिते शरणं न विद्यते लोके ।
जरामरणमहारिपुवारणं तु जिनशासनं मुक्त्वा ॥ ६ ॥

तथा;—

मरणभयह्मि उवगदे देवा वि सइंदया ण तारंति ।
धम्मो ताणं सरणं गदित्ति चिंतेहि सरणत्तं ॥ ७ ॥

मरणभये उपगते देवा अपि सेन्द्रा न तारयन्ति ।
धर्मस्त्राणं शरणं गतिरिति चिन्तयाशरणत्वं ॥ ७ ॥

एकत्वस्वरूपमाह;—

**सयणस्स परियणस्स य मज्झे एक्को रुवंतओ दुहिदो ।**
**वज्जदि मच्चुवसगदो ण जणो कोई समं एदि ॥ ८ ॥**

स्वजनस्य परिजनस्य च मध्ये एकः रुजार्तः दुःखितः ।
व्रजति मृत्युवशगतः न जनः कश्चिदपि समं एति ॥ ८ ॥

टीका—स्वजनस्य भ्रातृव्यपितृव्यादिकस्य, परिजनस्य दासमित्रादिकस्य च मध्ये, एकोसहायः, रुजार्तो व्याधिग्रस्तो दुःखितः व्रजति मृत्युवशंगतो न जनः कश्चित् तेन सममेति गच्छति ॥ ८ ॥

तथा;—

**एक्को करेइ कम्मं एक्को हिंडदि य दीहसंसारे ।**
**एक्को जायदि मरदि य एवं चिंतेहि एयत्तं ॥ ९ ॥**

एकः करोति कर्म एकः हिंडते च दीर्घसंसारे ।
एकः जायते म्रियते च एवं चिंतय एकत्वं ॥ ९ ॥

टीका—एकः करोति शुभाशुभं कर्म, एक एव च हिण्डते भ्रमति दीर्घसंसारे, एको जायते, एकश्च म्रियते, एवं चिन्तय भावयैकत्वमिति ॥ ९ ॥

अन्यत्वस्वरूपमाह;—

**मादुपिदुसयणसंबंधिणो य सव्वे वि अत्तणो अण्णे ।**
**इह लोग बंधवा ते ण य परलोगं समं णेंति ॥ १० ॥**

मातृपितृस्वजनसंबंधिनश्च सर्वेपि आत्मनः अन्ये ।
इह लोके बांधवास्ते न च परलोकं समं यान्ति ॥ १० ॥

टीका—मातृपितृस्वजनसंबंधिनः सर्वेऽपि आत्मनोऽन्ये पृथग्भूता इह

अण्णो अण्णं सोयदि मदोत्ति मम णाहओत्ति मण्णंतो।
अत्ताणं ण दु सोयदि संसारमहण्णवे बूडुं ॥ ११ ॥

अन्यः अन्यं शोचयति मृत इति मम नाथ इति मन्यमान
आत्मानं न तु शोचयति संसारमहार्णवे बुडितं ॥ ११ ॥

टीका—अन्य [illegible] मम नाथ इति मन्य-
मान, [illegible] ॥ ११ ॥

[illegible]—

अण्णं इमं सरीरादिगं पि जं होज्ज बाहिरं दव्वं।
णाणं दंसणमादात्ति एवं चिंतेहि अण्णत्तं ॥ १२ ॥

अन्यत् इदं शरीरादिकमपि यत् भवेत बहिर्द्रव्यं।
ज्ञानं दर्शनमात्मा इति एवं चिंतय अन्यत्वं ॥ १२ ॥

मिच्छत्तेणो छण्णो मग्गं जिणदेसिदं अपेक्खंतो।
भमिहदि भीमकुडिल्ले जीवो संसारकंतारे ॥ १३ ॥

मिथ्यात्वेन आच्छन्नो मार्गं जिनदेशितं अपश्यन्।
भ्रमति भीमकुटिले जीवः संसारकान्तारे ॥ १३ ॥

**टीका**—मिथ्यात्वेनाच्छन्नोऽश्रद्धानतमसा
ग्दर्शनज्ञानचारित्राणि ' तं जिनदर्शितं जिनेन प्रतिपादितमपश्यन् अज्ञाना-द्भ्रमत्ययं जीवः, संसारकान्तारे संसाराटव्यां, भीमे भयानके, कुटिलेऽतीवगहने मोहवल्यादिनिबद्ध इति ॥ १३ ॥

चतुर्विधं संसारस्वरूपमाह;—

**दव्वे खेत्ते काले भावे य चदुव्विहो य संसारो ।**
**चदुगदिगमणणिबद्धो बहुप्पयारेहिं णादव्वो ॥ १४ ॥**

**द्रव्यं क्षेत्रं कालः भावश्च चतुर्विधश्च संसारः ।**
**चतुर्गतिगमननिबद्धः बहुप्रकारैः ज्ञातव्यः ॥ १४ ॥**

**टीका**—संसरणं संसारः परिवर्तनं, तच्चतुर्विधं द्रव्यपरिवर्तनं क्षेत्रपरिवर्त्तनं कालपरिवर्त्तनं भावपरिवर्त्तनं, भवपरिवर्त्तनं चात्रैव द्रष्टव्यमन्यत्र पंचविधस्यो-पदेशादिति । तत्र द्रव्यपरिवर्त्तनं द्विविधं नोकर्मपरिवर्त्तनं कर्मपरिवर्त्तनं चेति । तत्र नोकर्मपरिवर्त्तनं नाम त्रयाणां शरीराणां षण्णां पर्याप्तीनां योग्या ये पुद्गला एकेन जीवेनैकस्मिन् समये गृहीताः स्निग्धरूक्षवर्णगंधादिभिस्तीव्रमन्द-मध्यभावेन च यथावस्थिता द्वितीयादिषु समयेषु निर्जीर्णास्ततो गृहीतानंतवा-राननतीत्य मिश्रकाँश्चानंतवारान्प्रगृह्य मध्ये गृहीताँश्चानंतवारान् समतीत्य तेनैव प्रकारेण तस्यैव जीवस्य नोकर्मभावमापद्यन्ते यावत्तावत्समुदितं नोकर्मद्रव्य-परिवर्त्तनमिति । कर्मद्रव्यपरिवर्त्तनमुच्यते—एकस्मिन् समये जीवेनैकेनाष्ट-विधकर्मभावेन ये पुद्गला गृहीताः समयाधिकामावलिकामतीत्य द्वितीयादिषु समयेषु निर्जीर्णास्ततो गृहीतानगृहीतान्मिश्रानंतवारानतीत्य त एव कर्मस्क-न्धास्तेनैव विधिना तस्य जीवस्य कर्मभावमापद्यन्ते यावत्तावत्कर्मद्रव्यपरिवर्त्त-नमिति । क्षेत्रपरिवर्तनमुच्यते—सूक्ष्मनिगोतजीवोऽपर्याप्तकः सर्वजघन्यप्रदेशशरीरो लोकस्याष्टमध्यप्रदेशान् स्वशरीरमध्यप्रदेशान् कृत्वोत्पन्नः क्षुद्रभवग्रहणं जीवित्वा मृतः स एव पुनस्तेनैवावगाहेन द्विरुत्पन्नस्तथा त्रिस्तथा चतुरित्येवं यावदंगुलस्य

तीनां च परिवर्त्तनक्रमो वेदितव्यस्तदेतत्सर्वं समुदितं भावपरिवर्त्तनमिति । चशब्देन सूचितं भवपरिवर्तनमुच्यते—नरकगतौ सर्वजघन्यमायुर्दशवर्षसहस्राणि तेनायुषा तत्र कश्चिदुत्पन्नः पुनः परिभ्राम्य तेनैवायुषा तत्रैव जात एवं दशवर्षसहस्राणां यावन्तः समयास्तावत्कृत्वस्तत्रैव जातो तत्रैव मृतश्च पुनरेकैकसमायाधिकभावेन त्रयस्त्रिंशत्सागरोपमाणि परिसमापितानि, ततः प्रच्युत्त्य तिर्यग्गतावन्तर्मुहूर्त्तायुः समुत्पन्नः पूर्वोक्तेनैव क्रमेण त्रीणि पल्योपमानि तेनैव परिसमापितानि, तथैवं मनुष्यगतौ देवगतौ च नरकगतिवत्, अयं तु विशेषः—एकात्रिंशत्सागरोपमाणि परिसमापितानि यावत्तावद्भवपरिवर्त्तनमिति । एवं चतुर्विधः पंचविधो वा संसारः चतुर्गतिगमननिबद्धो नरकतिर्यङ्मनुष्यदेवगतिभ्रमणहेतुको बहुप्रकारैः षट्सप्तादिभेदैर्ज्ञातव्य इति ॥ १४ ॥

तथा षड्विधसंसारमाह,—

**किं केण कस्स कत्थ व केवचिरं कदिविधो य भावो य ।**
**छहिं अणिओगद्दारें सव्वे भावाणुगंतव्वा ॥ १५ ॥**

**कः केन कस्य कुत्र वा कियच्चिरं कतिविधः च भावश्च ।**
**षड्भिरनियोगद्वारैः सर्वे भावा अनुगंतव्याः ॥ १५ ॥**

**टीका**—कः संसारः ? संसरणं संसारश्चतुर्गतिगमनरूपः, केन भावेन संसारः? औदयिकौपशमिकक्षायोपशमिकपारिणामिकादिभावेन, कस्य ? संसारिजीव स्याष्टविधकर्मावष्टब्धनारकतिर्यङ्मनुष्यदेवरूपस्य, क्व संसारः ? मिथ्यात्वासंयमकषाययोगेषु तिर्यग्लोके वा, कियच्चिरं संसारः ? अनाद्यनिधनोऽनादिसनिधनः, कतिविधः ? कतिप्रकार इति । अनेन प्रकारेण संसार एकविधो द्विविधस्त्रिविधश्चतुर्विधः षड्विधः पंचविध इत्यादि, न केवलं संसारः षड्भिरनियोगद्वारैर्ज्ञायते किन्तु सर्वेऽपि भावाः पदार्था अनुगंतव्या इत्यर्थः ॥ १५ ॥

तत्थ जरामरणभयं दुक्खं पियविप्पओग बीहणयं ।
अप्पियसंजोगं वि य रोगमहावेदणाओ य ॥ १६ ॥

तत्र जरामरणभयं दुःखं प्रियविप्रयोगं भीषणकं ।
अप्रियसंयोगमपि च रोगमहावेदनाश्च ॥ १६ ॥

जायंतो य मरंतो जलथलखयरेसु तिरियणिरएसु ।
माणुस्से देवत्ते दुक्खसहस्साणि पप्पोदि ॥ १७ ॥

जायमानश्च म्रियमाणः जलस्थलखचरेषु तिर्यङ्नरकेषु ।
मानुष्ये देवत्वे दुःखसहस्राणि प्राप्नोति ॥ १७ ॥

टीका—ये केचन भोगा दैवा मानुषाश्चानुभूतास्तावतास्तेषु भोगेषु अनंतवारान् दुःखं च प्राप्तं, नरकेषु तिर्यग्योनिषु च दुःखमनंतवारान् प्राप्तमिति ॥ १८ ॥

तथा;—

**संजोगविप्पओगा लाहालाहं सुहं च दुक्खं च।**
**संसारे अणुभूदा माणं च तहावमाणं च ॥ १९ ॥**

**संयोगविप्रयोगा लाभोऽलाभः सुखं च दुःखं च।**
**संसारे अनुभूता मानं च तथापमानं च ॥ १९ ॥**

टीका—अस्मिन् संसारे जीवेन संयोगा इष्टसमागमाः, विप्रयोगा अनिष्टसमागमाः, स्वेष्टवस्तुनो लाभः प्राप्तिः, अलाभोऽप्राप्तिश्चैते सर्वेऽप्यनुभूतास्तथा सुखं दुःखं चानुभूतं, तथा मानं पूजा, अपमानं परिभवश्चानुभूतमिति ॥ १९ ॥

संसारानुप्रेक्षामुपसंहरन्नाह;—

**एवं बहुप्पयारं संसारं विविहदुक्खथिरसारं।**
**णाऊण विचिंतिज्जो तहेव लहुमेव णिस्सारं ॥ २० ॥**

**एवं बहुप्रकारं संसारं विविधदुःखस्थिरसारं।**
**ज्ञात्वा विचिंतयेत् तथैव लघुमेव निस्सार ॥ २० ॥**

टीका—एवं वहुप्रकारं संसारं विविधानि दुःखानि स्थिरः सारो[1] यस्यासौ विविधदुःखस्थिरसारस्तं संसारं ज्ञात्वा लघुमेव शीघ्रं निःसारं चिन्तयेत् भावयेदिति ॥ २० ॥

लोकानुप्रेक्षां विवृण्वन्नाह;—

**एगविहो खलु लोओ दुविहो तिविहो तहा बहुविहो वा**
**दव्वेहिं पज्जएहिं य चिंतिज्जो लोयसब्भावं ॥ २१ ॥**

---

१ ‘ संसारो ’ इति पाठः प्रेस-पुस्तके।

**धर्माधर्माकाशानि गतिरागतिः जीवपुद्गलानां च**
**यावत्तावल्लोकः आकाशमतः परमनंतम् ॥ २३ ।**

**टीका**—धर्माधर्मौ लोकाकाशं च यावन्मात्रे जीवपुद्गलानां[1] च गतिरागतिश्च यावन्मात्रं तावल्लोकोऽतः परमित ऊर्ध्वमाकाशं पंचद्रव्याभावोऽनंतमप्रमाणं केवलज्ञानगम्यमिति ॥ २३ ॥

पुनरपि कस्य संस्थानमित्याह,—

**हेट्ठा मज्झे उवरिं वेत्तासणझल्लरीमुदंगणिभो ।**
**मज्झिमवित्थारेण दु चोद्दसगुणमायदो लोओ ॥ २४ ॥**

**अधो मध्ये उपरि वेत्रासनझल्लरीमृदंगनिभः ।**
**मध्यमविस्तारेण तु चतुर्दशगुण आयतो लोकः ॥ २४ ॥**

**टीका**—अधःप्रदेशे मध्यप्रदेशे उपरिप्रदेशे च यथासंख्येन वेत्रासनझल्लरीमृदंगनिभः, अधो वेत्रासनाकृतिर्मध्ये झल्लर्याकृतिरूर्ध्वं मृदङ्गाकृतिरिति, मध्यमविस्तारप्रमाणेन चतुर्दशगुणः, मध्यमविस्तारस्य प्रमाणमेका रज्जुः सा च चतुर्दशभिर्गुणिता लोकस्यायामो भवति, वातवलयादधस्तादारभ्य यावन्मोक्षस्थानं तयोर्मध्य आयाम इत्युच्यते । स आयामश्चतुर्दशरज्जुमात्र इति । घनाकारेण यदि पुनर्मीयते तदा त्रिचत्वारिंशदधिकात्रिशतरज्जुमात्रो भवतीति ॥२४॥

तत्र लोके जीवाः किं कुर्वन्तीत्याह;—

**तत्थणुहवंति जीवा सकम्मणिव्वत्तियं सुहं दुक्खं ।**
**जम्मणमरणपुणब्भवमणंतभवसायरे भीमे ॥ २५ ॥**

**तत्रानुभवंति जीवाः स्वकर्मनिर्वर्तितं सुखं दुःखं ।**
**जन्ममरणपुनर्भवं अनंतभवसागरे भीमे ॥ २५ ॥**

---

१ ' जीवपुद्गलानां च जीवपुद्गलाना च ' इति द्विरुक्तं प्रेस-पुस्तके ।

**धिग्भवतु लोकधर्मं देवा अपि च सुरपतयो महर्धिकाः ।**
**भुक्त्वा च सुखमतुलं पुनरपि दुःखावहा भवंति ॥ २८ ॥**

**टीका**—धिग्भवतु लोकधर्मं लोकस्वरूपं, यस्माद्देवाः सुरपतयोऽपि महर्द्धिका महाविभूतयो भूत्वा सौख्यमतुलं सुखमनुपमं भुक्त्वा पुनरपि दुःखा-वहा भवन्ति—दुःखस्य भोक्तारो भवन्तीति ॥ २८ ॥

लोकानुप्रेक्षामुपसंहरन्नाह;—

**णाऊण लोगसारं णिस्सारं दीहगमणसंसारं ।**
**लोगग्गसिहरवासं झाहि पयत्तेण सुहवासं ॥ २९ ॥**

**ज्ञात्वा लोकसारं निस्सारं दीर्घगमनसंसारं ।**
**लोकाग्रशिखरवासं ध्यायस्व प्रयत्नेन सुखवासं ॥ २९ ॥**

**टीका**—एवं लोकस्य सारं निःसारं तु ज्ञात्वा दीर्घगमनं संसारं च ज्ञात्वा संसारं चापर्यन्तमवबुध्य लोकाग्रशिखरवासं मोक्षस्थानं सुखवासं निरु-पद्रवं ध्यायस्व चिन्तय प्रयत्नेनेति ॥ २९ ॥

अशुभानुप्रेक्षास्वरूपं निरूपयन्नाह;—

**णिरिएसु असुहमेयंतमेव तिरियेसु बंधरोहादी ।**
**मणुएसु रोगसोगादियं तु दिवि माणसं असुहं ॥ ३० ॥**

**नरकेषु अशुभमेकांतमेव तिर्यक्षु बंधरोधादयः ।**
**मनुजेषु रोगशोकादयस्तु दिवि मानसं अशुभं ॥ ३० ॥**

**टीका**—नरकेष्वशुभमेकान्ततः सर्वकालमशुभमेव, तिर्यक्षु महिषाश्ववा-रणाजादिषु रोधादयो बंधनधरणदमनदहनताड़नादयः, मनुष्येषु रोगशो-कादयस्तु, दिवि देवलोके मानसमशुभं परप्रेषणवाहनमहर्द्धिकदर्शनेन मनो-गतं सुष्ठु दुःखमिति ॥ ३० ॥

आयासदुक्खवेरंभयसोगकलिरागदोसमोहाणं ।
असुहाणमावहो वि य अत्थो मूलं अणत्थाणं ॥ ३१ ।

आयासदुःखवैरभयशोककलिरागद्वेषमोहानाम् ।
अशुभानामावहोऽपि च अर्थो मूलमनर्थानाम् ॥ ३१ ॥

दुग्गमदुल्लहलाभा भयपउरा अप्पकालिया लहुया ।
कामा दुक्खविवागा असुहा सेविज्जमाणा वि ॥ ३२ ॥

दुर्गमदुर्लभलाभा भयप्रचुरा अल्पकालिका लघुकाः ।
कामा दुःखविपाका अशुभाः सेव्यमाना अपि ॥ ३२ ॥

आहारादपि न सुखं भवतीत्याह;—

**असुइविलिविले गब्भे वसमाणो वत्थिपडलपच्छण्णो ।**
**मादूइसेभलालाइयं तु तिव्वासुहं पिबदि ॥ ३३ ॥**

**अशुच्याविले गर्भे वसन् वस्तिपटलप्रच्छन्नः ।**
**मातृश्लेष्मलालायितं तु तीव्राशुभं पिबति ॥ ३३ ॥**

**टीका**—अशुच्याविले मूत्रपुरीषश्लेष्मपित्तरुधिरादिबीभत्से, गर्भे उदराभ्यंतरे, वसन् संतिष्ठमानः, वस्तिपटलप्रच्छन्नः जरायुरावृतः, मातृश्लेष्मलालायितं जनन्या चर्वितं श्लेष्मलालासमन्वितं रसं तीव्रं दुर्गन्धं पिबति यत एवंभूतो मूलाहारस्ततः कथमाहारत् सुखमित्याहारोऽप्यशुभरूप एवेति ॥ ३३ ॥

शरीरमप्यशुभमिति निरूपयन्नाह;—

**मंसट्ठिसिंभवसरुहिरचम्मपित्तंतमुत्तकुणिपकुडिं ।**
**बहुदुक्खरोगभायण सरीरमसुभं वियाणाहि ॥ ३४ ॥**

**मांसास्थिश्लेष्मवसारुधिरचर्मपित्तांत्रमूत्रकुणिपकुटीं ।**
**बहुदुःखरोगभाजनं शरीरमशुभं विजानीहि ॥ ३४ ॥**

**टीका**—मांसास्थिश्लेष्मवसारुधिरचर्मपित्तांत्रमूत्रकुणिपाशुचिकुटीं गृहमेतेषां बहुदुःखरोगभाजनं शरीरमिदशुभमशुचि विजानीहीति ॥ ३४ ॥

तस्मात्;—

**अत्थं कामसरीरादियं पि सव्वमसुभत्ति णादूण ।**
**णिव्विज्जंतो झायसु जह जहसि कलेवरं असुइं॥ ३५॥**

**अर्थं कामशरीरादिकमपि सर्वमशुभमिति ज्ञात्वा ।**
**निर्वेजमानः ध्यायस्व यथा जहासि कलेवरं अशुचि ॥ ३५ ॥**

**रागः द्वेषः मोहः इन्द्रियसंज्ञाश्च गौरवकषायाः।**
**मनोवचनकायसहितास्तु आस्रवा भवंति कर्मणः॥ ३८॥**

**टीका**—रागद्वेषमोहपंचेन्द्रियाहारभयमैथुनपरिग्रहसंज्ञाः ऋद्धिगौरवरसगौरवसातगौरवकषायाश्च मनोवचनकायसहिता एवं सर्वे एते कर्मण आस्रवा भवन्ति—कर्माण्येतैरागच्छन्तीति॥ ३८॥

रागादीन् विवेचयन्नाह;—

**रंजेदि असुहकुणपे रागो दोसो वि दूसदी णिच्चं।**
**मोहो वि महारिवु जं णियदं मोहेदि सब्भावं॥ ३९॥**

**रंजयति अशुभकुणपे रागो द्वेषोपि द्वेष्टि नित्यं।**
**मोहोपि महारिपुः यन्नियतं मोहयति सद्भावं॥ ३९॥**

**टीका**—रागो जीवं कुणपे वस्तुनि रंजयति—कुत्सिते द्रव्येऽनुरागं कारयति रागः। द्वेषोऽपि शोभनमपि द्वेष्टि—सम्यग्दर्शनादिषु द्वेषं कारयति। नित्यं सर्वकालं,। मोहोऽपि महारिपुर्महावैरी यस्मान्नियतं निश्चयेन मोहयति सद्भावं—जीवस्य परमार्थरूपं तिरयतीति॥ ३९॥

यत एवंभूतो मोहोऽतस्तं कुत्सयन्नाह;—

**धिद्धी मोहस्स सदा जेण हिदत्थेण मोहिदो संतो।**
**ण विबुज्झदि जिणवयणं हिदसिवसुहकारणं मग्गं॥**

**धिक् धिक् मोहं सदा येन हृदयस्थेन मोहितः सन्।**
**न विबुध्यते जिनवचनं हितशिवसुखकारणं मार्गम्॥ ४०॥**

**टीका**—धिक् धिक् भवतु मोहं—मोहः प्रलयं गच्छतु। येन मोहेन हृदयस्थेन मोहितो मूढः सन् न विबुध्यते तन्न जानाति जिनवचनं परमागमं।

धिक् तानि इन्द्रियाणि येषां वशतस्तु पापमर्जयित्वा ।
प्राप्नोति पापविपाकं दुःखमनंतं भवगतिषु ॥ ४३ ॥

**टीका**—धिग्भवतु तानीन्द्रियाणि, येषामिन्द्रियाणां वशतो वशं गतः पापमर्जयित्वा च पापं संगृह्य प्राप्नोति, तस्य पापस्य विपाकं फलं भवगतिषु च दुःखमनंतं प्राप्नोतीति ॥ ४३ ॥

संज्ञागौरवाणां स्वरूपमाह;—

**सण्णाहिं गारवेहिं अ गुरुओ गुरुगं तु पावमज्जणिय ।**
**तो कम्मभारगुरुओ गुरुगं दुक्खं समणुभवइ ॥ ४४ ॥**

संज्ञाभिः गौरवैश्च गुरुर्गुरुकं तु पापमर्जयित्वा ।
ततः कर्मभारगुरुः गुरुकं दुःखं समनुभवति ॥ ४४ ॥

**टीका**—आहारादिसंज्ञाभिर्गौरवैश्च गुरुः सन् गुरुकं तु पापमर्जयित्वा पापभारं स्वीकृत्य ततः पापभारेण गुरुर्भूत्वा ततो गुरुकं दुःखं समनुभवतीति॥४४॥

कषायास्रवस्वरूपमाह;—

**कोधो माणो माया लोभो य दुरासया कसायरिऊ ।**
**दोससहस्सावासा दुक्खसहस्साणि पावंति ॥ ४५ ॥**

क्रोधः मानः माया लोभश्च दुराश्रयाः कषायरिपवः ।
दोषसहस्रावासाः दुःखसहस्राणि प्रापयंति ॥ ४५ ॥

**टीका**—क्रोधमानमायालोभा दुराश्रया दुष्टाश्रयाः कषायरिपवः दोषसहस्राणामावासाः दुःखसहस्राणि जीवान् प्रापयंति—दुःखसहस्रैः कषाया जीवान् संबंधयन्तीत्यर्थः ॥ ४५ ॥

[illegible]—

हिंसादिएहिं पंचहिं आसवदारेहिं आसवदि पावं ।
तेहिंतो धुव विणासो सासवणावा जह समुद्दे ॥ ५६ ॥

हिंसादिभिः पंचभिः आस्रवद्वारैः आस्रवति पापं ।
तेभ्यः ध्रुवं विनाशः सास्रवनौः यथा समुद्रे ॥ ५६ ॥

रयेत् । कानि तानि ? इन्द्रियकषायसंज्ञागौरवरागादिकानि । यस्माद्देतैः कर्मागच्छति तस्मादेतानि सर्वाणि निरोधयेदिति ॥ ४८ ॥

रुद्धेषु येषु यद्भवति तदाह,—

**रुद्धेसु कसायेसु अ मूलादो होंति आसवा रुद्धा ।**
**दुब्भत्तम्हि णिरुद्धे वणम्मि णावा जह ण एदि ॥ ४९ ॥**

**रुद्धेषु कषायेषु च मूलात् भवंति आस्रवा रुद्धाः ।**
**दुर्वहति निरुद्धे वने नौः यथा न एति ॥ ४९ ॥**

**टीका**—रुद्धेषु च कषायेषु च मूलादारभ्य मूलत आस्रवाः सर्वेऽपि रुद्धाः सम्यक् पिहिता भवंति यथा दुर्वहाति वने पानीये—दुष्टे वहति स्रोतासि जले, अथ व्रणे—विवरे, दुष्टे वहाति, निरुद्धे विधृते, नावं नैति जलं यथा । अथवा नालिकेरादित्वग्भिर्बद्धा नौः सास्रवा सत्यपि नयति प्राप्नोति परतीरं, अथवा नैति विनाशं । कषायेषु निरुद्धेषु आस्रवा रुद्धा यथा नावं नैति जलं रुद्धेषु, यथा च सास्रवा नौर्दुर्वहति पानीये निरुद्धे मूलतस्तस्या नावः सर्वेऽपि आस्रवा निरुद्धा भवंति ततः सा नौर्नयाति प्रापयतीष्टस्थानमानयाति वा स्वेष्टं वस्तु विनाशं च न गच्छति, एवं कषायेषु रुद्धेषु मूलतः सर्वेऽप्यास्रवा निरुद्धा भवंति ततो यद्यपि योगादिद्वारैः सास्रवो जंतुस्तथाऽपि रत्नत्रयं मोक्षपत्तनं नयतीति ॥ ४९ ॥

इन्द्रियसंवरस्वरूमाह;—

**इंदियकसायदोसा णिग्घिप्पंति तवणाणविणएहिं ।**
**रज्जूहि णिघिप्पंति हु उप्पहगामी जहा तुरया ॥ ५० ॥**

**इन्द्रियकषायदोषा निगृह्यंते तपोज्ञानविनयैः ।**
**रज्जुभिः निगृह्यंते खलु उत्पथगामिनो यथा तुरगाः ॥ ५० ॥**

टीका—इन्द्रियाणि कषाया दुर्भावाश्च निगृह्यन्ते निरुध्यन्ते यथासंख्यं तपसा ज्ञानेन विनयेन। इन्द्रियाणि तपसा निगृह्यन्ते, कषाया ज्ञानभावनया वशीक्रियन्ते, दुष्टा विनयक्रियया प्रत्ययमुपनीयन्ते। यथोन्मार्गगामिन उन्मार्गगामिनस्तुरगा अश्वा निगृह्यन्ते वशतामुपनीयन्ते रज्जुभिर्वरत्राभिः खलीनैरिति ॥५०॥

चारित्रसंवरस्य स्वरूपमाह;—

**मणवयणकायगुत्तिंदियस्स समिदीसु अप्पमत्तस्स ।**
**आसवदारणिरोहे णवकम्मरयासवो ण हवे ॥ ५१ ॥**

मनोवचनकायगुप्तेन्द्रियस्य समितिषु अप्रमत्तस्य ।
आस्रवद्वारनिरोधे नवकर्मरजआस्रवो न भवेत् ॥ ५१ ॥

टीका—मनोवचनकायगुप्तेन्द्रियस्य समितिषु चर्याभाषैषणादाननिक्षेपोत्सर्गप्रतिष्ठापनास्वप्रमत्तस्य सम्यक् प्रमादरहितस्य चारित्रेण आस्रवद्वारनिरोधे यद्वारैः कर्मागच्छति तेषां निरोधे सति नवकर्मरजस आस्रवो न भवेत्—अभिनवकर्मागमो न भवेदिति ॥ ५१ ॥

पुनरपि संक्षेपेण आस्रवं संवरं चाह,—

**मिच्छत्ताविरदीहिं य कसायजोगेहिं जं च आसवदि ।**
**दंसणविरमणणिग्गहणिरोधणेहिं तु णासवदि ॥ ५२ ॥**

मिथ्यात्वाविरतिभिः च कषाययोगैः यच्च आस्रवति ।
दर्शनविरमणनिग्रहनिरोधनैस्तु न आस्रवति ॥ ५२ ॥

संवरानुप्रेक्षां संक्षेपयन् तस्याश्च फलं प्रतिपादयन्नाह;—

**संवरफलं तु णिव्वाणमेत्ति संवरसमाधिसंजुत्तो ।**
**णिच्चुज्जुत्तो भावय संवर इणमो विसुद्धप्पा ॥ ५३ ॥**

**संवरफलं तु निर्वाणमिति संवरसमाधिसंयुक्तः ।**
**नित्योद्युक्तो भावय संवरमिमं विशुद्धात्मा ॥ ५३ ॥**

टीका—संवरफलं निर्वाणमिति कृत्वा संवरेण समाधिना चाथवा संवरध्यानेन संयुक्तः सन् नित्योद्युक्तश्च सर्वकालं यत्नपरं भावयेमं संवरं विशुद्धात्मा सर्वद्वन्द्वपरिहीणः—संवरं प्रयत्नेन चिन्तयेति ॥ ५३ ॥

निर्जरास्वरूपं विवृण्वन्नाह;—

**रुद्धासवस्स एवं तवसा जुत्तस्स णिज्जरा होदि ।**
**दुविहा य सा वि भणिया देसादो सव्वदो चेय ॥५४॥**

**रुद्धास्रवस्य एवं तपसा युक्तस्य निर्जरा भवति ।**
**द्विविधा च सापि भणिता देशतः सर्वतश्चैव ॥ ५४ ॥**

टीका—रुद्धास्रवस्य पिहितकर्मागमद्वारस्यैवं तपसा युक्तस्य निर्जरा भवति—कर्मशातनं भवति। साऽपि च निर्जरा द्विविधा भणिता, देशतः सर्वतश्च कर्मैकदेशनिर्जरा सर्वकर्मनिर्जरा चेति ॥ ५४ ॥

देशनिर्जरास्वरूपमाह;—

**संसारे संसरंतस्स खओवसमगदस्स कम्मस्स ।**
**सव्वस्स वि होदि जगे तवसा पुण णिज्जरा विउला ॥५५॥**

**संसारे संसरतः क्षयोपशमगतस्य कर्मणः ।**
**सर्वस्यापि भवति जगति तपसा पुनः निर्जरा विपुला ॥ ५५ ॥**

---

१ 'एककर्मैक' इति प्रेस-पुस्तके पाठः ।

जह धाऊ धम्मंतो सुज्झदि सो अग्गिणा दु संतत्तो ।
तवसा तहा विसुज्झदि जीवो कम्मेहिं कणयं व ॥५६॥

यथा धातुः धम्यमानः शुध्यति सोऽग्निना तु संततः ।
तपसा तथा विशुध्यति जीवः कर्मभ्यः कनक इव ॥ ५६ ॥

णाणवरमारुदजुदो सीलवरसमाधिसंजमुज्जलिदो ।
दहइ तवो भवबीयं तणकट्ठादी जहा अग्गी ॥ ५७ ॥

ज्ञानवरमारुतयुतं शीलवरसमाधिसंयमोज्ज्वलितं ।
दहति तपो भवबीजं तृणकाष्ठादिकं यथा अग्निः ॥ ५७ ॥

पुनरपि;—

**चिरकालमज्जिदं पि य विहुणादि तवसा रयत्ति णाऊण ।**
**दुविहे तवम्मि णिच्चं भावेदव्वो हवदि अप्पा ॥ ५८ ॥**

**चिरकालमर्जितमपि च विधूयते तपसा रज इति ज्ञात्वा ।**
**द्विविधे तपसि नित्यं भावयितव्यो भवति आत्मा ॥ ५८ ॥**

**टीका**—चिरकालं संख्या(म)तीतसमयं कर्मार्जितमपि तपसा विधूयत इति ज्ञात्वा तपसि नित्यं निरन्तरमात्मा भावयितव्यो भवतीति ॥ ५८ ॥

भावितात्मा स नु किं स्यादित्याह;—

**णिज्जरियसव्वकम्मो जादिजरामरणबंधणविमुक्को ।**
**पावदि सुक्खमणंतं णिज्जरणं तं मणसि कुज्जा ॥ ५९ ॥**

**निर्जीर्णसर्वकर्मा जातिजरामरणबंधनविमुक्तः ।**
**प्राप्नोति सुखमनंतं निर्जरणं तन्मनसि कृत्वा ॥ ५९ ॥**

**टीका**—ततो निर्जीर्णः सर्वकर्मनिर्मुक्तो जातिजरामरणबन्धनविमुक्तः प्राप्नोति सौख्यमतुलमनंतं, तन्निर्जरणं मनसि कृत्वा विधायेति ॥ ५९ ॥

निर्जरानुप्रेक्षां व्याख्याय धर्मानुप्रेक्षास्वरूपं विवेचयन्नाह;—

**सव्वजगस्स हिदकरो धम्मो तित्थंकरेहिं अक्खादो ।**
**धण्णा[1] तं पडिवण्णा विसुद्धमणसा जगे मणुया ॥६०॥**

**सर्वजगतो हितकरो धर्मः तीर्थंकरैः आख्यातः ।**
**धन्यास्तं प्रतिपन्ना विशुद्धमनसा जगति मनुजाः ॥ ६० ॥**

**टीका**—सर्वस्य जगतो भव्यलोकस्य हितकरो धर्म उत्तमक्षमादिलक्षणस्तीर्थकरैराख्यातः प्रतिपादितस्तं धर्मं ये प्रतिपन्नास्तं धर्ममधिष्ठिता ये पुरुषा विशुद्धमनसा शुद्धभावेन ते धन्याः पुण्यवंतः कृतार्था जगतीति ॥ ६० ॥

---

१ 'धण्णा तं तु पवण्णा' प्रेस-पुस्तके पाठान्तरं ।

धर्मानुरागे कारणमाह;—

जेणेह पाविदव्वं कल्लाणपरंपरं परमसोक्खं ।
सो जिणदेसिदधम्मं भावेणुववज्जदे पुरिसो ॥ ६१ ॥

येनेह प्राप्तव्यं कल्याणपरंपरा परमसौख्यं ।
स जिनदेशितं धर्मं भावेन उपपद्यते पुरुषः ॥ ६१ ॥

टीका—येनेह—येन जीवेनास्मिंल्लोके कल्याणपरंपरा सौख्यैरनन्तर्यं परमसौख्यं प्राप्तव्यं स जीवो जिनदेशितं तीर्थंकरव्याख्यातं धर्मं भावेनोपपद्यते पुरुषः परमार्थतो धर्मं श्रद्दधाति सेवते—पापक्रियां मनागपि नाचरतीति ॥ ६१ ॥

धर्मस्य निरूपणमाह,—

खंतीमद्दवअज्जवलाघवतवसंजमो आकिंचणदा ।
तह होइ बंभचेरं सच्चं चाओ य दसधम्मा ॥ ६२ ॥

क्षान्तिमार्दवार्जवलाघवतपःसंयमाः अकिंचनता ।
तथा भवति ब्रह्मचर्यं सत्यं त्यागश्च दशधर्माः ॥ ६२ ॥

टीका—क्षान्त्यार्जवमार्दवलाघवतपःसंयमा आकिंचन्यं तथा ब्रह्मचर्यं सत्यं त्यागश्चैवं धर्मो दशविधो भवति ज्ञातव्य इति ॥ ६२ ॥

धर्मभावनाफलमाह;—

उवसम दया य खंती वड्ढइ वेरग्गदा य जह जह से ।
तह तह य मोक्खसोक्खं अक्खीणं भावियं होइ ॥ ६३ ॥

उपशमो दया च क्षांतिः वर्धते वैराग्यता च यथा यथास्य ।

णेन वृद्धिं गच्छान्ति यथा यथास्य जीवस्य तथा तथा तस्य जीवस्य मोक्ष-सौख्यमक्षयं भावितं भवतीति ॥ ६३ ॥

धर्मानुप्रेक्षामुपसंहर्तुकामः प्राह;—

**संसारविसमदुग्गे भवगहणे कह वि मे भमंतेण ।**
**दिट्ठो जिणवरदिट्ठो जेट्ठो धम्मोत्ति चिंतेज्जो ॥ ६४ ॥**

**संसारविषमदुर्गे भवगहने कथमपि मया भ्रमता ।**
**दृष्टो जिनवरदिष्टो ज्येष्ठो धर्म इति चिंतयेत ॥ ६४ ॥**

टीका—संसारविषमदुर्गे भवगहने भवैर्व्याकुले कथमपि भ्रमता पर्यटता मया जिनवरोपदिष्टो ज्येष्ठः प्रधानो धर्मो दृष्ट इत्येवं चिन्तयेदिति ॥ ६४ ॥

बोधिदुर्लभतास्वरूपमाह;—

**संसारह्मि अणंते जीवाणं दुलहं मणुस्सत्तं ।**
**जुगसमिलासंजोगो लवणसमुद्दे जहा चेव ॥ ६५ ॥**

**संसारे अनंते जीवानां दुर्लभं मनुष्यत्वं ।**
**युगसमिलासंयोगो लवणसमुद्रे यथा एव ॥ ६५ ॥**

टीका—संसारेऽनंतेऽत्यन्तदीर्घे जीवानां दुर्लभं मनुष्यत्वं मनुष्यजन्म, यथा लवणसमुद्रे युगसमिलासंयोगः । पूर्वसमुद्रभागे युगं निक्षिप्तं, पश्चिमसमुद्र-भागे समिला निक्षिप्ता, तस्याः समिलाया युगविवरे यथा प्रवेशो दुर्लभस्तथा जीवस्य चतुरशीतियोनिलक्षमध्ये मनुष्यतां दुर्लभमेवेति ॥ ६५ ॥

मनुष्यत्वे लब्धेऽपि यद्दुर्लभं तदाह;—

**देसकुलजम्म रूवं आऊ आरोग्ग वीरियं विणओ ।**
**सवणं गहणं मदि धारणा य एदे वि दुलहा लोए ॥ ६६ ॥**

**देशकुलजन्म रूपं आयुः आरोग्यं वीर्यं विनयः ।**
**श्रवणं ग्रहणं मतिः धारणा च एतेपि दुर्लभा लोके ॥ ६६ ॥**

लद्धेसु वि एदेसु य बोधी जिणसासणम्हि ण हु सुलहा।
कुपहाणमाकुलत्ता जं बलिया रागदोसा य॥ ६७॥

लब्धेष्वपि एतेषु च बोधिः जिनशासने न हि सुलभा।
कुपथानामाकुलत्वात् यत् बलिनौ रागद्वेषौ च॥ ६७॥

सेयं भवभयमहणी बोधी गुणवित्थडा मए लद्धा।
जदि पडिदा ण हु सुलहा तम्हा ण खमो पमादो मे॥ ६८॥

सेयं भवभयमथनी बोधिः गुणविस्तृता मया लब्धा।
यदि पतिता न खलु सुलभा तस्मात् न क्षमः प्रमादो मम॥ ६८॥

**टीका**—सेयं बोधिर्भवभयमथनी संसारभीतिविनाशिनी गुणविस्तरा गुणैर्विस्तीर्णा सर्वगुणाधारा मया लब्धा प्राप्ता, यदि कदाचित्संसारसमुद्रे पतिता प्रभ्रष्टा न खलु नैव स्फुटं पुनः सुलभाऽर्द्धपुद्गलपरावर्त्तनमन्तरेण तस्मान्नैव क्षमो नैव योग्यः प्रमादो मम—बोधिविषये प्रमादकरणं मम नैव युक्तमिति ॥ ६८ ॥

बोधिविषये यः प्रमादं करोति तं कुत्सयन्नाह;—

**दुल्लहलाहं लद्धूण बोधिं जो णरो पमादेज्जो ।**
**सो पुरिसो कापुरिसो सोयदि कुगदिं गदो संतो ॥६९॥**

**दुर्लभलाभां लब्ध्वा बोधिं यो नरः प्रमादयेत् ।**
**स पुरुषः कापुरुषः शोचति कुगतिं गतः सन् ॥ ६९ ॥**

**टीका**—दुर्लभलाभां बोधिं संसारक्षयकरणसमर्थां यो लब्ध्वा प्राप्य प्रमादयेत् प्रमादं कुर्यात्सः पुरुषः कापुरुषः कुत्सितः पुरुषः शोचति दुःखी भवति कुगतिं नरकादिगतिं गतः सन्निति ॥ ६९ ॥

बोधिविकल्पं तत्फलं च प्रतिपादयन्नाह;—

**उवसमखयमिस्सं वा बोधिं लद्धूण भवियपुंडरिओ ।**
**तवसंजमसंजुत्तो अक्खयसोक्खं तदा लहदि ॥ ७० ॥**

**उपशमक्षयमिश्रां वा बोधिं लब्ध्वा भव्यपुंडरीकः ।**
**तपःसंयमसंयुक्तः अक्षयसौख्यं तदा लभते ॥ ७० ॥**

**टीका**—क्षयोपशमविशुद्धिदेशनाप्रायोग्यलब्धीर्लब्ध्वा पश्चादधःप्रवृत्यपूर्वानिवृत्तिकरणान् कृत्वोपशमक्षयोपशमक्षयरूपां बोधिं लभते जीवः । पूर्वसांचितकर्मणोऽनुभागस्पर्द्धकानि यदा विशुद्ध्या प्रतिसमयमनंतगुणहीनानि भूत्वोदीर्यन्ते तदा क्षयोपशमलब्धिर्भवति । प्रतिसमयमनंतगुणहीनक्रमेणोदीरि-

किमर्थं बोधिर्भाव्यत इत्याशंकायामाह;—

**बोधीय जीवदव्वादियाइं बुज्झइ हु णव वि तच्चाइं।**
**गुणसयसहस्सकलियं एवं बोहिं सया झाहि॥ ७२॥**

**बोध्या जीवद्रव्यादीनि बुध्यंते हि नवापि तत्त्वानि।**
**गुणशतसहस्रकलितां एवं बोधिं सदा ध्याय॥ ७२॥**

**टीका**—यतो बोधिमवाप्य जीवाजीवास्रवपुण्यपापबंधसंवरनिर्जरामोक्षाः पदार्था द्रव्याणि अस्तिकायाश्च तत्वानि च बुध्यंते बोध्या वा बुध्यंते ततो गुणशतसहस्रकलितामेवंभूतां बोधिं सदा सर्वकालं ध्याय भावयेति॥ ७२॥

द्वादशानुप्रेक्षामुपसंहर्तुकामः प्राह;—

**दस दो य भावणाओ एवं संखेवदो समुद्दिट्ठा।**
**जिणवयणे दिट्ठाओ बुहजणवेरग्गजणणीओ॥ ७३॥**

**दश द्वे च भावना एवं संक्षेपतः समुद्दिष्टाः।**
**जिनवचने दृष्टा बुधजनवैराग्यजनन्यः॥ ७३॥**

**टीका**—एवं दश द्वे चानुप्रेक्षा भावनाः संक्षेपतः समुपदिष्टाः प्रतिपादिता जिनवचने यतो दृष्टा नान्यत्रानेन प्रामाण्यं ख्यापितं तासां स्यात्, बुधजनानां वैराग्यस्य जनन्यो वैराग्यकारिण्योऽनेन रागाभावश्च ख्यापितः श्रुतस्य भवतीति॥ ७३॥

अनुप्रेक्षाभावने कारणमाह;—

**अणुवेक्खाहिं एवं जो अत्ताणं सदा विभावेदि।**
**सो विगदसव्वकम्मो विमलो विमलालयं लहदि॥ ७४॥**

अनुप्रेक्षाभिः एवं य आत्मानं सदा विभावयति ।
स विगतसर्वकर्मा विमलो विमलालयं लभते ॥ ७४ ॥

टीका—एवमनुप्रेक्षाभिरात्मानं यः सदा भावयेद्योजयेत्सः पुरुषो विगतसर्वकर्मा विमलो भूत्वा विमलालयं मोक्षस्थानं लभते प्राप्नोतीति ॥ ७४ ॥

द्वादशानुप्रेक्षावसाने कृतकृत्य आचार्यः परिणामशुद्धिमभिदधन्मंगलं फलं च याचमान आह;—

झाणेहिं खवियकम्मा मोक्खग्गलमोडया विगयमोहा ।
ते मे तमरयमहणा तारंतु भवाहि लहुमेव ॥ ७५ ॥

ध्यानैः क्षपितकर्माणः मोक्षार्गलभेदका विगतमोहाः ।
तेऽस्मान् तमोरजोमथनाः तारयंतु भवात् लघु एव ॥ ७५ ॥

टीका—ये इमा अनुप्रेक्षा भावयित्वा सिद्धिं गतास्ते ध्यानैः क्षपितकर्माणो मोक्षार्गलच्छेदका विगतचारित्रमोहास्तमोरजोमथना मिथ्यात्वमोहनीयज्ञानावरणादिविनाशकास्तारयंतु भवात्संसारगर्तात् शीघ्रमेवास्मानिति ॥ ७५ ॥

पुनरप्यनुप्रेक्षां याचमानः प्राह;—

जह मज्झ तह्मि काले विमला अणुपेहणा भवेजण्हू ।
तह सव्वलोगणाहा विमलगदिगदा पसीदंतु ॥ ७६ ॥

यथा मम तस्मिन् काले विमला अनुप्रेक्षा भवेयुः ।
तथा सर्वलोकनाथा विमलगतिगताः प्रसीदंतु ॥ ७६ ॥

टीका—यथा येन प्रकारेण मम तस्मिन्मरणकाले विमला अनुप्रेक्षा द्वादश-

प्रकारा भवेयुस्तथा ते सर्वलोकनाथा विमलगतिं गताः प्रसीदंतु प्रसन्ना भवंतु द्वादशानुप्रेक्षाभावनां मम दिशंत्विति ॥ ७६ ॥

इति[1] श्रीमद्वट्टकेराचार्यवर्यविनिर्मितमूलाचारे वसुनंद्याचार्यप्रणीतटीकासहिते द्वादशानुप्रेक्षकनामाऽष्टमः परिच्छेदः समाप्तः ।*

---

१ प्रथम-द्वितीयफार्ममुद्रणानन्तरमेकं मूलपुस्तकं सम्प्राप्तं, अतोऽत्र फार्मद्वये या अशुद्धयः संजातास्ता अत्र विलिख्यंते । अध्यायप्रारंभेऽधोलिखितः श्लोकः पाठश्च विद्यते—

अनन्तपदलाभाय यत्पदद्वन्द्वाचिन्तनम् ।
जगदर्हः स वः पायाद्देवस्त्यागदिगम्बरः ॥ १ ॥

द्वादशानुप्रेक्षाधिकारमष्टमं प्रपंचयन् तावदादौ नमस्कारपूर्वकं प्रतिज्ञावाक्यमाह—।

प्रथमपृष्ठे यः पाठोऽस्माभिः स्वबुद्ध्या संयोजितः स एव मूलपुस्तके वर्तते न तु टिप्पणस्थः ।

द्वितीयपृष्ठे 'चाशनादीनां ग्रहणात्' अस्य स्थाने 'वेत्रासनादीनां ग्रहणात्' इति पाठः ।

एकादश त्रयोदशपृष्ठेऽपि अस्माभिः संयोजितपाठ एव न तु टिप्पणस्थः ।

अष्टादशपृष्ठे तु 'जहासि' स्थाने 'त्यजसि' इति पाठः ।

चतुर्विंशतितमे पृष्ठे अस्माभिः स्वबुद्ध्या यः पाठः कल्पितः स एव मूलपुस्तके न तु टिप्पणगतः ।

पंचविंशतितमे पृष्ठे तु 'सर्वतश्च' स्थाने 'सर्वतश्चैव' पाठः अन्यश्चास्माभिः योजितः न तु टिप्पणविहितः

* ग्रन्थावसानेऽस्य स्थानेऽयं पाठः—

इत्याचारवृत्तौ वसुनन्दिकृतावतारायामष्टमः प्रस्तावः समाप्तः ।

—संशोधकः ।

## अनगारभावनाधिकारः ।



अनगारभावनाख्यं नवममधिकारं व्याख्यातुकामस्तावदादौ शुभपरिणामनिमित्तं मंगलमाह,—

**वंदित्तु जिणवराणं तिहुयणजयमंगलोववेदाणं ।**
**कंचणपियंगुविद्दुमघणकुंदमुणालवण्णाणं ॥ १ ॥**

वंदित्वा जिनवरान् त्रिभुवनजयमंगलोपेतान् ।
कांचनप्रियंगुविद्रुमघनकुंदमृणालवर्णान् ॥ १ ॥

टीका—जिनवरान् वंदित्वा, किंविशिष्टान्? त्रिभुवने या जयश्रीस्तेन मंगलं सर्वसंदोहनसमर्थं पुण्यं ताभ्यामुपेतास्तत्र स्थितास्त्रिभुवनजयमंगलोपेतान्, सकलश्रिया युतान् सर्वकल्याणभाजनांश्च । पुनरपि किंविशिष्टान्? कांचनं सर्वोत्कृष्टं सुवर्णं, प्रियंगुः शिरीषपुष्पसदृशकान्तिः, विद्रुमः प्रवालद्रव्यं सुरमणीयरक्तभावद्रव्यं, घनः गुरुः सघनजलधरः, कुन्दः स्वर्णाग्रपुष्पविशेषः, मृणालं सम्यक्कोमलनालं, एतेषां वर्णा इव वर्णो येषां ते कांचनप्रियंगुप्रवालघनकुन्दमृणालवर्णास्तान् कांचनप्रियंगुप्रवालघनकुन्दमृणालवर्णान् । अनेनाभ्यन्तरानाम वर्णविशेषणमुक्तं, नामस्थापनाद्रव्यजिनपरिहाराय भावजिनोपादानाय चात्र विशेषणेन । उत्तरसूत्रे वक्ष्यामीति क्रिया तिष्ठति तया सह संबंधः । क्रियाकारकं नमस्कारकरणं निर्विघ्नेन शास्त्रपरिसमाप्तिनिमित्तं चेति ॥ १ ॥

अनगारभावनासूत्रार्थं प्रतिज्ञामाह,—

**अणयारमहरिसीणं णाइंदणरिंददेवमहिदाणं ।**
**वोच्छामि विविहसारं भावणसुत्तं गुणमहंतं ॥ २ ॥**

**अनगारमहर्षीणां नागेंद्रनरेंद्रेंद्रमहितानां ।**
**वक्ष्यामि विविधसारं भावनासूत्रं गुणमहत् ॥ २ ॥**

**टीका**—न विद्यतेऽगारं गृहं स्त्र्यादिकं येषां तेऽनगारास्तेषामनगाराणां महान्तश्च ते ऋषयश्च महर्षयः सम्यगृद्धिप्राप्तास्तेषां महर्षीणां, नागेन्द्रनरेन्द्रेन्द्र-महितानां श्रीपार्श्वनाथसंजयंताद्युपसर्गनिवारणेन प्राधान्यान्नागेन्द्रस्य पूर्वनि-पातोऽथवा बहूनां नियमो नास्ति, मोक्षार्हत्वात्तदन्तरं नरेन्द्रस्य ग्रहणं, पश्चाद्-व्यन्तरादीनां ग्रहणमेतैर्ये पूजितास्तेषामनगाराणां भावनानिमित्तं विविधसारं सर्वशास्त्रसारभूतं सूत्रं गुणैर्महद्वक्ष्यामि, अर्हतः प्रणम्यानगारसूत्रं वक्ष्यामीति संबन्धः ॥ २ ॥

स्वकृतप्रतिज्ञानिर्वहणाय दश संग्रहसूत्राण्याह;—

**लिंगं वदं च सुद्धी वसदिविहारं च भिक्ख णाणं च ।**
**उज्झणसुद्धी य पुणो वक्कं च तवं तधा झाणं ॥ ३ ॥**

**लिंगस्य व्रतस्य च शुद्धिः वसतिविहारश्च भिक्षा ज्ञानं च ।**
**उज्झनशुद्धिः च पुनः वाक्यं च तपः तथा ध्यानं ॥ ३ ॥**

**टीका**—* लिंगं निर्ग्रन्थरूपता शरीरस्य सर्वसंस्काराभावोऽचेलकत्वलोंच-प्रतिलेखनग्रहणदर्शनज्ञानचरित्रतपोभावश्च, व्रतान्यहिंसादीनि * । शुद्धिशब्दः प्रत्येकमभिसंबध्यते, लिंगस्य शुद्धिर्लिंगशुद्धिर्लिंगानुरूपाचरणं । व्रतानां शुद्धि-र्व्रतशुद्धिर्निरतीचारता । अत्र प्राकृतलक्षणेन षष्ठ्यर्थे प्रथमानिर्देशः कृतः । वसतिः स्त्रीपशुपांडकाभावोपलक्षितप्रदेशः परमवैराग्यकारणस्थानं । विहारो नियतवासो दर्शनादिनिर्मलीकरणनिमित्तं सर्वदेशविहरणं । भिक्षा चतुर्विधाहारः । ज्ञानं यथावास्थितवस्त्ववगमो मत्यादिकं । उज्झनं परित्यागः शरीराद्यममत्वं । शुद्धिशब्दः प्रत्येकमभिसंबध्यते । वसतिशुद्धिर्विहारशुद्धिर्भिक्षाशुद्धिर्ज्ञानशुद्धि-

---

* पुष्पमध्यगतः पाठः प्रेस-पुस्तके नास्ति ।

उज्झनशुद्धिः। अत्रापि प्राकृतलक्षणे षष्ठ्यर्थे प्रथमा। पुनरपि च वाक्यं स्त्रीकथादिविरतिवचनं। तपः पूर्वसंचितकर्ममलशोधनसमर्थानुष्ठानं। तथा ध्यानं शोभनविधानेनैकाग्रचिन्तानिरोधनं। अत्रापि शुद्धिर्द्रष्टव्या चशब्दात्सर्वेऽपि स्वगतसंभेदसंग्रहणार्थो द्रष्टव्या इति ॥ ३ ॥

एतेषां सूत्राणां पाठे प्रयोजनमाह,—

**एदमणयारसुत्तं दसविधपद विणयअत्थसंजुत्तं।**
**जो पढइ भत्तिजुत्तो तस्स पणस्संति पावाइं ॥ ४ ॥**

**एतानि अनगारसूत्राणि दशविधपदानि विनयार्थसंयुक्तानि।**
**यः पठति भक्तियुक्तः तस्य प्रणश्यंति पापानि ॥ ४ ॥**

**टीका**—एतान्यनगारसूत्राणि दशविधपदानि दशप्रकाराधिकारनिबद्धानि नवैकादशसंख्यानि न भवंति, विनयार्थसंयुक्तानि विनयप्रतिपादकानि सूक्ष्मार्थसंयुक्तानि च यः पठति भक्तियुक्तस्तस्य प्रणश्यन्ति पापानि दुरितानीति ॥ ४ ॥

पुनरपि सूत्राणां स्तवनमाह;—

**णिस्संसदंसिदमिणं सुत्तं धीरजणबहुमदमुदारं।**
**अणगारभावणमिणं सुसमणपरिकित्तणं सुणह ॥ ५ ॥**

**निःशंसदर्शकानीमानि सूत्राणि धीरजनबहुमतान्युदाराणि।**
**अनगारभावनानीमानि सुश्रमणपरिकीर्तनानि शृणुत ॥ ५ ॥**

न केवलमेतानि वक्ष्ये महर्षीणां गुणांश्च वक्ष्यामीत्याह;—

**णिग्गंथमहरिसीणं अणयारचरित्तजुत्तिगुत्ताणं ।**
**णिच्छिदमहातवाणं वोच्छामि गुणे गुणधराणं ॥ ६ ॥**

**निर्ग्रंथमहर्षीणां अनगारचरित्रयुक्तिगुप्तानाम् ।**
**निश्चितमहातपसां वक्ष्यामि गुणान् गुणधराणाम् ॥ ६ ॥**

**टीका**—निर्ग्रन्थमहर्षीणां सर्वग्रन्थविमुक्तयतीनां, अनगारचरित्रयुक्तिगुप्तानां अनगाराणां योऽयं चारित्रयोगस्तेन गुप्तानां संवृतानां, निश्चिन्तमहातपसां द्वादशविधतपस्युद्युक्तानां गुणधराणां गुणान् वक्ष्यामीति ॥ ६ ॥

तावल्लिंगशुद्धिं विवेचयन्नाह;—

**चलचवलजीविदमिणं णाऊण माणुसत्तणमसारं ।**
**णिव्विण्णकामभोगा धम्मम्मि उवट्ठिदमदीया ॥ ७ ॥**

**चलचपलजीवितमिदं ज्ञात्वा मनुष्यत्वमसारं ।**
**निर्विण्णकामभोगा धर्मे उपस्थितमतयः ॥ ७ ॥**

**टीका**—चलमस्थिरं प्रतिसमयं विनश्वरं, चपलं सोपघातं विद्युत्स्फुरणमिवाविदितस्वरूपं[1], जीवितं प्राणधारणं चलचपलजीवितं आवीचीतद्भवस्वरूपेणायुःक्षयरूपमिदं[2] ज्ञात्वा, मनुष्यत्वं मनुष्यजन्मस्वरूपं, असारं परमार्थरहितं[3], निर्विण्णकामभोगाः स्वेष्टवस्तुसमीहा काम उपभोगः स्त्र्यादिकः भोगः सकृत्सेवितस्य पुनरसेवनं[4] तांबूलकुंकुमादि तद्विषयो निर्वेदोऽनभिलाषो येषां ते निर्विण्णकामभोगाः, धर्मे चारित्रे नैर्ग्रन्थ्यादिरूप उपस्थितम-

---

१ 'विद्युत्स्फुरणवदेव विदितस्वरूपं प्रतिपादनमेतदिति' इति प्रेस-पुस्तके पाठः । २ आवीचीशब्दः प्रेस-पुस्तके नास्ति । ३ 'नासारं परमार्थरूपं ज्ञात्वा' इति प्रेस-पुस्तके । ४ 'पुनरपि सेवनं' इति प्रेस-पुस्तके ।

तिका गृहीतास्तेन तत्स्वरूपा इत्यर्थः, तात्पर्येण नैर्ग्रन्थ्यस्वरूपप्रतिपादनमेतदिति ॥ ७ ॥

पुनरपि तत्स्वरूपमाह;—

**णिम्मालियसुमिणाविय धणकणयसमिद्धबंधवजणं च।**
**पयहंति वीरपुरिसा विरत्तकामा गिहावासे ॥ ८ ॥**

**निर्माल्यसुमनस इव धनकनकसमृद्धबांधवजनं च।**
**प्रजहंति वीरपुरुषाः विरक्तकामा गृहवासे ॥ ८ ॥**

टीका—निर्माल्यसुमनस इवोपभोगितपुष्पनिचयमिव धनं गोऽश्वमहिष्यादिकं, कनकं सुवर्णादिकं ताभ्यां समृद्धमाढ्यं धनकनकसमृद्धं बांधवजनं स्वजनपरिजनादिकं परित्यजन्ति गृहवासविषये विरक्तचित्ताः सन्तः। यथा शरीरसंस्पृष्टं पुष्पादिकमकिंचित्करं त्यज्यते तथा धनादिसमृद्धमपि बंधुजनं धनादिकं चाथवा गृहवासं चेति संबंधः परित्यजन्तीति ॥ ८ ॥

एवं नैर्ग्रन्थ्यं गृहीत्वा तद्विषयां शुद्धिमाह;—

**जम्मणमरणुव्विग्गा भीदा संसारवासमसुमस्स।**
**रोचंति जिणवरमदं पावयणं वड्ढमाणस्स ॥ ९ ॥**

**जन्ममरणोद्विग्ना भीताः संसारवासे अशुभात्।**
**रोचंते जिनवरमतं प्रवचनं वर्धमानस्य ॥ ९ ॥**

तथा;—

**पवरवरधम्मतित्थं जिणवरवसहस्स वड्ढमाणस्स ।**
**तिविहेण सद्दहंते य णत्थि इदो उत्तरं अण्णं ॥ १० ॥**

**प्रवरवरधर्मतीर्थं जिनवरवृषभस्य वर्धमानस्य ।**
**त्रिविधेन श्रद्दधाति च नास्ति इत उत्तरमन्यत् ॥ १० ॥**

**टीका**—प्रवराणां वरं प्रवरवरं श्रेष्ठादपि श्रेष्ठं धर्मतीर्थं जिनवरवृषभस्य वर्द्धमानस्य चतुर्विंशतितीर्थंकरस्य त्रिप्रकारेण मनोवचनकायशुद्ध्या श्रद्दधाति भावयन्ति । इत ऊर्ध्वं नास्त्यन्यादिति[1] कृत्वास्माद्वर्द्धमानतीर्थंकरतीर्थादन्यत्तीर्थं नास्ति यतोऽनया लिंगशुद्ध्या सम्यग्दर्शनशुद्धिर्ज्ञानशुद्धिश्च व्याख्यातेति ॥ १० ॥

तपःशुद्धिस्वरूपं निरूपयन्नाह;—

**उच्छाहणिच्छिदमदी ववसिदववसायबद्धकच्छा य ।**
**भावाणुरायरत्ता जिणपण्णत्तम्मि धम्मम्मि ॥ ११ ॥**

**उत्साहनिश्चितमतयो व्यवसितव्यवसायबद्धकक्षाश्च ।**
**भावानुरागरक्ता जिनप्रज्ञप्ते धर्मे ॥ ११ ॥**

**टीका**—उत्साह उद्योगो द्वादशविधे तपसि तन्निष्ठता तस्मिन्नितान्तं निश्चितमतयस्तत्र कृतादराः[2], व्यवसितव्यवसायाः कृतपुरुषकाराः, बद्धकक्षाः सुसंयमितात्मानः कर्मनिर्मूलनसंस्थापितचेतोवृत्तयः[3], भावानुरागरक्ताः परमार्थभूतो योऽयमनुरागोऽर्हद्भक्तिस्तेन रक्ता भाविताः, अथवा भावविषयः पदार्थविषयोऽनुरागो दर्शनं ज्ञानं च ताभ्यां रक्ताः सम्यगेकीभूताः, जिनप्रज्ञप्ते धर्मे भावानुरक्तास्तास्मिन् बद्धकक्षाश्चेति ॥ ११ ॥

---

१ इति उत्तरमूर्ध्वं प्रेस-पुस्तके । २ कृतावतारा: ख-पुस्तके । ३ चित्तवृत्तयः ख-पुस्तके ।

लिंगशुद्धिस्वरूपमाह;—

धम्ममणुत्तरमिमं कम्ममलपडलपाडयं जिणक्खादं ।
संवेगजायसड्ढा गिण्हंति महव्वदा पंच ॥ १२ ॥

धर्ममनुत्तरमिमं कर्ममलपटलपाटकं जिनाख्यातं ।
संवेगजातश्रद्धा गृह्णंति महाव्रतानि पंच ॥ १२ ॥

टीका—धर्ममुत्तमक्षमादिलक्षणमनुत्तमाद्वितीयमिमं कर्ममलपटलपाटन-समर्थं जिनाख्यातं गृह्णन्ति महाव्रतानि च संवेगजातहर्षाः, अथवा धर्मार्थं कृत्वा गृह्णन्ति महाव्रतानि पंच। अनेन तात्पर्येण लिंगशुद्धिर्व्याख्याता वेदितव्या ॥ १२ ॥

कानि तानि महाव्रतानीत्याशंकायां व्रतशुद्धिं च निरूपयंस्तावत्तान्याह;—

सच्चवयणं अहिंसा अदत्तपरिवज्जणं च रोचंति ।
तह बंभचेरगुत्ती परिग्गहादो विमुत्तिं च ॥ १३ ॥

सत्यवचनं अहिंसां अदत्तपरिवर्जनं च रोचंते ।
तथा ब्रह्मचर्यगुप्तिं परिग्रहात विमुक्तिं च ॥ १३ ॥

टीका—सत्यवचनं हिंसाविरतिं अदत्तपरिवर्जनं रोचन्ते सम्यगभ्युपग-च्छन्ति तथा ब्रह्मचर्यगुप्तिं समिच्छन्ति परिग्रहाद्विमुक्तिं च लिंगग्रहणानन्तरं प्रपद्यन्ते ॥ १३ ॥

यद्यपि व्यतिरेकमुखेनागतः प्राणिवधादिपरित्यागस्तथापि पर्यायार्थिकशि-ष्यसंबोधनायान्वयमाह,—

पाणिवह मुसावादं अदत्त मेहुण परिग्गहं चेव ।
तिविहेण पडिक्कंते जावज्जीवं दिढधिदीया ॥ १४ ॥

प्राणिवधं मृषावादं अदत्तं मैथुनं परिग्रहं चैव ।
त्रिविधेन प्रतिक्रामंति यावज्जीवं दृढधृतयः ॥ १४ ॥

टीका—दृढधृतयः प्रतिक्रामन्ति पृथगभिसंबन्धः, प्राणिवधं परिहा-

मान्ति परिहरन्तीत्यर्थः, तथा मृषावादं, अदत्तग्रहणं, मैथुनप्रसंगं, परिग्रहं च त्यजन्ति मनोवचनकायैर्यावज्जीवं मरणान्तं दृढधृतयो मुनयः—स्थिरमतियुक्ताः साधवः प्राणिवधादिकं सर्वकालं परिहरन्तीति ॥ १४ ॥

व्रतविषयां शुद्धिमाह;—

**ते सव्वगंथमुक्का अममा अपरिग्गहा जहाजादा।**
**वोसट्टचत्तदेहा जिणवरधम्मं समं णेंति ॥ १५ ॥**

**ते सर्वग्रंथमुक्ता अममा अपरिग्रहा यथाजाताः।**
**व्युत्सृष्टत्यक्तदेहा जिनवरधर्मं समं नयंति ॥ १५ ॥**

**टीका**—ते मुनयः सर्वग्रन्थमुक्ता मिथ्यात्ववेदकषायरागहास्यरत्यरतिशोक-भयजुगुप्सा इत्येतैश्चतुर्दशाभ्यन्तरग्रंथैर्मुक्ताः, अममाः स्नेहपाशान्निर्गताः, अपरिग्रहाः क्षेत्रादिदशविधपरिग्रहान्निर्गताः, यथाजाता नाग्न्यगुप्तिं गताः, व्युत्सृष्टत्यक्त-देहा मर्दनाभ्यंगोद्वर्तनस्नानादिदेहसंस्काररहिता एवंभूता जिनवरधर्मं चारित्रं युगपन्नयंति भवान्तरं प्रापयन्तीति ॥ १५ ॥

कथं ते सर्वग्रंथमुक्ता इत्याशंकायामाह;—

**सव्वारंभणियत्ता जुत्ता जिणदेसिदम्मि धम्मम्मि।**
**ण य इच्छंति ममत्तिं परिग्गहे वालमित्तम्मि ॥ १६ ॥**

**सर्वारंभनिवृत्ता युक्ता जिनदेशिते धर्मे।**
**न च इच्छंति ममत्वं परिग्रहे वालमात्रे ॥ १६ ॥**

**टीका**—यतस्ते मुनयः सर्वारंभेभ्योऽसिमषिकृषिवाणिज्यादिव्यापारेभ्यो निवृत्ता जिनदेशिते धर्मे चोद्युक्ता यतः श्रामण्यायोग्यबालमात्रपरिग्रहविषये ममत्वं नेच्छन्ति यतस्ते सर्वग्रन्थविमुक्ता इति ॥ १६ ॥

---

१ वालमात्रमपि प्रेस–पुस्तके।

कथं त्वममा इत्याशंकायामाह.—

अपरिग्गहा अणिच्छा संतुट्ठा सुट्ठिदा चरित्तम्मि ।
अवि णीए वि सरीरे ण करंति मुणी ममत्तिं ते ॥१७॥

अपरिग्रहा अनिच्छाः संतुष्टाः सुस्थिताः चारित्रे ।
अपि निजेऽपि शरीरे न कुर्वंति मुनयः ममत्वं ते ॥ १७ ॥

टीका—यस्मादपरिग्रहा निराश्रया अनिच्छाः सर्वाशाविप्रमुक्ताः संतुष्टाः संतोषपरायणाश्चारित्रे सुस्थिताश्चारित्रानुष्ठानपराः, अपि च निजेऽपि शरीरे आत्मीयशरीरेऽपि ममत्वं न कुर्वन्ति मुनयः, अथवाऽपिनीते शरीरे ममत्वं न कुर्वन्ति ततस्ते निर्ममा इति ॥ १७ ॥

अथ कथं ते निष्परिग्रहाः कथं वा यथाजाता इत्याशंकायामाह;—

ते णिम्ममा सरीरे जत्थत्थमिदा वसंति अणिएदा ।
सवणा अप्पडिबद्धा विज्जू जह दिट्ठणट्ठा वा ॥ १८ ॥

ते निर्ममाः शरीरे यत्र अस्तमिता वसंति अनिकेताः ।
श्रमणा अप्रतिबद्धा विद्युद्यथा दृष्टनष्टा वा ॥ १८ ॥

टीका—यतस्ते शरीरेऽपि निर्ममा निर्मोहाः, यत्रास्तमितो रविर्यस्मिन् प्रदेशे रविरस्तं गतस्तस्मिन्नेव वसंति तिष्ठंति, अनिकेता न किंचिदपेक्षन्ते, श्रमणा यतयः, अप्रतिबद्धाः स्वतंत्राः, विद्युद्यथा दृष्टनष्टा ततोऽपरिग्रहा यथाजाताश्चेति ॥ १८ ॥

वसतिशुद्धिं निरूपयन्नाह.—

गामेयरादिवासी णयरे पंचाहवासिणो धीरा ।
सवणा फासुविहारी विवित्तएगंतवासी य ॥ १९ ॥

ग्रामे एकरात्रिवासिनः नगरे पंचाहवासिनो धीराः ।
श्रमणाः प्रासुकविहारिणो विविक्तैकांतवासिनश्च ॥ १९ ॥

**टीका**—वृत्त्यावृतो ग्रामस्तस्मिन्नेकरात्रं वसन्ति तत्रैकयैव रात्र्या सर्वसंवेदनात्, चतुर्गोपुरोपलक्षितं नगरं तत्र पंचदिवसं[1] वसन्ति पंच दिनानि नयन्ति यतः पंचदिवसैः सर्वतीर्थादियात्रायाः सिद्धिरुत्तरत्र ममत्वदर्शनात्, धीरा धैर्योपेताः, श्रमणाः, प्रासुकविहारिणः सावद्यपरिहरणशीलाः, विविक्ते स्त्रीपशुपांडक[2]वर्जिते देश एकान्ते प्रच्छन्ने वसंतीत्येवं शीला विविक्तैकांतवासिनः, यतो विविक्तैकांतवासिनो यतश्च निरवद्याचरणशीला यतो ग्राम एकरात्रिवासिनो नगरे पंचाहर्वासिनश्चोत्तरत्रौद्देशिकादिदर्शनान्मोहादिदर्शनाच्च न वसंतीति ॥ १९ ॥

एकान्तं मृगयतामेतेषां कथं सुखमित्याशंकायामाह;—

**एगंतं मग्गंता सुसमणा वरगंधहत्थिणो धीरा ।**
**सुक्कज्झाणरदीया मुत्तिसुहं उत्तमं पत्ता ॥ २० ॥**

**एकांतं मृगयमाणाः सुश्रमणा वरगंधहस्तिनः धीराः ।**
**शुक्लध्यानरतयः मुक्तिसुखमुत्तमं प्राप्ताः ॥ २० ॥**

**टीका**—एकांतमेकत्वं विविक्तं मृगयमाणा अन्वेषयंतः सुश्रमणा वरगंधहस्तिन इव धीराः शुक्लध्यानरतय उत्तमं मुक्तिसुखं प्राप्ताः । यथा गंधहस्तिन एकांतमभ्युपगच्छंतः सुखं प्राप्नुवंति तथा श्रमणा एकांतं मृगयमाणा अपि सुखं प्राप्ता यतः शुक्लध्यानरतय इति ॥ २० ॥

कथं ते धीरा इत्याशंकायामाह;—

**एयाइणो अविहला वसंति गिरिकंदरेसु सप्पुरिसा ।**
**धीरा अदीणमणसा रममाणा वीरवयणम्मि ॥ २१ ॥**

**एकाकिनः अविकला वसंति गिरिकंदरेषु सत्पुरुषाः ।**
**धीरा अदीनमनसो रममाणा वीरवचने ॥ २१ ॥**

---

१ दिवसान् ख–पुस्तके । २ पांडकशब्दो नपुंसकार्थे ज्ञायते ।

टीका—एकाकिनोऽसहायाः, अविकला अविह्वला धृतिसंतोषसत्त्वोत्साहादिसंपन्ना वसंति संतिष्ठंते गिरिकंदरासु पर्वतजलोद्दारितप्रदेशेषु, सत्पुरुषाः प्रधानपुरुषाः, धीराः, अदीनमनसो दैन्यवृत्तिरहिताः, रममाणा क्रीडंतो रतिं कुर्वतो वीरवचनं । सत एकाकिनोऽपि वैक्लव्यरहिता अदीनभावा वीरवचने भेदभावने रतिं कुर्वाणा गिरिकंदरासु यतो वसंति धीराः सत्पुरुषाश्चेति ॥ २१ ॥

अतश्च ते धीरा,—

**वसधिसु अप्पडिवद्धा ण ते ममत्तिं करेंति वसधीसु ।**
**सुण्णागारमसाणे वसंति ते वीरवसदीसु ॥ २२ ॥**

वसतिषु अप्रतिबद्धा न ते ममत्वं कुर्वंति वसतिषु ।
शून्यागारश्मशानेषु वसंति ते वीरवसतिषु ॥ २२ ॥

टीका—वसतिष्वप्रतिबद्धाः स मदीय आश्रयस्तत्र वयं वसाम इत्येवमभिप्रायरहिताः, ममत्वं न कुर्वंति वसतिषु निवासनिमित्तमात्मसंस्कारेण साधवः, शून्यगृहेषु श्मशानेषु प्रेतवनेषु वसन्ति ते वीरवसतिषु यतो वीराधिष्ठितेषु स्थानेषु महाभयंकरेषु संस्कृतवसतिविरहे मुक्तसंगा असंगा वसन्त्यतस्तेभ्यः केऽन्ये शूरा इति ॥ २२ ॥

पुनरपि मनुष्यासंगतायाः,—

**पब्भारकंदरेसु अ कापुरिसभयंकरेसु सप्पुरिसा ।**
**वसधीं अभिरोचंति य सावदबहुघोरगंभीरा ॥ २३ ॥**

प्राग्भारकंदरेषु च कापुरुषभयंकरेषु सत्पुरुषाः ।
वसतिमभिरोचंते श्वापदबहुघोरगंभीराः ॥ २३ ॥

सत्पुरुषेभ्यः अवस्थानमभिवांछंति सत्पुरुषाः सत्वाधिकाः श्वापदबहुघोरगंभीरा वसतय इत्यभिसंबंधः सिंहव्याघ्रसर्पनकुलादिबाहुल्येन रौद्रगहनस्थानेष्वावासमभिवांछंतीति ॥ २३ ॥

तथा;—

**एयंतम्मि वसंता वयवग्घतरच्छअच्छभल्लाणं।**
**आगुंजियमारसियं सुणंति सद्दं गिरिगुहासु ॥ २४ ॥**

**एकांते वसंतो वृकव्याघ्रतरक्षुऋक्षभल्लानां।**
**आगुंजितमारसितं शृण्वंति शब्दं गिरिगुहासु ॥ २४ ॥**

**टीका**—एकान्ते गिरिगुहासु वसंतः संतिष्ठमाना वृकव्याघ्रतरक्षुऋक्षभल्लादीनामागुंजितमारसितं शब्दं शृण्वंति तथाऽपि सत्वान्न विचलंतीति ॥ २४ ॥

तथा;—

**रत्तिंचरसउणाणं णाणारुदरासिदभीदसद्दालं।**
**उण्णावेंति वणंतं जत्थ वसंता समणसीहा ॥ २५ ॥**

**रात्रिंचरशकुनानां नानारुतरासितभीतशब्दालं।**
**उन्नादयंति वनांतं यत्र वसंति श्रमणसिंहाः ॥ २५ ॥**

**टीका**—रात्रौ चरन्तीति रात्रिंचरा उलूकादयस्तेषां शकुनीनां नानारुतानि नानाभीतिशब्दांश्च *अलमत्यर्थं उण्णावेंति *उन्नादियंति प्रतिशब्दयन्ति वनातं वनमध्यं, उद्गतशब्दं सर्वमपि वनं गह्वराटवीं कुर्वन्ति यत्र वसन्ति श्रमणसिंहा इति ॥ २५ ॥

तथा;—

**सीहा इव णरसीहा पव्वयतडकडयकंदरगुहासु।**
**जिणवयणमणुमणंता अणुविग्गमणा परिवसंति ॥२६॥**

* पुष्पमध्यगतः पाठः प्रेस-पुस्तके नास्ति।

सिंहा इव नरसिंहाः पर्वततटकटककंदरगुहासु ।
जिनवचनमनुमन्यंतो अनुद्विग्नमनसः परिवसंति ॥ २६ ॥

टीका—सिंहा इव सिंहसदृशा नरसिंहा नरप्रधानाः पर्वततटकटकैः "पर्वतस्याधोभागस्य सामीप्यं तटं ऊर्ध्वभागस्य सामीप्यं कटकं" पर्वततटकटककन्दरगुहासु जिनवचनमनुगणयन्तो जिनागमं तत्त्वेन श्रद्दधाना अनुद्विग्नमनस उत्कंठितमानसाः परि—समन्ताद्वसंतीति ॥ २६ ॥

तथा;—

**सावदसयाणुचरिये परिभयभीमंधयारगंभीरे ।**
**धम्माणुरायरत्ता वसंति रत्तिं गिरिगुहासु ॥ २७ ॥**

श्वापदशतानुचरिते परिभयभीमे अंधकारगंभीरे ।
धर्मानुरागरक्ता वसंति रात्रौ गिरिगुहासु ॥ २७ ॥

टीका—श्वापदशतानुचरिते सिंहव्याघ्रादिभिः सर्वकाले परिसेविते परिभयभीमे समंताद्भयानके अन्धकारे आदित्यकिरणानामपि दुष्प्रवेशे गंभीरे गुप्त गहने वने इति संबंधः । धर्मानुरागरक्ता अविरतानुष्ठानपरा रात्रौ वसंति गिरिगुहास्विति ॥ २७ ॥

तस्मिन्नेव वने रात्रौ केन विधानेन वसंतीत्याशंकायामाह;—

**सज्झायझाणजुत्ता रत्तिं ण सुवंति ते पयामं तु ।**
**सुत्तत्थं चिंतंता णिद्दाय वसं ण गच्छंति ॥ २८ ॥**

स्वाध्यायध्यानयुक्ता रात्रौ न स्वपंति ते प्रयामं तु ।
सूत्रार्थं चिंतयंतः निद्राया वशं न गच्छंति ॥ २८ ॥

टीका—स्वाध्यायध्यानयुक्ताः श्रुतभावनायां युक्ता एकाग्रचिन्तानिरोधे ध्याने च संलग्नमनसः रात्रौ न स्वपंति ते मुनयः, प्रयामं प्रकर्षं [illegible]

च वर्जयन्तीत्यर्थः, सूत्रार्थं च सूत्रमर्थं तदुभयं च चिंतयंतो भावयंतो निद्रावशं न गच्छंति—न निद्रा-राक्षस्याः पीड्यंत इति ॥ २८ ॥

तत्रासनविधानं च प्रतिपादयन्नाह;—

**पलियंकणिसिज्जगदा वीरासणएयपाससाईया ।**
**ठाणुक्कडेहिं मुणिणो खवंति रत्तिं गिरिगुहासु ॥ २९ ॥**

**पर्यंकनिषद्यागता वीरासनैकपार्श्वशायिनः ।**
**स्थानोत्कुटिकाभ्यां मुनयः क्षपयंति रात्रिं गिरिगुहासु ॥ २९ ॥**

**टीका**—गतशब्दः प्रत्येकमभिसंबध्यते, पर्यंकं गताः पर्यङ्केण स्थिताः, निषद्यां गताः सामान्येनोपविष्टाः, वीरासनं च गता वीराणामासनेन स्थितास्तथैकपार्श्वशायिनस्तथा स्थानेन कायोत्सर्गेण स्थिता उत्कुटिकेन स्थितास्तथा हस्तिशुंडमकरमुखाद्यासनेन च स्थिता मुनयः क्षपयंति नयंति गमयंति रात्रिं गिरिगुहासु नान्यथेति समाधानताऽनेन प्रकारेण प्रतिपादिता भवतीति ॥ २९ ॥

प्रतीकाररहितत्वं निष्काङ्क्षत्वं च प्रतिपादयन्नाह;—

**उवधिभरविप्पमुक्का वोसट्टंगा णिरंबरा धीरा ।**
**णिक्किंचण परिसुद्धा साधू सिद्धिं वि मग्गंति ॥ ३० ॥**

**उपधिभरविप्रमुक्ता व्युत्सृष्टांगा निरंबरा धीराः ।**
**निष्किंचनाः परिशुद्धाः साधवः सिद्धिं अपि मृगयंते ॥ ३० ॥**

**टीका**—उपधिभरविप्रमुक्ताः श्रामण्यायोग्योपकरणभारेण सुष्ठु मुक्ताः, व्युत्सृष्टांगास्त्यक्तशरीराः, निरंबरा नाग्न्यमधिगताः, धीरा सुष्ठु शूराः, निष्किंचना निर्लोभाः, परिशुद्धाः कायवाङ्मनोभिः शुद्धाचरणाः साधवः, सिद्धिं कर्मक्षयं समिच्छंति मृगयंते, तेनेहलोकाकांक्षा परलोकाकांक्षा च परीषहप्रतीकारश्च न विद्यते तेषामिति ख्यापितं भवति । वसतिशुद्ध्या तपःसूत्रसत्वैकत्वधृतिभावनाश्च प्रतिपादिता इति ॥ ३० ॥

विहारशुद्धिं विवृण्वन्नाह;—

मुत्ता णिरावयेक्खा सच्छंदविहारिणो जहा वादो ।
हिंडंति णिरुव्विग्गा णयरायरमंडियं वसुहं ॥ ३१ ॥

मुक्ता निरपेक्षाः स्वच्छंदविहारिणः यथा वातः ।
हिंडंते निरुद्विग्ना नगराकरमंडितायां वसुधायां ॥ ३१ ॥

टीका—मुक्ताः सर्वसंगरहिताः, निरपेक्षाः किंचिदप्यनभिमानाः, स्वच्छन्द-विहारिणः स्वतंत्रा यथा वातो वात इव नगराकरमंडितायां वसुधायां पृथिव्यां हिंडन्ते भ्रमंतीति ॥ ३१ ॥

ननु विहरतां कथं नेर्यापथकर्मबन्ध इत्याशंकायामाह;—

वसुधम्मि वि विहरंता पीडं ण करेंति कस्सइ कयाई ।
जीवेसु दयावण्णा माया जह पुत्तभंडेसु ॥ ३२ ॥

वसुधायामपि विहरंतः पीडां न कुर्वंति कस्यचित् कदाचित् ।
जीवेषु दयापन्ना माता यथा पुत्रभांडेषु ॥ ३२ ॥

टीका—वसुधायां विहरन्तोऽपि पृथिव्यां पर्यटन्तोऽपि पीडां व्यथां न कुर्वन्ति नोत्पादयन्ति कस्यचिज्जीवविशेषस्य कदाचिदपि जीवदयायां प्रवृत्ताः, यथा माता जननी पुत्रादिषु दयां बिभर्ति तथैव तेऽपि न कुर्वन्ति कस्यापि दुःखानि पीडामिति ॥ ३२ ॥

ननु नानादेशेषु विहरतां कथं सावद्यपरिहार इत्याशंकायामाह,—

जीवाजीवविहत्तिं णाणुज्जोएण सुट्ठु णाऊण ।
तो परिहरंति धीरा सावज्जं जेत्तियं किंचि ॥ ३३ ॥

**जीवाजीवविभक्तिं ज्ञानोद्योतेन सुष्ठु ज्ञात्वा ।**
**ततः परिहरंति धीरा सावद्यं यावत् किंचित् ॥ ३३ ॥**

**टीका**—जीवविभक्तिं जीवविभेदान् सर्वपर्यायान् , अजीवविभक्तिमजीवपुद्गलधर्माधर्माकाशकालस्वरूपं सभेदं सपर्ययं ज्ञानोद्योतेन सुष्ठु ज्ञात्वाऽवबुध्य ततः परिहरंति परित्यजन्ति सावद्यं यत्किंचित्सर्वदोषजातं सर्वथा परिहरंतीति ॥ ३३ ॥

सावद्यकारणमपि परिहरंतीत्याह;—

**सावज्जकरणजोग्गं सव्वं तिविहेण तियरणविसुद्धं ।**
**वज्जंति वज्जभीरू जावज्जीवाय णिग्गंथा ॥ ३४ ॥**

**सावद्यकरणयोग्यं सर्वं त्रिविधेन त्रिकरणविशुद्धं ।**
**वर्जयंति अवद्यभीरवः यावज्जीवं निर्ग्रंथाः ॥ ३४ ॥**

**टीका**—सावद्यानि सदोषानि यानि करणानीन्द्रियाणि परिणामाः क्रिया वा तैर्योगः संपर्कस्तं सावद्यकरणयोगं सर्वमपि त्रिविधेन त्रिप्रकारेण कृतकारितानुमतरूपेण त्रिकरणविशुद्धं यथा भवति मनोवचनकायक्रियाशुद्धं यथा भवति तथा वर्जयंति परिहरंत्यवद्यभीरवः पापभीरवो यावज्जीवं यावन्मरणांतं निर्ग्रंथाः परिहरंतीति ॥ ३४ ॥

किं तत्सावद्यं यन्न कुर्वन्तीत्याशंकायामाह;—

**तणरुक्खहरिदछेदणतयपत्तपवालकंदमूलाइं ।**
**फलपुप्फबीयघादं ण करेंति मुणी ण कारेंति ॥ ३५ ॥**

**तृणवृक्षहरितछेदनत्वक्पत्रप्रवालकंदमूलानि ।**
**फलपुष्पबीजघातं न कुर्वंति मुनयो न कारयंति ॥ ३५ ॥**

**टीका**—तृणच्छेदं, वृक्षच्छेदं, हरितच्छेदनं, छिन्नछेदनं च न कुर्वंति न कारयंति मुनयः, तथा त्वक्पत्रप्रवालकन्दमूलानि न छिंदंति न छेदयंति, तथा फलपुष्पबीजघातनं न कुर्वंति न कारयंति मुनयः ॥ ३५ ॥

तथा;—

**पुढवीय समारंभं जलपवणग्गीतसाणमारंभं ।**
**ण करेंति ण कारेंति य कारेंतं णाणुमोदंति ॥ ३६ ॥**

पृथिव्याः समारंभं जलपवनाग्नित्रसानामारंभं ।
न कुर्वंति न कारयंति च कुर्वंतं नानुमोदंते ॥ ३६॥

टीका—पृथिव्याः समारंभं खननोत्कीर्णनचूर्णनादिकं न कुर्वंति न कारयंति कुर्वंतं नानुमन्यन्ते धीरास्तथा जलपवनाग्नित्रसानामारंभं सेचनोत्कर्षणवीजन-ज्वालनमर्दनत्रासनादिकं न कुर्वन्ति न कारयंति नानुमन्यंते इति ॥ ३६ ॥

यतः;—

**णिक्खित्तसत्थदंडा समणा सम सव्वपाणभूदेसु ।**
**अप्पट्ठं चिंतंता हवति अव्वावडा साहू ॥ ३७ ॥**

निक्षिप्तशस्त्रदंडाः श्रमणाः समाः सर्वप्राणभूतेषु ।
आत्मार्थं चिंतयंतो भवंति अव्यापृताः साधवः ॥ ३७ ॥

टीका—निक्षिप्तशस्त्रदंडाः सर्वहिंसाकारणात्क्रमुक्ता यतः, श्रमणा यतश्च, सर्वप्राणभूतेषु समाः समाना यतश्चात्मार्थं चिंतयंतो भवंत्यव्यापृता व्यापारहीनास्ततस्ते न कस्यचिद्बाधां कुर्वन्तीति ॥ ३७ ॥

[illegible] कथंभूतं परिणामं कुर्वन्तीत्याशंकायामाह;—

**उवसंतादीणमणा उवक्खसीला हवंति मज्झत्था ।**
**णिहुदा अलोलमसठा अविंभिया कामभोगेसु ॥ ३८ ॥**

भवन्ति, मध्यस्थाः, समदर्शिनः, निभृताः संकुचितकरचरणाः कूर्मवत्, अलोला निराकांक्षाः, अशठा मायाप्रपंचरहिताः, अविस्मिताः कामभोगेषु कामभोगविषये विस्मयरहिताः कृतानादरा इति ॥ ३८ ॥

तथा;—

**जिणवयणमणुगणेंता संसारमहब्भयं हि चिंतंता ।**
**गब्भवसदीसु भीदा भीदा पुण जम्ममरणेसु ॥ ३९ ॥**

**जिनवचनमनुगणयंतः संसारमहाभयं हि चिंतयंतः ।**
**गर्भवसतिषु भीता भीताः पुनः जन्ममरणेषु ॥ ३९ ॥**

**टीका**—जिनवचनमनुगणयंतोऽर्हदागमरंजितमतयः, संसारान्महद्भयं चिन्तयंतः संत्रस्तमनसः, गर्भवसतिषु गर्भवासाविषये भीताः सुष्ठु त्रस्ताः, पुनरपि जन्ममरणेषु भीता जातिजरामरणविषये च सम्यग्भीता इति ॥ ३९ ॥

कथं कृत्वा गर्भवसतिषु भीता इत्याशंकायामाह;—

**घोरे णिरयसरिच्छे कुंभीपाए सुपच्चमाणाणं ।**
**रुहिरचलाविलपउरे वसिदव्वं गब्भवसदीसु ॥ ४० ॥**

**घोरे नरकसदृशे कुंभीपाके सुपच्यमानानां ।**
**रुधिरचलाविलप्रचुरे वस्तव्यं गर्भवसतिषु ॥ ४० ॥**

**टीका**—घोरे भयानके नरकसदृशे कुंभीपाके "व्यथां कृत्वा संदहनं कुंभीपाकः" तस्मिन् सुपच्यमानानां सुष्ठु संतप्यमानानां "कर्त्तरि षष्ठी" तेन सुपच्यमानैरित्यर्थः, रुधिरचलाविलप्रचुरे रुधिरेण चले आविले बीभत्सेऽथवा बीभत्सेन प्रचुरे वस्तव्य स्थातव्यं, उदरे गर्भे, एवंविशिष्टे गर्भे या वसतयस्तासु वस्तव्यमस्माभिरहो इति ॥ ४० ॥

गर्भवसतिभ्यो भीताः संतः किमिच्छंतीति;—

दिट्ठपरमट्ठसारा विण्णाणवियक्खणाय बुद्धीए ।
णाणकयदीवियाए अगब्भवसदी विमग्गंति ॥ ४१ ॥

दृष्टपरमार्थसारा विज्ञानविचक्षणया बुद्ध्या ।
ज्ञानकृतदीपिकया अगर्भवसतिं विमृगयन्ते ॥ ४१ ॥

टीका—ते साधवो दृष्टपरमार्थसाराः संसारस्य शरीरस्य भोगानां च दृष्टं-ज्ञातं सारं परमार्थरूपं यैस्ते तथाभूताः, विज्ञानेन विचक्षणया बुद्ध्या मतिज्ञानादिना सह कुशलतया विज्ञानविचक्षणया बुद्ध्या ज्ञानकृतदीपिकया श्रुतज्ञानदीपेन चागर्भवसतिं विशेषेण मृगयंते समीहंत इति ॥ ४१ ॥

विरताः किं भावयंतीत्याह;—

भावेंति भावणरदा वइरग्गं वीदरागयाणं च ।
णाणेण दंसणेण य चरित्तजोएण विरिएण ॥ ४२ ॥

भावयंति भावनारता वैराग्यं वीतरागाणां च ।
ज्ञानेन दर्शनेन च चारित्रयोगेन वीर्येण ॥ ४२ ॥

टीका—भावनायां रता वीतरागाणां ज्ञानदर्शनचारित्रयोगवीर्येण च वैराग्यं भावयन्तीति ॥ ४२ ॥

तथा;—

देहे णिरावयक्खा अप्पाणं दमरुई दमेमाणा ।
धिदिपग्गहपग्गहिदा छिंदंति भवस्स मूलाइं ॥ ४३ ॥

देहे निरपेक्षा आत्मानं दमरुचयः दमयंतः ।
धृतिप्रग्रहप्रगृहीता छिंदंति भवस्य मूलानि ॥ ४३ ॥

**टीका**—देहे देहविषये निरपेक्षा ममत्वरहिताः, दमरुचय इंद्रियानिग्रहतत्पराः, आत्मानं दमयंतः, धृतिप्रग्रहप्रगृहीता धृतिबलसंयुक्ताः छिंदंति भवस्य मूलानीति ॥ ४३ ॥

विहारशुद्धिं व्याख्याय भिक्षाशुद्धिं प्रपंचयन्नाह;—

**छट्ठट्ठमभत्तेहिं पारेंति य परघरम्मि भिक्खाए ।**
**जमणट्टं भुंजंति य ण वि य पयामं रसट्ठाए ॥ ४४ ॥**

**षष्ठाष्टमभक्तैः पारयंति च परगृहे भिक्षया ।**
**यमनार्थं भुंजते च नापि च प्रकामं रसार्थाय ॥ ४४ ॥**

**टीका**—षष्ठाष्टमभक्तैस्तथा दशमद्वादशादिचतुर्थैश्च पारयंति भुंजते परगृहे भिक्षया कृतकारितानुमतिराहितलाभालाभसमानबुद्ध्या, यमनार्थं चारित्रसाधनार्थं च क्षुदुपशमनार्थं च यात्रासाधनमात्रं भुंजते, नैवं प्रकामं न च प्रचुरं रसार्थाय, अथवा नैव त्यागं कुर्वंति सद्रसार्थं यावन्मात्रेणाहारेण स्वाध्यायादिकं प्रवर्त्तते तावन्मात्रं गृह्णंति नाजीर्णाय बह्वाहारं गृह्णंतीति ॥ ४४ ॥

कया शुद्ध्या भुंजत इत्याशंकायामाह;—

**णवकोडीपरिसुद्धं दसदोसविवज्जियं मलविसुद्धं ।**
**भुंजंति पाणिपत्ते परेण दत्तं परघरम्मि ॥ ४५ ॥**

**नवकोटिपरिशुद्धं दशदोषविवर्जितं मलविशुद्धं ।**
**भुंजते पाणिपात्रे परेण दत्तं परगृहे ॥ ४५ ॥**

**टीका**—नवकोटिपरिशुद्धं मनोवचनकायैः कृतकारितानुमतिरहितं शंकितादिदोषपरिवर्जितं नखरोमादिचतुर्दशमलविशुद्धं भुंजते पाणिपात्रेण परेण दत्तं परगृहे, अनेन किमुक्तं भवति? स्वयं गृहीत्वा न भोक्तव्यं, पात्रं च न ग्राह्यं, स्वगृहे ममत्वमधिष्ठिते न भोक्तव्यमिति ॥ ४५ ॥

तथा,—

**उद्देसिय कीदयडं अण्णादं संकिदं अभिहडं च ।**
**सुत्तप्पडिकूडाणि य पडिसिद्धं तं विवज्जंति ॥ ४६ ॥**

औद्देशिकं क्रीतं अज्ञातं शंकितं अभिघटं च ।
सूत्रप्रतिकूलं च प्रतिसिद्धं तत् विवर्जयंति ॥ ४६ ॥

टीका—औद्देशिकं, क्रीतं, अज्ञातमपरिज्ञातं, शंकितं संदेहस्थानगतं प्रासुकाप्रासुकभ्रान्त्या, अभिघटमित्येवमादि सूत्रप्रतिकूलं सूत्रप्रतिषिद्धमशुद्धं च यत्तत्सर्वं विवर्जयंतीति ॥ ४६ ॥

भिक्षाभ्रमणविधानमाह,—

**अण्णादमणुण्णादं भिक्खं णिच्चुच्चमज्झिमकुलेसु ।**
**घरपंतिहिं हिंडंति य मोणेण मुणी समादिंति ॥ ४७ ॥**

अज्ञातामनुज्ञातां भिक्षां नीचोच्चमध्यमकुलेषु ।
गृहपंक्तिभिः हिंडंते च मौनेन मुनयः समाददते ॥ ४७ ॥

टीका—अज्ञातं यत्र गृहस्थैः साधव आगमिष्यंति भिक्षार्थं नानुमतं स्वेन च तत्र मया न गंतव्यमिति नाभिप्रेतं अनुज्ञातं गृहस्थैर्यत्र आगमिष्यंति भिक्षार्थं स्वेन चावलोकादिक्रमेण मया तत्र गंतव्यं नानुमतं, भिक्षां चतुर्विधाहारं, नीचोच्चमध्यमकुलेषु दरिद्रेश्वरसमानगृहेषु गृहपंक्त्या हिंडंति पर्यटंति, मौनेन मुनयः समाददते भिक्षां गृह्णंति ॥ ४७ ॥

तथा रसनेंद्रियजयमाह;—

**सीदलमसीदलं वा सुक्कं लुक्खं सिणिद्ध सुद्धं वा ।**
**लोणिदमलोणिदं वा भुंजंति मुणी अणासादं ॥ ४८ ॥**

**शीतलमशीतलं वा शुष्कं रूक्षं स्निग्धं शुद्धं वा ।**
**लवणितमलवणितं वा भुंजते मुनयः अनास्वादम् ॥ ४८ ॥**

**टीका**—शीतलं पूर्वाह्णवेलायां कृतं परित्यक्तोष्णभावं भोज्यं, अशीतलं तत्क्षणादेवावतीर्णमपरित्यक्तोष्णभावमोदनादिकं, रूक्षं घृततैलादिरहितं कोद्रवमकुष्ठादिकं वा, शुष्कं दुग्धदधिव्यंजनादिरहितं, स्निग्धं घृतादिसहितं शाल्योदनादिकं, शुद्धं पिठरादवतीर्णरूपं न च मनागपि विकृतं, लवणयुक्तं अलवणं वा भुंजते मुनयोऽनास्वादं यथा भवति जिह्वास्वादरहितमिति ॥ ४८ ॥

यमनार्थपदस्यार्थं निरूपयन्नाह;—

**अक्खोमक्खणमेत्तं भुंजंति मुणी पाणधारणणिमित्तं ।**
**पाणं धम्मणिमित्तं धम्मं पि चरंति मोक्खट्ठं ॥ ४९ ॥**

**अक्षम्रक्षणमात्रं भुजते मुनयः प्राणधारणनिमित्तं ।**
**प्राणं धर्मनिमितं धर्ममपि चरंति मोक्षार्थम् ॥ ४९ ॥**

**टीका**—अक्षम्रक्षणमात्रं यथा शकटं धुरालेपनमंतरेण न वहत्येवं शरीरमप्यशनमात्रेण विना न संवहतीति मुनयः प्राणधारणनिमित्तं किंचिन्मात्रं भुंजते, प्राणधारणं च धर्मनिमित्तं कुर्वंति, धर्ममपि चरंति मोक्षार्थं मुक्तिनिमित्तमिति ॥ ४९ ॥

लाभालाभविषये समत्वमाह;—

**लद्धे ण होंति तुट्ठा ण वि य अलद्धेण दुम्मणा होंति ।**
**दुक्खे सुहे य मुणिणो मज्झत्थमणाउला होंति ॥ ५० ॥**

**लब्धे न भवंति तुष्टा नापि च अलब्धेन दुर्मनसो भवंति ।**
**दुःखे सुखे च मुनयः मध्यस्था अनाकुला भवंति ॥ ५० ॥**

---

१ 'सम्बन्ध' प्रेस–पुस्तके ।

टीका—भिक्षाया लाभे आहारादिसंप्राप्ता न भवंति संतुष्टाः संतोषेण गिना जिह्वेन्द्रियवशं गता "अद्य लब्धा भिक्षेति न दर्पं विदधति स्वामिने" न चान्यलब्धे भिक्षाया अलाभेऽसंप्राप्तौ सत्यां दुर्मनसो विमनस्का न भवंति 'अस्माभि गाहारादिकमद्य न लब्धमिति दीनमनसो न भवंति' दुःखे संजाते सुखे च समुद्भूते मुनयः मध्यस्थाः समभावा अनाकुलाश्च भवंतीति ॥ ५० ॥

चर्यायां मुनीनां स्थैर्यं निरूपयन्नाह;—

**ण वि ते अभित्थुणंति य पिंडत्थं ण वि य किंचि जायंति।**
**मोणव्वदेण मुणिणो चरंति भिक्खं अभासंता ॥ ५१ ॥**

नापि ते अभिष्टुवंति पिंडार्थं नापि च किंचित याचंते।
मौनव्रतेन मुनयः चरंति भिक्षां अभाषयंतः ॥ ५१ ॥

टीका—नापि ते मुनयोऽभिष्टुवन्ति नैवोपश्लोकादिभिः स्तुतिं कुर्वंति पिंडार्थं ग्रासनिमित्तं, नैवापि च किंचित याचंते न नापि प्रार्थयंत इत्यादिकमाहारार्थ, मौनव्रतेन तोणमादाय मुनयश्चरंति भिक्षार्थमाहारार्थं पर्यटंति, अभाषयंतः सत्काराद्विशब्दादिसंज्ञा वा न कुर्वंतीति न पानकमयमिति ॥ ५१ ॥

तथा,—

**देहीति दीणकलुसं भासं णेच्छंति एरिसं वोत्तुं।**
**अवि णीदि अलाभेणं ण य मोणं भंजदे धीरा ॥ ५२ ॥**

देहीति दीनकलुषां भाषां नेच्छंति ईदृशीं वक्तुं।
अपि निवर्तते अलाभेन न च मौनं भंजते धीराः ॥ ५२ ॥

भोजनमंतरेणेति वचनं दीनं यदि मह्यं भोजनं न प्रयच्छत तदा मृतोऽहं शरीरस्य मम सुष्ठु कृशता रोगादिभिर्ग्रस्तोऽहं नास्माकं किंचिद्विद्यते याचनादिपूर्वकं वचनं करुणोपेतमिति, अपि निवर्त्ततेऽलाभे वा लाभे संजाते निवर्तंते भिक्षागृहेषु न पुनः प्रविशंति न च मौनं भंजंति न किंचिदपि प्रार्थयंते भोजनाय धीराः सत्वसंपन्ना इति ॥ ५२ ॥

यदि न याचंते किमात्मना किंचित् कुर्वंतीत्याशंकायामाह;—

**पयणं व पायणं वा ण करेंति अ णेव ते करावेंति ।**
**पयणारंभणियत्ता संतुट्ठा भिक्खमेत्तेण ॥ ५३ ॥**

**पचनं वा पाचनं वा न कुर्वंति च नैव ते कारयंति ।**
**पचनारंभनिवृत्ताः संतुष्टा भिक्षामात्रेण ॥ ५३ ॥**

**टीका**—पचनं स्वेनौदनादिनिर्वर्त्तनं पाचनं स्वोपदेशेनान्येन निर्वर्तनं न कुर्वंति नापि कारयंति मुनयः, पचनारंभान्निवृत्ता दूरतः स्थिताः संतुष्टाः, भिक्षामात्रेण—कायसंदर्शनमात्रेण भिक्षार्थं पर्यटंतीति ॥ ५३ ॥

लब्धमपि संनिरीक्ष्य गृह्णंतीत्येवं निरूपयन्नाह;—

**असणं जदि वा पाणं खज्जं भोजं च लिज्ज पेज्जं वा ।**
**पडिलेहिऊण सुद्धं भुंजंति पाणिपत्तेसु ॥ ५४ ॥**

**अशनं यदि वा पानं खाद्यं भोज्यं च लेह्यं पेयं वा ।**
**प्रतिलेख्य शुद्धं भुंजते पाणिपात्रेषु ॥ ५४ ॥**

**टीका**—अशनं भक्तादिकं, यदि वा पानं दुग्धजलादिकं, खाद्यं लड्डुकादिकं, भोज्यं भक्ष्यं मंडकादिकं, लेह्यमास्वाद्यं, पेयं स्तोकभक्तपानबहुलं, वा विकल्पवचनः, प्रतिलेख्य शुद्धं भुंजते पाणिपात्रेषु न भाजनादिष्विति ॥ ५४ ॥

अप्रासुकं परिहरन्नाह;—

**जं होज्ज अविव्वण्णं पासुग पसत्थं तु एसणासुद्धं ।**
**भुंजंति पाणिपत्ते लद्धूण य गोयरग्गम्मि ॥ ५५ ॥**

यत् भवति अविवर्णं प्रासुकं प्रशस्तं तु एषणाशुद्धं ।
भुंजते पाणिपात्रे लब्ध्वा च गोचराग्रे ॥ ५५ ॥

टीका—यद्द्रव्यमविवर्णमपि, प्रासुकं सम्मूर्छनादिरहितं निर्जीवं जंतुरहितं च, प्रशस्तं मनोज्ञं, एषणासमितिविशुद्धं, गोचराग्रे भिक्षावेलायां, लब्ध्वा पाणिपात्रेषु भुंजत इति ॥ ५५ ॥

तथाः—

जं होज्ज वेहिअं तेहिअं च विवण्णजंतुसंसिट्ठं ।
अप्पासुगं तु णच्चा तं भिक्खं मुणी विवज्जंति ॥ ५६ ॥

यत् भवति द्व्यहं त्र्यहं विवर्णं जंतुसंमिश्रं ।
अप्रासुकं तु ज्ञात्वा तां भिक्षां मुनयः विवर्जयंति ॥ ५६ ॥

टीका—यद्भवति द्व्यहजातं त्र्यहजातं द्विदिनभवं त्रिदिनभवं च, विवर्णरूपं स्वभावचलितं, जंतुसम्मिश्रमागन्तुकैः सम्मूर्छनजैश्च जन्तुभिः संमिश्रमप्रासुकमिति ज्ञात्वा तां भिक्षां मुनयो विवर्जयन्तीति ॥ ५६ ॥

वर्जनीयद्रव्यमाह,—

जं पुप्फिय किण्णइदं दट्ठूणं पूपपप्पडादीणि ।
वज्जंति वज्जणिज्जं भिक्खू अप्पासुयं जं तु ॥ ५७ ॥

यत् पुष्पितं क्लिन्नं दृष्ट्वा अपूपपर्पटादीनि ।
वर्जयंति वर्जनीयं भिक्षवः अप्रासुकं यत् ॥ ५७ ॥

टीका—यत्पुष्पितं नीलकृष्णश्वेतादिवर्णजातं, क्लिन्नं कुथितं दृष्ट्वा अपूपपर्पटादिकं वर्जनीयं, लब्धमपि यत्किंचिदप्रासुकं तत्सर्वमात्मनो वर्जयंति परिहरन्तीति ॥ ५७ ॥

प्रासुकं तु गृह्णन्तीत्याह;—

जं सुद्धमसंसत्तं खज्जं भोज्जं च लेज्ज पेज्जं वा ।
गिण्हंति मुणी भिक्खं सुत्तेण अणिंदियं जं तु ॥ ५८ ॥

**यत् शुद्धमसंसक्तं खाद्यं भोज्यं च लेह्यं पेयं वा ।**
**गृह्णंति मुनयः भिक्षां सूत्रेण अनिंदितं यत्तु ॥ ५८ ॥**

**टीका**—यच्छुद्धं विवर्णादिरूपं न भवति, जंतुभिः संसृष्टं च न भवति। खाद्यं भोज्यं लेह्यं पेयं च, सूत्रेणानिन्दितं तद्भैक्ष्यं मुनयो गृह्णंतीति ॥ ५८ ॥

आमपरिहारायाह;—

**फलकंदमूलबीयं अणग्गिपक्कं तु आमयं किंचि ।**
**णच्चा अणेसणीयं ण वि य पडिच्छंति ते धीरा ॥५९॥**

**फलकंदमूलबीजं अनग्निपक्कं तु आमकं किंचित् ।**
**ज्ञात्वा अनशनीयं नापि च प्रतीच्छंति ते धीराः ॥ ५९ ॥**

**टीका**—फलानि कंदमूलानि बीजानि चाग्निपक्कानि न भवंति यानि अन्यदप्यामकं यत्किंचित्तदनशनीयं ज्ञात्वा नैव प्रयच्छान्ति नाभ्युपगच्छन्ति ते धीरा इति ॥ ५९ ॥

यदशनीयं तदाह;—

**जं हवदि अणिव्वीयं णिवट्टिमं फासुयं कयं चेव ।**
**णाऊण एसणीयं तं भिक्खं मुणी पडिच्छंति ॥ ६० ॥**

**यत् भवति अबीजं निर्वर्तिमं प्रासुकं कृतं चैव ।**
**ज्ञात्वा अशनीयं तत् भैक्ष्यं मुनयः प्रतीच्छंति ॥ ६० ॥**

**टीका**—यद्भवत्यबीजं निर्बीजं, निर्वर्त्तिमं निर्गतमध्यसारं, प्रासुकं कृतं चैव ज्ञात्वाऽशनीयं तद्भैक्ष्यं मुनयः प्रतीच्छंतीति ॥ ६० ॥

भुक्त्वा किं कुर्वंतीत्याशंकायामाह;—

**भोत्तूण गोयरग्गे तहेव मुणिणो पुणो वि पडिकंता ।**
**परिमिदएयाहारा खमणेण पुणो वि पारेंति ॥६१॥**

भुक्त्वा गोचराग्रे तथैव मुनयः पुनरपि प्रतिक्रांताः ।
परिमितैकाहाराः क्षमणेन पुनरपि पारयंति ॥ ६१ ॥

टीका—गोचराग्रे भुक्त्वा भिक्षाचर्यामार्गे भुक्त्वा तथापि मुनयः पुनरपि प्रतिक्रामंति दोषनिर्हरणाय क्रियाकलापं कुर्वंते, यद्यपि कृतकारितानुमतिरहिता भिक्षा लब्धा तथापि तदर्थं वा शुद्धिं कुर्वन्त्यतीव यतयः, परिमितैकाहाराः परिमित एक एकवेलायामाहारो येषां ते परिमितैकाहाराः क्षमणेनोपवासेनैकस्थानेन वा पुनरपि पारयंति भुंजते इति ॥ ६१ ॥

ज्ञानशुद्धिं निरूपयन्नाह;—

ते लद्धणाणचक्खू णाणुज्जोएण दिट्ठपरमट्ठा ।
णिस्संकिदणिव्विदिगिंछादबलपरक्कमा साधू ॥ ६२ ॥

ते लब्धज्ञानचक्षुषो ज्ञानोद्योतेन दृष्टपरमार्थाः ।
निःशंकानिर्विचिकित्सात्मबलपराक्रमाः साधवः ॥ ६२ ॥

टीका—ते मुनयो लब्धज्ञानचक्षुषो ज्ञानोद्योतेन दृष्टपरमार्था मतिज्ञानं श्रुतज्ञानं मनःपर्ययावधिज्ञानयुक्तास्तेन ज्ञानेन दृष्टपरमार्थाः, शंकाया श्रुतज्ञानादिनिरूपितपदार्थविषयसंदेहान्निर्गता निःशंकाः, विचिकित्साया निर्गता निर्विचिकित्सा आत्मबलानुरूपः पराक्रमो येषां न आत्मबल-गूहका यथाशक्त्युत्साहसमन्विता साधव इति ॥ ६२ ॥

पुनरपि विशिष्टा इत्याशंकायामाह;—

अणुबद्धतवोकम्मा खवणवसगदा तवेण तणुअंगा ।
धीरा गुणगंभीरा अभग्गजोगा य दिढचरित्ता य ॥ ६३ ॥

**अनुबद्धतपःकर्माणः क्षमणवशंगताः तपसा तन्वंगाः ।**
**धीरा गुणगंभीरा अभग्नयोगाश्च दृढचरित्राश्च ॥ ६३ ॥**

**टीका**—अनुबन्द्धं संततं तपःकर्म तपोऽनुष्ठानं येषां तेऽनुबन्द्धतपःकर्माणो द्वादशविधे तपस्युद्यताः, क्षमणवशंगताः, तपसा तनुशरीराः धीराः, गुणगंभीरा गुणसंपूर्णाः, अभग्नयोगाः, दृढचारित्राश्च ॥ ६३ ॥

तथा;—

**आलीणगंडमंसा पायडभिउडीमुहा अधियदच्छा ।**
**सवणा तवं चरंता उक्किण्णा धम्मलच्छीए ॥ ६४ ॥**

**आलीनगंडमांसाः प्रकटभ्रकुटीमुखा अधिकाक्षाः ।**
**श्रमणाः तपश्चरंत उत्कीर्णा धर्मलक्ष्म्या ॥ ६४ ॥**

**टीका**—आलीनगंडमांसाः क्षीणकपोलाः प्रकटभ्रूकुटिमुखा अधिकाक्षा-स्तारकामात्रनयनाश्चर्मास्थिशेषाः श्रमणास्तपश्चरंत एवंभूता अपि संयुक्ता धर्म-लक्ष्म्या ज्ञानभावनयोपेता यतो न[1] ज्ञानमात्रात्सिद्धिरिति ॥ ६४ ॥

कथं ज्ञानभावनया संपन्ना इत्याशंकायामाह,—

**आगमकदविण्णाणा अट्टंगविदू य बुद्धिसंपण्णा ।**
**अंगाणि दस य दोण्णि य चोद्दस य धरंति पुव्वाइं ॥ ६५ ॥**

**आगमकृतविज्ञाना अष्टांगविदश्च बुद्धिसंपन्नाः ।**
**अंगानि दश च द्वे चतुर्दश च धारयंति पूर्वाणि ॥ ६५ ॥**

**टीका**— न केवलं भिक्षादिशुद्धौ रताः किं तु ज्ञानशुद्धावपि रता यतः आगमेन कृतं विज्ञानं यैस्ते आगमकृतविज्ञानाः श्रुतज्ञानदृष्टपरमार्थाः, अष्टां-गविदोंऽगव्यंजनादिनीमित्तकुशलाश्चतुर्विधबुद्धिसंपन्नाश्च । कथमागमकृतविज्ञाना इति चेदंगानि दश द्वे चाचारसूत्रकृतस्थानसमवायव्याख्याप्रज्ञाप्तिज्ञातृकथोपा-

---

१ ' यतो न ' इति पदं प्रेस-पुस्तके नास्ति ।

सकाध्ययनांतःकृद्दशानुत्तरदशप्रश्न व्याकरणविपाकसूत्रदृष्टिवादनामकानि द्वाद-शांगानि भण्यंते तथा दृष्टिवादोद्भूतचतुर्दशपूर्वाण्युत्पादाग्रायणीयवीर्यानुप्रवादास्ति-नास्तिप्रवादज्ञानप्रवादसत्यप्रवादात्मप्रवादकर्मप्रवादप्रत्याख्यानप्रवादविद्यानु-प्रवादकल्याणप्राणावायक्रियाविशाललोकबिंदुसारनामकानि भण्यंते जानंति चाधीत आगमकुशलविज्ञाना इति ॥ ६५ ॥

न केवलं तानि पठंति शृण्वंति, किं तु,—

**धारणगहणसमत्था पदाणुसारीय बीयबुद्धीय ।**
**संभिण्णकोट्ठबुद्धी सुयसागरपारया धीरा ॥ ६६ ॥**

धारणग्रहणसमर्थाः पदानुसारिणो बीजबुद्धयः ।
संभिन्नकोष्ठबुद्धयः श्रुतसागरपारगा धीराः ॥ ६६ ॥

तथा;—

**सुदरयणपुण्णकण्णा हेउणयविसारदा विउलबुद्धी ।**
**णिउणत्थसत्थकुसला परमपयवियाणया समणा ॥६७॥**

**श्रुतरत्नपूर्णकर्णा हेतुनयविशारदा विपुलबुद्धयः ।**
**निपुणार्थशास्त्रकुशलाः परमपदविज्ञायकाः श्रमणाः ॥ ६७ ॥**

**टीका**—श्रुतमेव रत्नं पद्मरागादिकं तेन पूर्णौ समलंकृतौ कर्णौ येषां ते श्रुतरत्नपूर्णकर्णाः। हेतुर्द्विविधो बहिर्व्याप्तिलक्षणोऽन्तर्व्याप्तिलक्षणश्च, तत्र बहिर्व्याप्तिलक्षणस्त्रिविधः सपक्षे सत्वं विपक्षे[1] चासत्वं पक्षधर्मत्वमिति । अन्तर्व्याप्तिलक्षण एकविधः, साध्याविनाभाव एकं लक्षणं यस्य स साध्याविनाभावैकलक्षणः। यदंतरेण यन्नोपपद्यते तत्साध्यं, इतरत्साधनं। अन्यथानुपपत्तिवैकल्यविशेषादसिद्धविरुद्धानैकान्तिका हेत्वाभासाः। तत्र साध्येऽनुपपात्तिरज्ञातश्चासिद्धः, तद्विशेषोऽकिंचित्करः, अन्यथोपपन्नो विरुद्धः, अन्यथाप्युपपन्नोऽनैकांतिकः। श्रुतनिरूपितैकदेशाध्यवसायो नयः सप्तप्रकारो नैगमादिभेदेन, तत्र सामान्यविशेषादिपरस्परापेक्षानेकात्मकवस्तुनिगमनकुशलो नैगमः, यदस्ति न तद्द्वयमतिलंघ्य वर्त्तत इति । स्वजात्याविरोधेन नैकत्यमुपनीय पर्यायानाक्रान्तभेदान् समस्तसंग्रहणात्संग्रहः, यथा सर्वमेकं सदविशेषादिति । संग्रहनयाक्षिप्तानां पदार्थानां विधिपूर्वकं व्यवहरणं व्यवहारः, यथा पृथिव्यादयोऽनेकधा व्यवस्थितास्तत्त्वं तत्र संव्यवहारदर्शनादिति । अतीतानागतकोटिविनिर्मुक्तं वस्तु समयमात्रं ऋजु सूत्रयतीति ऋजुसूत्रः, यथा विश्वं क्षणिकं सत्वादिति। यथार्थप्रयोगसंशब्दनाच्छब्दोर्थभेदकृत्—कालकारकलिंगानां भेदादिति। प्रत्यर्थमेकैकसंज्ञाभिरोहणादिन्द्रशक्रपुरन्दरपर्यायशब्दभेदनात्समभिरूढ इति। तत्क्रियापरिणामकाल एव तादित्थंभूतो यथा कुर्वत एव कारकत्वमिति । चत्वारोऽर्थनयास्त्रयः शब्दनयाः, पूर्वे त्रयो द्रव्यनयाः शेषाः पर्यायनया इत्येवंभूते हेतौ नये च विशारदा निपुणा हेतुन-

---

[1] 'परपक्षे' इति ग—पुस्तके ।

ग्रंथिशारदाः । विपुलऋजुबुद्धयः मत्यागतयः अथवा ऋजुमतयो विपुलमतयश्च मनःपर्ययज्ञानिन इत्यर्थः । निपुणार्थशास्त्रकुशला निरवशेषार्थकुशलाः सिद्धांतव्याकरणतर्कसाहित्यछन्दःशास्त्रादिकुशलाः, । परमपदस्य विज्ञायकाः मुक्तिस्वरूपावबोधनपराः श्रमणा मुनय इति ॥ ६७ ॥

ज्ञानमदनिराकरणायाह;—

**अवगदमाणत्थंभा अणुस्सिदा अगव्विदा अचंडा य ।**
**दंता मद्दवजुत्ता समयविदण्हू विणीदा य ॥ ६८ ॥**

अपगतमानस्तंभा अनुत्सृता अगर्विता अचंडाश्च ।
दांता मार्दवयुक्ताः समयविदो विनीताश्च ॥ ६८ ॥

टीका—अपगतमानस्तंभा ज्ञानगर्वेण मुक्तास्तथाऽगर्विता जात्यादिमदरहिताः, अनुत्सृता अनुत्सुका वा कार्यानुत्सुक्यारहिताः, अचंडाश्च क्रोधरहिताः, दांता इंद्रियजयसमेताः, मार्दवयुक्ताः, स्वसमयपरसमयविदः, विनीताश्च पंचविधविनयसंयुक्ता इति ॥ ६८ ॥

तथा;—

**उवलद्धपुण्णपावा जिणसासणगहिद मुणिदपज्जाला ।**
**करचरणसंवुडंगा झाणुवजुत्ता मुणी होंति ॥ ६९ ॥**

उपलब्धपुण्यपापा जिनशासनगृहीता ज्ञातद्रव्यस्वरूपाः ।
करचरणसंवृतांगा ध्यानोपयुक्ता मुनयो भवंति ॥ ६९ ॥

सव्वृतांगों अत्र प्राकृते णकारस्याभावः कृतः । अथवा करौ हस्तौ चरणौ पादौ तैः संवृतमंगं तेऽवयवप्रावरणा यत्र तत्र निक्षेपणमुक्ताश्च, ध्यानोद्यता भवंतीति ॥ ६९ ॥

उज्झनशुद्धिं निरूपयन्नाह;—

**ते छिण्णणेहबंधा णिण्णेहा अप्पणो सरीरम्मि ।**
**ण करंति किंचि साहू परिसंठप्पं सरीरम्मि ॥ ७० ॥**

**ते छिन्नस्नेहबंधा निस्नेहा आत्मनः शरीरे ।**
**न कुर्वंति किंचित् साधवः परिसंस्कारं शरीरे ॥ ७० ॥**

**टीका**—उज्झनशुद्धिर्नाम शरीरसंस्कारपरित्यागो बंध्वादिपरिहारो वा सर्वसंगविनिर्मुक्तिर्वा रागाभावो वा तत्र बंधुविषये शरीरविषये च रागाभावं तावदाचष्टे इति ते मुनयः छिन्नस्नेहबंधाः पुत्रकलत्रादिविषये स्नेहहीनाः, न केवलमन्यत्र किं त्वात्मीयशरीरेऽपि निःस्नेहा यतः स्वशरीरे किंचिदपि संस्कारं स्नानादिकं न कुर्वंति साधव इति ॥ ७० ॥

संस्कारस्वरूपभेदानिरूपणायाह;—

**मुहणयणदंतधोवणमुव्वट्टण पादधोयणं चेव ।**
**संवाहण परिमद्दण सरीरसंठावणं सव्वं ॥ ७१ ॥**

**मुखनयनदंतधावनमुद्वर्तनं पादधावनं चैव ।**
**संवाहनं परिमर्दनं शरीरसंस्थापनं सर्वं ॥ ७१ ॥**

**टीका**—मुखस्य नयनयोर्दंतानां च धावनं शोधनं प्रक्षालनं, उद्वर्तनं सुगंधद्रव्यादिभिः शरीरोद्धर्षणं, पादप्रक्षालनं कुंकुमादिरागेण पादयोर्निर्मलीकरणं, संवाहनमंगमर्दनं पुरुषेण शरीरोपरिस्थितेन मर्दनं परिमर्दनं करमुष्टिभि-

१ अस्मादग्रे ' चिरकरणचरणसंवृतांगा ' प्रेस–पुस्तके । २ रागाभावातामाचष्टे प्रेस–पुस्तके पाठः ।

नाप्यार्त्तध्यानं कुर्वन्तीत्यावेदयन्नाह;—

**ण य दुम्मणा ण विहला अणाउला होंति चेय सप्पुरिसा ।**
**णिप्पडियम्मसरीरा देंति उरं वाहिरोगाणं ॥ ७४ ॥**

**न च दुर्मनसः न विकला अनाकुला भवंति चैव सत्पुरुषाः ।**
**निष्प्रतिकर्मशरीरा ददते उरो व्याधिरोगेभ्यः ॥ ७४ ॥**

**टीका**—नाऽपि दुर्मनसो विमनस्का नैव भवंति, न विकला नापि हिताहितविवेकशून्याः, अनाकुलाः किंकर्तव्यतामोहरहिताः, सत्पुरुषाः प्रेक्षापूर्वकारिणः, निष्प्रतीकारशरीराः शरीरविषये प्रतीकाररहिताः, ददते प्रयच्छंति उरो हृदयं, व्याधिरोगेभ्यः सर्वव्याधिरोगान् समुपस्थितान्न धैर्योपेताः संतः सहन्ते ॥७४॥

किं सर्वौषधं विरेचनादिकं च नेच्छंति नैतत् कथमिदं इच्छंति यत आह;—

**जिणवयणमोसहमिणं विसयसुहविरेयणं अमिदभूदं ।**
**जरमरणवाहिवेयण खयकरणं सव्वदुक्खाणं ॥ ७५ ॥**

**जिनवचनमौषधमिदं विषयसुखविरेचनं अमृतभूतं ।**
**जरामरणव्याधिवेदनानां क्षयकरणं सर्वदुःखानाम् ॥ ७५ ॥**

**टीका**—जिनवचनमेवौषधमिदं, विषयसुखविरेचनमिन्द्रियद्वारागतस्य सुखस्य निर्हरणं, अमृतभूतं सर्वांगसंतर्पणकारणं, जरामरणव्याधिवेदनानां क्षयकरणसमर्थं, सर्वदुःखानां च क्षयकरणं सर्वाणि ज्वरादीनि कारणानि दुःखादीनि च कार्याणि सर्वस्य कृत्स्नस्य कार्यकारणरूपस्य कर्मणो विनाशे समर्थमिति ॥ ७५ ॥

पुनरपि क्रियां कुर्वन्तीत्याह;—

**जिणवयणणिच्छिदमदीअ-विरमणं अब्भुवेंतिसप्पुरिसा।**
**ण य इच्छंति अकिरियं जिणवयणवदिक्कमं कादुं ॥ ७६ ॥**

जिनवचननिश्चितमतयः विरमणं अभितिष्ठंति सत्पुरुषाः ।
न च इच्छंति अक्रियां जिनवचनव्यतिक्रमं कृत्वा ॥ ७६ ॥

टीका—जिनवचने निश्चितमतयः सम्यक्तत्त्वार्थरुचयः, विरमणं मरणं "अवि मरणमिति" पाठान्तरं, अभितिष्ठंति सम्यगभ्युपगच्छंति सत्पुरुषाः सत्त्वसंपन्नाः, न चेच्छंति नैव समीहंते जिनवचनव्यतिक्रमं कृत्वाऽक्रिया शरीरव्याध्यादिप्रतीकाराय जिनागमं व्यतिक्रम्याप्रासुकसेवनं मनागपि प्राणत्यागेऽपि नेच्छंतीति ॥ ७६ ॥

अन्यच्चेत्थंभूते शरीरे कथमस्माभिः प्रतीकारः क्रियत इत्याशंकायामाह;—

**रोगाणं आयदणं वाधिसदसमुच्छिदं सरीरघरं ।**
**धीरा खणमवि रागं ण करेंति मुणी सरीरम्मि ॥ ७७ ॥**

रोगाणां आयतनं व्याधिशतसम्मूर्च्छितं शरीरगृहं ।
धीराः क्षणमपि रागं न कुर्वंति मुनयः शरीरे ॥ ७७ ॥

टीका—इदं शरीरं रोगाणामायतनं निलयः, व्याधिशतैः सम्मूर्च्छितं निर्मितं, वातपित्तश्लेष्मादयो रोगास्तज्जनिता ज्वरादयो व्याधयोऽतो न पौनरुक्त्यं शरीरगृहं यत एवंभूतमिदं शरीरमतो धीरा मुनयः क्षणमपि रागं स्नेहानुबंधं न कुर्वंति शरीरविषय इति ॥ ७७ ॥

पुनरपि शरीरस्याशुचित्वं प्रतिपादयन्नाह,—

**एदं सरीरमसुइं णिच्चं कलिकलुसभायणमचोक्खं ।**
**अंतोछाइद ढिड्डिस खिब्भिसभरिदं अमेज्झघरं ॥ ७८ ॥**

एतत् शरीरमशुचि नित्यं कलिकलुषभाजनमचोक्षं ।
अंतश्छादितं ढिड्डिसं किल्बिषभृतं अमेध्यगृहं ॥ ७८ ॥

तदन्तश्छादितं, अन्तःशब्दस्य पूर्वनिपातो ज्ञापकात्, अथवांत्रैर्मांसरज्जुभिश्छादितं परिवेष्टितं, ढिड्डिसं कर्पाससमानं रुधिराहितमभ्यन्तरस्थं मांसवसाविशेषरूपं, खिब्भिसं-किल्बिषं शुक्रशोणिताशुचिकालेज्जकादिकं तैर्भृतं पूर्णं, अमेध्यगृहं मूत्रपुरीषाद्यवस्थानमिति ॥ ७८ ॥

किल्विषस्वरूपमाह;—

**वसमज्जमंससोणियपुप्फसकालेज्जसिंभसीहाणं ।**
**सिरजालअट्ठिसंकड चम्मेंं णद्धं सरीरघरं ॥ ७९ ॥**

**वसामज्जामांसशोणितफुप्फुसकालेज्जश्लेष्मसिंहानकं ।**
**शिराजालास्थिसंकीर्णं चर्मणा नद्धं शरीरगृहं ॥ ७९ ॥**

**टीका**—वसा मांसगतस्निग्धत्वं तैलरूपं, मज्जाऽस्थिगतसारः, मांसं रुधिरकार्यं, शोणितं रुधिरं रसकार्यं, फुप्फुसं फेनरूपं निःसारं, कालेज्जकमतीवकृष्णमांसखंडरूपं, श्लेष्मसिंहानकं, शिराजालमस्थीन्येतैः संकीर्णं संपूर्णं, चर्मणा नद्धं त्वक्प्रच्छादितं शरीरगृहमशुचीति सबंधः ॥ ७९ ॥

तथा;—

**बीभच्छं विच्छुइयं थूहायसुसाणवच्चमुत्ताणं ।**
**अंसूयपूयलसियं पयलियलालाउलमचोक्खं ॥ ८० ॥**

**बीभत्सं विशौचं थूत्कारसुसाणवर्चोमूत्रैः ।**
**अश्रुपूयलसियं प्रगलितलालाकुलं अचौक्षं ॥ ८० ॥**

**टीका**—बीभत्सं द्रष्टुमशक्यं कुथितव्रणवत्, विच्छुइयं—अनित्यं शाश्वतरूपं न भवति अथवा विशौचं सर्वाशुचिद्रव्यैर्घटितत्वात्, थूहाय—कंठागतश्लेष्मा अथवा नगरमध्यस्थकच्चवरोत्कूटसदृशं, सुसाण—नासिकागूथं अथवा श्मशानसदृशं, वर्चोऽशुचि, मूत्रं प्रस्रवणमेतैर्बीभत्सं, न केवलं बीभत्समनित्यं चेति ।

कायमलमत्थुलिंगं दंतमल विचिक्कणं गलिदसेदं ।
किमिजंतुदोसभरिदं संदणियाकद्दमसरिच्छं ॥ ८१ ॥

कायमलं मस्तुलिंगं दंतमलं विचिक्कणं गलितस्वेदं ।
कृमिजंतुदोषभृतं स्यंदनीकर्दमसदृशम् ॥ ८१ ॥

टीका—कायमलं मूत्रपुरीषादिकं, मस्तुलिंगं मस्तकस्थं शुक्लद्रव्यरूपं [illegible]-न्तं, दन्तमलं दन्तमध्ये वर्तितं मलं, विचिक्कणं विशिष्टं चिक्कणं मलं, गलितस्वेदं प्रगलत्स्वेदं, कृमिजन्तुदोषैः भृतं पूर्णं, स्यन्दनीकर्दमसदृशं [illegible] कर्दमसदृशं [illegible] समानं, अथवा कायमलमस्तुलिंग-दन्तमलविचिक्कणगलितस्वेदं कृमिजन्तुदोषपूर्णं स्यन्दनीकर्दमसदृशं शरीरमिति संबन्धः ॥ ८१ ॥

पुनरपि कुत्स्यत्वेन शरीरमनुचिन्तयन्नाह,—

अट्ठिं च चम्म च तहेव मंसं पित्तं च सिंभं तह सोणिदं च ।
अमेज्झसंघायमिणं सरीरं पस्संति णिव्वेदगुणाणुपेहि ८२

अस्थीनि च चर्म च तथैव मांसं पित्तं च श्लेष्मा तथा शोणितं च ।
अमेध्यसंघातमिदं शरीरं पश्यंति निर्वेदगुणानुप्रेक्षिण. ॥ ८२ ॥

तथा;—

**अट्ठिणिछण्णं णालिणिबद्धं कलिमलभरिदं किमिउलपुण्णं**
**मंसविलित्तं तयपडिछण्णं सरीरघरं तं सददमचोक्खं ८३**

**अस्थिनिच्छन्नं नालिनिबद्धं कलिमलभृतं कृमिकुलपूर्णं।**
**मांसविलिप्तं त्वक्प्रतिच्छन्नं शरीगृहं तत् सततमचौक्ष्यं॥ ८३ ॥**

**टीका**—*पूर्वग्रन्थेनोपकरणं प्रतिपादितं यत्तच्छरीरे नियोजयन्नाह अस्थिभिर्निच्छादितं संवृतं, नालिकाभिः शिराभिर्निबद्धं संघटितं, कलिमलभृतं सर्वाशुचिद्रव्यपूर्णं, कृमिकुलनिचितं, मांसविलिप्तं मांसेनोपचितं, त्वक्प्रच्छादितं दर्शनीयपथं नीतं, शरीरगृहं तत्सततं सर्वकालमचौक्ष्यमशुचि, नात्र पौनरुक्त्यदोष आशंकनीयः पर्यायार्थिकशिष्यानुग्रहणादथवाऽमेध्यगृहं पूर्वं सामान्येन प्रतिपादितं तस्य वार्त्तिकरूपेणेदं तदाऽशुचित्वं सामान्येनोक्तं तस्य च प्रपंचनार्थं वैराग्यातिशयप्रदर्शनार्थं च यत इति॥ ८३ ॥

ईदृग्भूते शरीरे मुनयः किं कुर्वन्तीत्याशंकायामाह;—

**एदारिसे सरिरे दुग्गंधे कुणिमपूदियमचोक्खे।**
**सडणपडणे असारे रागं ण करिंति सप्पुरिसा॥ ८४ ॥**

**एतादृशे शरीरे दुर्गंधे कुणपपूतिके अचौक्ष्ये ।**
**सडनपतने असारे रागं न कुर्वंति सत्पुरुषाः॥ ८४ ॥**

**टीका**—एतादृशे शरीरे ईदृग्भूते देहे दुर्गन्धे कुणपपूतिके कश्मलेन कुथिते शुचित्वेन विवर्जिते शुचिविवर्जिते शतनपतनेऽसारे रागं स्नेहं न कुर्वते सत्पुरुषाः साधव इति॥ ८४ ॥

---

* पुष्पमध्यगतः पाठः प्रेस–पुस्तके नास्ति।

उज्झनशुद्धिसूत्रमाह,—

**जं वंतं गिहवासे विसयसुहं इंदियत्थपरिभोए।**
**तं खु ण कदाइभूदो भुंजंति पुणो वि सप्पुरिसा॥ ८५॥**

यत् वांतं गृहवासे विषयसुखं इंद्रियार्थपरिभोगात्।
तत् खलु न कदाचिद्भूतं भुंजते पुनरपि सत्पुरुषाः॥ ८५॥

टीका—यत्किंचिद्वांतं त्यक्तं गृहवासे विषयसुखं गार्हस्थ्यं रूपरसगन्धस्पर्शशब्दादिभूतं जीवसंतर्पणकारणमिन्द्रियार्थमिन्द्रियकारणेन जनितं परिभोगाश्च ये च स्त्र्यादिका वान्ताः परिभोगनिमित्तं वा तत्सुखं तानिन्द्रियार्थान् तांश्च परिभोगान् खलु स्फुटं कदाचिदपि भूदो—भूतं समुपस्थितं केनचित्कारणान्तरेण न भुंजते न परिभोगयन्ति सत्पुरुषाः साधवः, यद्वान्तं विषयसुखं तदेव केनचित्कारणान्तरेण समुपस्थितं यदि भवेत्तदापि सत्पुरुषा न भुंजते न सेवन्त इति॥८५॥

तथा,—

**पुव्वरदिकेलिदाइं जा इड्ढी भोगभोयणविहिं च।**
**ण वि ते कहंति कस्स वि ण वि ते मणसा विचिंतंति॥८६॥**

पूर्वरतिक्रीडितानि यानि ऋद्धिं भोगभोजनविधिं च।
नापि ते कथयंति कस्यापि नापि ते मनसा विचिंतयंति॥८६॥

उज्झनशुद्धिं व्याख्याय वाक्यशुद्धिं निरूपयन्नाह;—

**भासं विणयविहूणं धम्मविरोही विवज्जए वयणं ।**
**पुच्छिदमपुच्छिदं वा ण वि ते भासंति सप्पुरिसा ॥८७॥**

**भाषां विनयविहीनां धर्मविरोधि विवर्जयंति वचनं ।**
**पृष्टमपृष्टं वा नापि ते भाषंते सत्पुरुषाः ॥ ८७ ॥**

**टीका**—भाषां वचनप्रवृत्तिमार्यां कर्णाटिकां गौडीं लाटीं विनयविहीनां खरपरुषादिसमन्वितां वर्जयन्ति, वचनं धर्मविरोधि रम्यमपि वचनं धर्मप्रातिकूलं वर्जयन्ति,अन्यदपि यद्विरुद्धं पृष्टाः संतोऽपृष्टाश्च परेण नियुक्ता आनियुक्ताश्च न ते सत्पुरुषा भाषंते ब्रुवत इति ॥ ८७ ॥

कथं तर्हिं तिष्ठन्तीत्याशंकायामाह;—

**अच्छीहिंय पेच्छंता कण्णेहिंय बहुविहाइं सुणमाणा ।**
**अत्थंति मूयभूया ण ते करंति हु लोइयकहाओ ॥८८॥**

**अक्षिभिः पश्यंतः कर्णैः बहुविधानि शृण्वंतः।**
**तिष्ठंति मूकभूता न ते कुर्वंति हि लौकिककथाः ॥ ८८ ॥**

**टीका**—अक्षिभिर्नयनैः पश्यन्तो निरूपयन्तः सद्रूपमसद्रूपं वा योग्यमयोग्यं च वस्तुजातं निरूपयन्तोऽपि दृष्टिरहिता इव तिष्ठंति, कर्णैः श्रोत्रेन्द्रियैर्बहुविधानि श्रव्याणि युक्तान्ययुक्तानि च शृण्वन्तो नानाप्रकारशब्दान् कर्णशष्कुल्या गृह्णन्तोऽपि तिष्ठंति मूकभूता इव जिह्वानयनकर्णरहिता इव, न ते मुनयो व्यक्तं कुर्वन्ति लौकिकीः कथा लोकव्यापारानिति ॥ ८८ ॥

कास्ता लौकिक्यः कथा इत्याशंकायामाह;—

**इत्थिकहा अत्थकहा भत्तकहा खेडकव्वडाणं च ।**
**रायकहा चोरकहा जणवदणयरायरकहाओ ॥ ८९ ॥**

निताजनाधिष्ठितं, स देशो रम्यः सुलभान्नपानो मनोहरवेषः प्रचुरगन्धमाल्यादिकः सर्वभाषाविदग्धमतिरित्येवमादिवचनप्रबंधो जनपदनगराकरकथाः, तासु कथासु न रज्यंति धीरा इत्युत्तरेण संबंधः ॥ ८९ ॥

तथा;—

**णडभडमल्लकहाओ मायाकरजल्लमुट्ठियाणं च ।**
**अज्जउलल्लंघियाणं कहासु ण वि रज्जए धीरा ॥ ९० ॥**

**नटभटमल्लकथाः मायाकरजल्लमुष्टिकयोश्च ।**
**आर्याकुलल्लंघिकानां कथासु नापि रज्यंते धीराः ॥ ९० ॥**

**टीका**—नटा भरतपुत्रका रंगोपजीविनः, भटा युद्धसमर्थाः सहस्रादीनां जेतारः, मल्ला अंगयुद्धसमर्थो अनेककच्छपबंधादिकरणसमर्थाः, मायां महेन्द्रजालादिकं प्रतारणं कुर्वन्तीति मायाकरा मायाकृतरंगोपजीविनः, जल्ला मत्स्यबधाः शाकुनिकाश्च षट्टिकाम्लेच्छादयश्च, मुष्टिका द्यूतकारा द्यूतव्यसनिनः, अज्जउला—आर्या कुलमाम्नायो दुर्गा येषां ते आर्यकुला हस्तपादशिरःशरीरावयवभेदेन कुशला दुर्गपुत्रिका जीवहिंसनरता अथवा अजाविकारक्षकाः सर्वपशुपालाश्च लंघिका वरत्रवेणूपरिनृत्तकुशला इत्येवमादीनां याः कथास्तद्व्यापारकरणं सरागचेतसा स शोभनतरोऽशोभनतरो वा कुशलोऽकुशलो वेत्येवमादयस्तासु कथासु पूर्वोक्तासु नैव रज्यंति नैवानुरागं कुर्वन्ति धीरा वैराग्यपरा इति ॥ ९० ॥

न केवलं कथा वचनेन वर्जयंति किं तु मनसाऽपि न कुर्वन्तीत्याह;—

**विकहा विसोत्तियाणं खणमवि हिदएण ते ण चिंतंति ।**
**धम्मे लद्धमदीया विकहा तिविहेण वज्जंति ॥ ९१ ॥**

---

१ लंपाका प्रेसपुस्तके ।

विकथा विश्रुतीन् क्षणमपि हृदयेन ते न चिंतयंति ।
धर्मे लब्धमतयः विकथाः त्रिविधेन वर्जयंति ॥ ९१ ॥

टीका—स्त्र्यर्थभक्तादिविकथाः स्त्रीभक्तचौरराजकथाः विश्रुतिकथाश्च सम्य-ग्दर्शनज्ञानचारित्रतपसां प्रतिकूलवचनानि तत्प्रतिपक्षपरिणामांश्च क्षणमपि नयनोन्मेषमात्रमपि हृदयेन चेतसा न ते मुनयश्चिन्तयंति न व्यवस्थापयंति धर्मे धर्मविषये लब्धमतयो यतो विकथास्त्रिप्रकारेण मनोवाक्कायैर्वर्जयन्तीति॥ ९१॥

तथा;—

**कुक्कय कंदप्पाइय हासं उल्लावणं च खेडं च ।**
**मददप्पहत्थवट्टिं ण करेंति मुणी ण कारेंति ॥ ९२ ॥**

कौत्कुच्यं कंदर्पायितं हास्यं उल्लापनं च खेडं च ।
मददर्पहस्तताडनं न कुर्वंति मुनयः न कारयंति ॥ ९२ ॥

टीका—कुक्कय—कौत्कुच्यं हृदयकंठाभ्यामव्यक्तशब्दकरणं, कंदप्पाइय—कंदर्पायितं कामोत्पादकवचनान्यथवा रागोद्रेकात्प्रहासमिश्राशिष्टवाक्प्रयोगः कंदर्पः, हासं—हास्यमुपहास्यवचनानि, उल्लावणं—अनेकवैरस्वजनसम्भाषणं, खेडं चोपहासवचनं अङ्गुष्ठद्वयेन परप्रतारणं, मददर्पेण हस्तेनान्योन्यताडनं न मुनयो न कुर्वन्ति न कारयंति नाऽप्यनुमन्यन्ते च ॥ ९२ ॥

यतः;—

**ते होंति णिव्वियारा थिमिदमदी पदिट्ठिदा जहा उदधी ।**
**णियमेसु दढव्वदिणो पारत्तविमग्गया समणा ॥ ९३ ॥**

ते भवंति निर्विकाराः स्तिमितमतयः प्रतिष्ठिता यथा उदधिः ।
नियमेषु दृढव्रतिनः पारत्र्यविमार्गकाः श्रमणाः ॥ ९३ ॥

टीका—तस्मात्ते साधवो भवंति निर्विकाराः सविकारविकासचेष्टा-रहिताः, स्तिमितमतयोऽनुद्धतचेष्टासंकल्पाः, प्रतिष्ठिता यथोदधिः समुद्र

इवागाधा अक्षोभाश्च, नियमेषु षडावश्यकादिक्रियासु दृढव्रतिनोऽभग्नगृहीतानवग्रहविशेषाः, पारत्र्याविमार्गकाः परलोकं प्रति सूद्यतसमस्तकार्या इहलोकं निरतिचारं परलोकं सम्यग्विधानेनात्मनः परेषां च निरूपयंतीति ॥ ९३ ॥

कथंभूतास्तर्हि कथाः कुर्वन्तीत्याशंकायामाह;—

**जिणवयणभासिदत्थं पत्थं च हिदं च धम्मसंजुत्तं ।**
**समओवयारजुत्तं पारत्तहिदं कधं करेंति ॥ ९४ ॥**

**जिनवचनभाषितार्थां पथ्यां च हितां च धर्मसंयुक्तां ।**
**समयोपचारयुक्तां पारत्र्यहितां कथां कुर्वंति ॥ ९४ ॥**

**टीका**—जिनवचनेन वीतारागागमेन भाषितः प्रतिपादितोऽर्थो विषयो यस्याः सा जिनवचनभाषितार्था रत्नत्रयप्रतिपादनसमर्था तां कथां कुर्वते । पुनरपि पथ्यां हितां च धर्मसंयुक्तां समयोपचारयुक्तामागमविनयसहितां परलोकं प्रति हितां कुर्वते । *यद्यपि विषयसुखविवर्जनेन कापुरुषाणामनिष्टा तथापि विपाककाले पथ्यौषधवत् । तथा *यद्यपि जीवप्रदेशसंतापकरणेन न हिता तथापि सम्यगाचरणनिरता । तथा यद्यपि विनयतन्निष्ठा तथापि श्रुतज्ञानप्रतिकूला न भवति तर्कव्याकरणसिद्धांतचरितपुराणादिप्रतिपादिका वा कथा तां कुर्वत इति ॥ ९४ ॥

ये कथामेवंविधां कुर्वन्ति ते किम्भूता इत्याशंकायामाह;—

**सत्ताधिय सप्पुरिसा मग्गं मण्णंति वीदरागाणं ।**
**अणयारभावणाए भावेंति य णिच्चमप्पाणं ॥ ९५ ॥**

**सत्त्वाधिकाः सत्पुरुषा मार्गं मन्यंते वीतरागाणां ।**
**अनगारभावनया भावयंति च नित्यमात्मानम् ॥ ९५ ॥**

**टीका**—सत्वाधिकाः सर्वोपसर्गैरप्यकंप्यभावाः, सत्पुरुषाः यथोक्तचरित

त्पतद्धिमं। किंविशिष्टं तद्धिमरजः? नलिनीवनविनाशकं अग्निर्नीखंडदहनसमर्थं, उपलक्षणमात्रमेतत् तेन सर्वभूतविनाशकरणसमर्थं सहन्त इति ॥ ९७ ॥

अभ्रावकाशं व्याख्यायातापनस्वरूपमाह;—

**जल्लेण मइलिदंगा गिह्मे उण्णादवेण दड्ढंगा ।**
**चेट्ठंति णिसिट्ठंगा सूरस्स य अहिमुहा सूरा ॥ ९८ ॥**

**जल्लेन मलिनांगा ग्रीष्मे उष्णातपेन दग्धांगाः ।**
**तिष्ठंति निसृष्टांगा सूर्यस्य च अभिमुखं शूराः ॥ ९८ ॥**

**टीका**—जल्लं सर्वांगोद्भूतमलं तेन मलिनांगा वल्मीकसमाना निःप्रतीकारदेहाः; ग्रीष्मे प्रचंडमार्तंडगभस्तिहस्तशोषिताशेषार्द्रभावे दवदहनसमानतृष्णाक्रांतसमस्तजीवराशौ उष्णातपेन दीप्यमानकिरणजालैर्दग्धांगा दग्धकाष्ठसमानशरीरास्तिष्ठंति। निसृष्टांगाः कायोत्सर्गेणाचलितशरीरावयवाः सूरस्य धगधगायमानादित्यस्याभिमुखं शूरा मनागपि न संक्लेशमुद्वहंति शीतह्रदे प्रविष्टा इव संतिष्ठंत इति ॥ ९८ ॥

वृक्षमूलं निरूपयन्नाह;—

**धारंधयारगुविलं सहंति ते वादवाद्दलं चंडं ।**
**रत्तिंदियं गलंतं सप्पुरिसा रुक्खमूलेसु ॥ ९९ ॥**

**धारांधकारगहनं सहंते ते वातवार्दलं चंडं ।**
**रात्रिंदिवं गलत् सत्पुरुषा वृक्षमूलेषु ॥ ९९ ॥**

**टीका**—तथा प्रावृट्काले जलपूरिताशेषमार्गे गर्जत्पर्जन्यघोराशनिरवबधिरितादिगंते वृक्षमूलेऽनेकसर्पाकीर्णे चंडं रौद्रं वातं वार्द्दलं च प्रवर्षणशीलं मेघजालं च सहंते सम्यगध्यासते। किंविशिष्टं? जलधारांधकारगहनं। पुनरपि किंविशिष्टं? रात्रिंदिवं च क्षरन्मुशलप्रमाणपतद्धाराभिर्वर्षद्वृक्षमूले वसंति सहंते च सत्पुरुषाः, न मनागपि चित्तक्षोभं कुर्वन्तीति ॥ ९९ ॥

तत्र स्थिताः परीषहाँश्च जयंतीत्याह;—

**वादं सीदं उण्हं तण्हं च छुधं च दंसमसयं च।**
**सव्वं सहंति धीरा कम्माण खयं करेमाणा ॥ १०० ॥**

**वातं शीतं उष्णं तृष्णां च क्षुधां च दंशमशकं च।**
**सर्वं सहंते धीराः कर्मणां क्षयं कुर्वाणाः ॥ १०० ॥**

**टीका**—एवं त्रिकालयोगिनः संतो वातं विनाशिताशेषतरुसमूहं सहंते तथा शीतं सहंते तथोष्णं शोषिताशेषवनसरित्समुद्रं सहंते तथा तृष्णां संतापिताशेषांगावयवां सहंते तथा क्षुधा महाप्रलयकालसमुत्थिताग्निस्वरूपां सहंते तथा दंशमशककृतोपद्रवं सहंते तथा सर्पवृश्चिकपिपीलिकावराहादिकृतोपद्रवं च सहंते, किं बहुना सर्वमप्युपसर्गजातं कर्मणां क्षयं कुर्वाणाः सहंते न तंत्रमंत्रनिमित्तं नेहलौकिकसुखनिमित्तं नापि परलोकभोगाकांक्षयेति ॥ १०० ॥

एवं कायभवं क्लेशसहनं निरूप्य वाग्भवं क्लेशसहनं निरूपयन्नाह;—

**दुज्जणवयण चडयणं सहंति अच्छोड सत्थपहरं च।**
**ण य कुप्पंति महरिसी खमणगुणवियाणया साहू॥१०१॥**

**दुर्जनवचनं चटचटत् सहंते पैशून्यं शस्त्रप्रहारं च।**
**न च कुप्यंति महर्षयः क्षमणगुणविज्ञानकाः साधवः ॥१०१॥**

**टीका**—दुष्टो जनो दुर्जनस्तस्य वचनं दुर्जनवचनं सर्वप्रकारेणापवादग्रहणशीलमिथ्यादृष्टिखरपरुषवचनं, चटचटत्तप्तलोहस्फुलिंगसमानं सर्वजीवप्रदेशतापकरं, सहंते न क्षोभं गच्छन्ति, अछोडं पैशून्यवचनं असद्दोषोद्भावनप्रवणमथवा अछोडणं लोष्ठलगुडादिभिस्ताडनं, शस्त्रप्रहारं खड्गादिभिर्घातं च सहंते, इति सर्वमेतत्सहंते न च तेभ्य उपद्रवकारिभ्यः कुप्यन्ति, महर्षयः क्षमागुणविज्ञानकाः श्रमणाः सर्वप्रकारैः सहनशीलाः क्रोधादिवशं न गच्छन्तीति ॥ १०१ ॥

१ विसहन्ते ख. ग.।

अन्यच्च,—

**जइ पंचिंदियदमओ होज्ज जणो रूसिदव्वय णियत्तो ।**
**तो कदरेण कयंतो रूसिज्ज जए मणूयाणं ॥ १०२ ॥**

**यदि पंचेंद्रियदमको भवेत् जनः रोषादिभ्यः निवृत्तः ।**
**ततः कतरेण कृतांतः रुष्येत् जगति मनुजेभ्यः ॥ १०२ ॥**

**टीका**—यदि पंचेन्द्रियदमकः पंचेन्द्रियनिग्रहरतो भवेज्जनस्तदा स रोषा-द्भिभ्यो निवृत्तश्च जनो भवेत्ततः कतरेण कारणेन कृतांतो मृत्यू रुष्येत् कोपं कुर्याज्जगति मनुष्येभ्योऽथवा कृतांत आगमस्तत्साहचर्याद्यातिरपि कृतांत इत्युच्यते तत एवं संबंधः क्रियते यदि सामान्यजनोऽपि पंचेन्द्रियनिग्रहरतो भवेत्तत रोषान्निवृत्तः क्रोधादिकं न करोति कृतांतो यतिः पुनः कतरेण कार-णेन सूपद्रवकारिभ्यो मनुष्येभ्यो रुष्येत्कोपं कुर्यात् ? तस्मात्क्षमागुणं जानता चारित्रं सम्यग्दर्शनं चाभ्युपगच्छता न रोषः कर्त्तव्यः ॥ १०२ ॥

अन्यच्च,—

**जदि वि य करेंति पावं एदे जिणवयणबाहिरा पुरिसा ।**
**तं सव्वं सहिदव्वं कम्माण खयं करंतेण ॥ १०३ ॥**

**यद्यपि च कुर्वंति पापं एते जिनवचनबाह्याः पुरुषाः ।**
**तत् सर्वं सोढव्यं कर्मणां क्षयं कुर्वता ॥ १०३ ॥**

**टीका**—यद्यपि च पूर्वकर्मोदयवशात्कुर्वन्ति पापं वधबन्धनादिकं रौद्रं कर्मैते जिनवचनबाह्याः पुरुषा मिथ्यात्वासंयमकषायाभिरताः सर्वमदगर्विताः, तत्सर्वमुपसर्गजातं सहनीयं सम्यग्विधानेनाध्यासितव्यमध्यासयेत् । कर्मणां क्षयं पूर्वार्जितकर्मफलक्षयं कुर्वताऽऽत्मना सह कर्मणां विश्लेषं कुर्वता सम्यग्द-र्शनादिभिरात्मानं भावयतेति ॥ १०३ ॥

---

१–२ ख–ग–पुस्तके न स्तः ।

तत्र स्थिताः परीषहाँश्च जयंतीत्याह;—

**वादं सीदं उण्हं तण्हं च छुधं च दंसमसयं च।**
**सव्वं सहंति धीरा कम्माण खयं करेमाणा ॥ १०० ॥**

**वातं शीतं उष्णं तृष्णां च क्षुधां च दंशमशकं च।**
**सर्वं सहंते धीराः कर्मणां क्षयं कुर्वाणाः ॥ १०० ॥**

**टीका**—एवं त्रिकालयोगिनः संतो वातं विनाशिताशेषतरुसमूहं सहंते तथा शीतं सहंते तथोष्णं शोषिताशेषवनसरित्समुद्रं सहंते तथा तृष्णां संतापिताशेषांगावयवां सहंते तथा क्षुधां महाप्रलयकालसमुत्थिताग्निस्वरूपां सहंते तथा दंशमशककृतोपद्रवं सहंते तथा सर्पवृश्चिकपिपीलिकावराहादिकृतोपद्रवं च सहंते, किं बहुना सर्वमप्युपसर्गजातं कर्मणां क्षयं कुर्वाणाः सहंते न तत्रमंत्रनिमित्तं नेहलौकिकसुखनिमित्तं नापि परलोकभोगाकांक्षयेति ॥ १०० ॥

एवं कायभवं क्लेशसहनं निरूप्य वाग्भवं क्लेशसहनं निरूपयन्नाह;—

**दुज्जणवयण चडयणं सहंति अच्छोड सत्थपहरं च।**
**ण य कुप्पंति महरिसी खमणगुणवियाणया साहू॥१०१॥**

**दुर्जनवचनं चटचटत् सहंते पैशून्यं शस्त्रप्रहारं च।**
**न च कुप्यंति महर्षयः क्षमणगुणविज्ञानकाः साधवः ॥१०१॥**

**टीका**—दुष्टो जनो दुर्जनस्तस्य वचनं दुर्जनवचनं सर्वप्रकारेणापवादग्रहणशीलमिथ्यादृष्टिखरपरुषवचनं, चटचटत्तप्तलोहस्फुलिंगसमानं सर्वजीवप्रदेशतापकरं, सहंते न क्षोभं गच्छन्ति, अछोडं पैशून्यवचनं असद्दोषोद्भावनप्रवणमथवा अछोडणं लोष्ठलगुडादिभिस्ताडनं, शस्त्रप्रहारं खड्गादिभिर्घातं च सहंते, इति सर्वमेतत्सहंते न च तेभ्य उपद्रवकारिभ्यः कुप्यन्ति, महर्षयः क्षमागुणविज्ञानकाः श्रमणाः सर्वप्रकारैः सहनशीलाः क्रोधादिवशं न गच्छन्तीति ॥ १०१ ॥

---

१ विसहन्ते ख. ग.।

अन्यच्च,—

**जइ पंचिंदियदमओ होज्ज जणो रूसिदव्वय णियत्तो ।**
**तो कदरेण कयंतो रूसिज्ज जए मणूयाणं ॥ १०२ ॥**

**यदि पंचेंद्रियदमको भवेत् जनः रोषादिभ्यः निवृत्तः ।**
**ततः कतरेण कृतांतः रुष्येत् जगति मनुजेभ्यः ॥ १०२ ॥**

**टीका**—यदि पंचेन्द्रियदमकः पंचेन्द्रियनिग्रहरतो भवेज्जनस्तदा स रोषादिभ्यो निवृत्तश्च जनो भवेत्ततः कतरेण कारणेन कृतांतो मृत्यू रुष्येत् कोपं कुर्याज्जगति मनुष्येभ्योऽथवा कृतांत आगमस्तत्साहचर्याद्यतिरपि कृतांत इत्युच्यते तत एवं संबंधः क्रियते यदि सामान्यजनोऽपि पंचेन्द्रियनिग्रहरतो भवेत्तत रोषान्निवृत्तः क्रोधादिकं न करोति कृतांतो यतिः पुनः कतरेण कारणेन सूपद्रवकारिभ्यो मनुष्येभ्यो रुष्येत्कोपं कुर्यात् ? तस्मात्क्षमागुणं जानता चारित्रं सम्यग्दर्शनं चाभ्युपगच्छता न रोषः कर्त्तव्यः ॥ १०२ ॥

अन्यच्च;—

**जादि वि य करेंति पावं एदे जिणवयणबाहिरा पुरिसा ।**
**तं सव्वं सहिदव्वं कम्माण खयं करंतेण ॥ १०३ ॥**

**यद्यपि च कुर्वंति पापं एते जिनवचनबाह्याः पुरुषाः ।**
**तत् सर्वं सोढव्यं कर्मणां क्षयं कुर्वता ॥ १०३ ॥**

**टीका**—यद्यपि च पूर्वकर्मोदयवशात्कुर्वन्ति पापं वधबन्धनादिकं रौद्रं कर्मैते जिनवचनबाह्याः पुरुषा मिथ्यात्वासंयमकषायाभिरताः सर्वमदगर्विताः, तत्सर्वमुपसर्गजातं सहनीयं सम्यग्विधानेनाध्यासितव्यमध्यासयेत् । कर्मणां क्षयं पूर्वार्जितकर्मफलक्षयं कुर्वताऽऽत्मना सह कर्मणां विश्लेषं कुर्वता सम्यग्दर्शनादिभिरात्मानं भावयतेति ॥ १०३ ॥

---

१–२ ख–ग–पुस्तके न स्तः ।

पुनरपि कषायविजयमाह;—

**लद्धूण इमं सुदणिहिं ववसायविइज्जियं तह करेह ।**
**जह सुग्गइचोराणं ण उवेह वसं कसायाणं ॥ १०४ ॥**

**लब्ध्वा इमं श्रुतनिधिं व्यवसायद्वितीयं तथा कुरुत ।**
**यथा सुगतिचौराणां नोपेत वशं कषायाणां ॥ १०४ ॥**

**टीका**—लब्ध्वा सम्यगवाप्येमं श्रुतनिधिं द्वादशांगचतुर्दशपूर्वरत्ननिधानं व्यवसायेन चारित्रतपसोद्योगेन सह द्वितीयं तथा कुरुत तेन प्रकारेण यतध्वं, यथा सुगतिचौराणां मोक्षमार्गविनाशकानां[1] कषायाणां वशं नोपेत तथा यतध्वं येषाञ्च रत्नत्रयविनाशकानां क्रोधादीनां वशं न गच्छेतेति[2] ॥ १०४ ॥

तपःशुद्धिस्वामिनः प्रतिपादयन्नाह,—

**पंचमहव्वयधारी पंचसु समिदीसु संजदा धीरा ।**
**पंचिंदियत्थविरदा पंचमगइमग्गया सवणा ॥ १०५ ॥**

**पंचमहाव्रतधारिणः पंचसु समितिषु संयता धीराः ।**
**पंचेंद्रियार्थविरताः पंचमगतिमार्गकाः श्रमणाः ॥ १०५ ॥**

**टीका**—पंचमहाव्रतधारिणो जीवदयादिगुणकलिताः पंचसु समितिषु संयताः पंचसमितिसंयुक्तास्तासु वा व्यवस्थिता धीरा अकंपभावमुपगताः पंचेन्द्रियार्थेभ्यो विरता जितेन्द्रियाः पंचमगतिं सिद्धगतिं मृगयमाणा अनंतचतुष्टयेनात्मानं योजयंतः श्रवणा इत्थंभूतास्तपःशुद्धेः कर्त्तारो भवन्ति ॥ १०५ ॥

तथा;—

**ते इंदिएसु पंचसु ण कयाइ पुणो वि बंधंति ।**
**उण्हेण व हारिद्दं णस्सदि राओ सुविहिदाणं ॥ १०६ ॥**

---

१ विनाशिनां ख. ग. । २ गच्छन्ति ग. गच्छन्तु प्रेस-पुस्तके ।

**त इंद्रियेषु पंचसु न कदाचित् रागं पुनरपि बध्नंति ।**
**उष्णेन इव हारिद्रो नश्यति रागः सुविहितानां ॥ १०६ ॥**

**टीका**—ते पूर्वोक्ताः श्रमणा इन्द्रियेषु पंचसु रागं कदाचिदपि न पुनर्बध्नंति यतस्तेषां सुविहितानां शोभनानुष्ठानानां नश्यति रागो यथोष्णेन हारिद्रो रागः । किमुक्तं भवति ? यद्यपि कदाचिद्रागः स्यात्तथापि पुनरनुबन्धं न कुर्वन्ति पश्चात्तापेन तत्क्षणादेव विनाशमुपयाति हरिद्रारक्तवस्त्रस्य पीतप्रभा रविकिरणस्पृष्टेवेति ॥ १०६ ॥

तपःशुद्धिं निरूप्य ध्यानशुद्धिं निरूपयंस्तावत्तदर्थमिन्द्रियजयमाह;—

**विसएसु पधावंता चवला चंडा तिदंडगुत्तेहिं ।**
**इंदियचोरा घोरा वसम्मि ठविदा ववसिदेहिं ॥ १०७॥**

**विषयेषु प्रधावंतश्चपलाश्चंडाः त्रिदंडगुप्तैः ।**
**इंद्रियचौरा घोराः वशे स्थापिता व्यवसितैः ॥ १०७ ॥**

**टीका**—विषयेषु रूपरसगन्धस्पर्शशब्देषु प्रधावंतः प्रसरन्तः, चपलाः स्थैर्यवर्जिताः, चंडाः कोपं गच्छन्तः, इन्द्रियचौरास्त्रिदंडगुप्तैर्मनोवाक्कायसंयुतैः व्यवसितैश्चारित्रयोगतन्निष्ठैर्वशे व्यवस्थापिताः स्ववशं नीताः सुष्ठु घोरा यद्यपि तथापि प्रलयं प्रापिता मुनिभिरिति ॥ १०७ ॥

दृष्टान्तद्वारेण मनोनिग्रहस्वरूपमाह;—

**जह चंडो वणहत्थी उद्दामो णयररायमग्गम्मि ।**
**तिक्खंकुसेण धरिदो णरेण दिढसत्तिजुत्तेण ॥ १०८॥**

**यथा चंडो वनहस्ती उद्दामो नगरराजमार्गे ।**
**तीक्ष्णांकुशेन धृतः नरेण दृढशक्तियुक्तेन ॥ १०८ ॥**

**टीका**—यथा येन प्रकारेण चंडो गलत्त्रिगंडप्रजातप्रकोपो वनहस्ती उद्दामः

शृंखलादिबंधनरहितो नगरराजमार्गे दृढशक्तियुक्तेन नरेण तीक्ष्णांकुशेन करणभूतेन धृत आत्मवशे स्थापित इति ॥ १०८ ॥

एवम्,—

**तह चंडो मणहत्थी उद्दामो विषयराजमग्गम्मि ।**
**णाणंकुसेण धरिदो रुद्धो जह मत्तहत्थिव्व ॥ १०९ ॥**

**तथा चंडो मनोहस्ती उद्दामो विषयराजमार्गे ।**
**ज्ञानांकुशेन धृतो रुद्धो यथा मत्तहस्ती खलु ॥ १०९ ॥**

**टीका**—तथा तेनैव प्रकारेण चंडो नरकगत्यादिषु नराणां प्रक्षेपणपरो मनोहस्ती उद्दामः संयमादिशृंखलादिरहितो विषयराजमार्गे रूपादिविषयराजवर्त्मनि धावन् ज्ञानांकुशेन पूर्वापरविवेकविषयावबोधांकुशेन धृत आत्मवशं नीतः, यथा मत्तहस्ती रुद्धः सन्न किंचित्कर्तुं समर्थो यत्र नीयते हस्तिपकेन तत्रैव याति एवमेव यतिना मनोहस्ती रुद्धः सन् यत्र व्यवस्थाप्यते तत्रैव तिष्ठति वशीभूतः सन्निति ॥ १०९ ॥

तथा;—

**ण च एदि विणिस्सरिदुं मणहत्थी झाणवारिबंधणिदो ।**
**बद्धो तह य पयंडो विरायरज्जूहि धीरेहिं ॥ ११० ॥**

**न चैति विनिस्सर्तुं मनोहस्ती ध्यानवारिबंधनीतः ।**
**बद्धस्तथा च प्रचंडः विरागरज्जुभिः धीरैः ॥ ११० ॥**

**टीका**—यथा रुद्धः सन् मत्तहस्ती वारिबंधेन न शक्नोति विनिःसर्तुं निर्गन्तुं न समर्थस्तथा मनोहस्ती ध्यानवारिबंधनं नीतः प्रापितोऽतिशयेन प्रचंडो विरागरज्जुभिर्बद्धो वैराग्यादिवरत्राभिर्धीरैः संयमितो निर्गन्तुं न शक्नोतीति ॥ ११० ॥

ध्यानार्थं नगरं प्राकारादिसमन्वितं रचयन्नाह;—

**धिदिधणिदणिच्छिदमदी चरित्त पायार गोउरं तुंगं ।**
**खंतीसुकहकवाडं तवणयरं संजमारक्खं ॥ १११ ॥**

**धृत्यतिशयनिश्चितमतिः चारित्रं प्राकारं गोपुरं तुंगं ।**
**क्षांतिसुकृतकपाटं तपोनगरं संयमारक्षम् ॥ १११ ॥**

**टीका**—धृतिः संतोषादिस्तस्यामत्यर्थं निश्चितं मतिज्ञानं धृत्यतिशयनिश्चितमतिर्धैर्योत्साहतत्वरुचिसमन्वितविवेकः चारित्रं त्रयोदशप्रकारपापक्रियानिवृत्तिः, प्राकारः पाषाणमय इष्टकामयो वा परिक्षेपः, गोपुरं तुंगं नगरस्य महद्द्वारमुत्तुङ्गकूटं यथासंख्येन संबंधः । धृत्यतिशयितानिश्चितमतिरेव प्राकारो यत्र नगरे तत्तथाभूतं तथा चारित्रमेव गोपुरमुत्तुंगं यत्र तच्चारित्रगोपुरोत्तुंगं । क्षांतिरुपशमः सुकृतं धर्मः क्षांतिसुकृते कपाटे यस्य तत् क्षांतिसुकृतकपाटमथवा क्षान्तिरेव सुयंत्रितकपाटं तत्र, तपोनगरं, संयमो द्विप्रकार आरक्षः कोट्टपालो यत्र तत्संयमारक्षं इन्द्रियसंयमप्राणसंयमाभ्यामारक्षकाभ्यां पाल्यमानमिति ॥ १११ ॥

कथं तद्रक्ष्यत इत्याशंकायामाह;—

**रागो दोसो मोहो इंदियचोरा य उज्जदा णिच्चं ।**
**ण च यंति पहंसेदुं सप्पुरिससुरक्खियं णयरं ॥ ११२ ॥**

**रागः द्वेषः मोहः इंद्रियचौराश्चोद्यता नित्यं ।**
**न शक्नुवन्ति प्रध्वंसयितुं सत्पुरुषसुरक्षितं नगरं ॥ ११२ ॥**

**टीका**—यद्यपि तन्नगरं प्रध्वंसायितुं विनाशयितुमुद्यताः सर्वकालं रागद्वेषमोहेन्द्रियचौरास्तथापि तत्तपोनगरं पूर्वोक्तविशेषणविशिष्टं न शक्नुवंति प्रध्वंसायितुं सत्पुरुषसुरक्षितनगरवत्, यथा महायोधैः सुरक्षितं सुदुर्गं सुयंत्रितं नगरं विनाशयितुं समर्थं न परचक्रमेवं तपोनगरं रागादयो न विनाशयितुं समर्था इति ॥ ११२ ॥

इदानीं ध्यानरथं प्रकटयन्नाह,—

**एदे इंदियतुरया पयडीदोसेण चोइया संता ।**
**उम्मग्गं णिंति रहं करेह मणपग्गहं बलियं ॥ ११३ ॥**

**एते इंद्रियतुरगाः प्रकृतिदोषेण चोदिताः संतः ।**
**उन्मार्गं नयंति रथं कुरुत मनःप्रग्रहं दृढं ॥ ११३ ॥**

**टीका**—एते इन्द्रियतुरगा इमानीन्द्रियाण्येवाश्वाः प्रकृत्या स्वभावेन दोषेण रागद्वेषाभ्यां च चोदिताः प्रेरिताः संत उन्मार्गं विषयाकुलाटवीं नयंति प्रापयंति धर्मध्यानरथं कुरुत मनःप्रग्रहं दृढं । यथा रश्मिनाऽश्वा नियंत्र्यंते वशीक्रियंते तथेन्द्रियाणि वशं स्थापयतैकाग्रमनोनिरोधप्रग्रहेण येन ध्यानं मार्गस्थं भवतीति ॥ ११३ ॥

रागद्वेषादीनां प्रतिपक्षभावनामाह,—

**रागो दोसो मोहो विदीय धीरेहि णिज्जिदा सम्मं ।**
**पंचेंदिया य दंता वदोववासप्पहारेहिं ॥ ११४ ॥**

**रागो द्वेषो मोहो वृत्या धीरैर्निर्जिताः सम्यक् ।**
**पंचेद्रियाणि च दांतानि व्रतोपवासप्रहारैः ॥ ११४ ॥**

**टीका**—धीरैः संयतै रागद्वेषमोहाः प्रीत्यप्रीतिमिथ्यात्वानि वृत्त्या दृढरत्न-त्रयभावनया निर्जिताः प्रहताः सम्यग्विधानेन पंचेन्द्रियाणि दांतानि स्ववशं नीतानि व्रतोपवासप्रहारैरिति ॥ १४ ॥

तत किम्;—

**दंतेंदिया महरिसी रागं दोसं च ते खवेदूणं ।**
**झाणोवजोगजुत्ता खवेंति कम्मं खविदमोहा ॥ ११५ ॥**

**दांतेंद्रिया महर्षयो रागं द्वेषं च ते क्षपयित्वा ।**
**ध्यानोपयोगयुक्ताः क्षपयंति कर्माणि क्षपितमोहाः ॥ ११५ ॥**

टीका—ततो दान्तेन्द्रियाः संतो महर्षयः शुद्धोपयोगयुक्ताः समीचीनध्यानोपगता रागं द्वेषं विकृतिं च क्षपयित्वा प्रलयं नीत्वा क्षपितमोहाः संतः कर्माणि क्षपयंति सर्वाणि यतः कषायमूलत्वात्सर्वेषामिति ॥ ११५ ॥

तदेवमाचष्टेऽनया गाथया;—

**अट्ठविहकम्ममूलं खविद कसाया खमादिजुत्तेहिं ।**
**उद्धदमूलो व दुमो ण जाइदव्वं पुणो अत्थि ॥ ११६ ॥**

**अष्टविधकर्ममूलं क्षपिताः कषायाः क्षमादियुक्तैः ।**
**उद्धृतमूल इव द्रुमो न जनितव्यं पुनरस्ति ॥ ११६ ॥**

टीका—अष्टविधस्य कर्मणो मूलं कारणं । किं ते ? कषायाः क्रोधादयस्तेषु सत्सु सर्वकर्मप्रकृतीनामवस्थानं ते चै कषायाः क्षमादियुक्तैः क्षमामार्दवार्जवसंतोषपरैः क्षपिता विनाशिताः पुनस्तेषामुत्पत्तिर्नास्ति यथोद्धृतमूलस्य द्रुमस्य निर्मूलितस्य वृक्षस्येव जनितव्यं नास्ति, यथोद्धृतमूलो वृक्षो न जायते कारणाभावात्तथा कर्मनिचयो न पुनरागच्छति कारणाभावादिति ॥ ११६ ॥

तस्मात्;—

**अवहट्ट अट्ट रुद्दं धम्मं सुक्कं च झाणमोगाढं ।**
**ण च एदि पधंसेदुं अणियट्टी सुक्कलेस्साए ॥ ११७ ॥**

**अपहृत्य आर्तं रौद्रं धर्मं शुक्लं च ध्यानमवगाढं ।**
**न च यंति प्रधर्षयितुं अनिवृत्ति शुक्लेश्यया ॥ ११७ ॥**

टीका—तस्मात्कषायनिर्मूलनायार्त्तध्यानं रौद्रध्यानं चापहृत्य परित्यज्य धर्मध्यानं शुक्लध्यानं च चिन्तयेति शेषः यतः समीचीनध्यानावगाढं शोभनध्याने निविष्टमानसं यतिं शुक्लेश्यया सहितं शुद्धयोगवृत्त्या समन्वितं अनिवृत्तिगुणस्थानगतं कषाया न शक्नुवंति न किंचित्कुर्वन्ति प्रधर्षयितुं कदर्थयितुं । अथ-

१ तेन प्रेस-पुस्तके । २ एवं ख-ग ।

वा "अणियट्टी" पदस्थाने "परीसहा" इति पाठस्तेन परीषहा न शक्नुवंति प्रधर्षयितुं ध्यानप्रविष्टं मुनिमिति ॥ ११७ ॥

पुनरपि ध्यानस्य स्थैर्यमाह,—

**जह ण चलइ गिरिराजो अवरुत्तरपुव्वदक्खिणेवाए।**
**एवमचलिदो जोगी अभिक्खणं झायदे झाणं ॥११८॥**

**यथा न चलति गिरिराजः अपरोत्तरपूर्वदक्षिणवातैः।**
**एवमचलितो योगी अभीक्ष्णं ध्यायति ध्यानं ॥ ११८ ॥**

**टीका**—यथा न चलति न स्थानाच्च्युतो भवति गिरिराजो मेरुः पूर्वपश्चिमदक्षिणोत्तरवातैः, एवमचलितो योगी सर्वोपसर्गादिभिरकंप्यभावोऽभीक्ष्णं निरन्तरं समयं समयं प्रत्यसंख्यातगुणश्रेणिकर्मनिर्जरां कुर्वन् ध्यायेत् ध्यानं समाधिमिति, यद्यप्यत्रैकवचनं जात्यपेक्षया तथापि बहुवचनं द्रष्टव्यं ध्यायंति ध्यानमिति ॥ ११८ ॥

तत एवं ध्यानं प्रध्याय,—

**णिट्ठविदकरणचरणा कम्मं णिद्धुद्धदं धुणित्ताय।**
**जरमरणविप्पमुक्का उवेंति सिद्धिं धुदकिलेसा॥११९॥**

**निष्ठापितकरणचरणाः कर्म निधत्तोद्धतं धूत्वा।**
**जरामरणविप्रमुक्ता उपयांति सिद्धिं धुतक्लेशाः ॥ ११९ ॥**

**टीका**—ततो ध्यानं संचिंत्य निष्ठापितकरणचरणाः परमोत्कर्षं प्रापिताः पंचमहाव्रतपंचसमितित्रिगुप्तिपंचनमस्कारषडावश्यकासिकानिषद्यका यैस्ते मुनयः कर्म निधत्तोद्धतं वद्धपुष्टं वद्धनिकांचितं सुष्ठु स्निग्धं सुष्ठु दुःखदायकं निर्धूतं निर्मूलतः सम्यक् धूत्वा प्रक्षिप्य जातिजरामरणमुक्ताः सिद्धिमनंतज्ञानदर्शनसुखवीर्यरूपामवस्थामुपयांति धुतक्लेशाः संत इति ॥ ११९ ॥

---

१ वद्धपुष्टवद्धनिकाचितं ग. । वद्धपुष्टनिकाचितं ख. ।

अनगाराणां पर्यायनामान्याह;—

**समणोत्ति संजदोत्ति य रिसि मुणि साधुत्ति वीदरागोत्ति ।**
**णामाणि सुविहिदाणं अणगार भदंत दंतोत्ति ॥ १२० ॥**

**श्रमण इति संयत इति च ऋषिर्मुनिः साधु इति वीतराग इति ।**
**नामानि सुविहितानां अनगारो भदंतः दांतो यतिः ॥ १२० ॥**

**टीका**—*यत्किंचन्मुनयः क्वचिद्दृषय इत्येवमादिप्रतिपादितास्तेषां कथं पर्यायनामान्यत आह*—श्रमण इति श्रमयंत्यात्मानं तपोभिरिति श्रमणाः, संयता इति संयमयंतीन्द्रियाणि कषायाँश्च संयताः, ऋषय इति चार्षयन्ति गमयंति सर्वपापानि ते ऋषयोऽथवार्षयन्ति प्राप्नुवंति सप्तर्द्धीरिति ऋषयः, मन्यंते बुध्यंते स्वपरार्थसिद्धिमिति मुनयोऽथवा मतिश्रुतावधिमनःपर्ययकेवलज्ञानैर्युक्ताः मुनयः, साधव इति सम्यग्दर्शनज्ञानचारित्राणि साधयंतीति साधवः, वीतरागा इति वीतो विनष्टो रागो येषां ते वीतरागाः, नामान्येतानि संज्ञारूपाणि सुविहितानां सुचारित्राणां । अनगारा न विद्यतेऽगारादिकं येषां तेऽनगारा विमुक्तसर्वसंगाः, भदंताः सर्वकल्याणानि प्राप्तवंतः, दांताः पंचेन्द्रियाणां निग्रहपराः, त्रयोदशविधे चारित्रे यतंत इति यतयोऽथवोपशमक्षपकश्रेण्यारोहणपरा यतयः । एवं प्रकाराणि यतीनां नामानीति ॥ १२० ॥

एवं दशसूत्राणि व्याख्यायेदानीमनगाराणां स्तवमाह;—

**अणयारा भयवंता अपरिमिदगुणा थुदा सुरिंदेहिं ।**
**तिविहेणुत्तिणपारे परमगदिगदे पणिवदामि ॥ १२१ ॥**

**अनगारान् भगवतः अपरिमितगुणान् स्तुतान् सुरेंद्रैः ।**
**त्रिविधैरुत्तीर्णपारान् परमगतिगतान् प्रणिपतामि ॥ १२१ ॥**

**टीका**—एवमनगारान् भगवतोऽनंतचतुष्टयं प्राप्तान् प्राप्तवंतश्चापरिमितगुणान्

---

* पुष्पमध्यगतः पाठः ख—ग—पुस्तके अधिकः ।

सर्वगुणाधारान् सुरेन्द्रैः स्तुतान् परमगतिगतान् परमशुद्धज्ञानदर्शनचारित्रपरिणतानुत्तीर्णपरान् संसारमहोदधिं समुल्लंघ्य स्थितांस्त्रिप्रकारैर्मनोवचनकायैरहं प्रणिपतामि सम्यक् प्रणमामीति ॥ १२१ ॥

अनगारभावनायाः[1] प्रयोजनमाह;—

**एवं चरियविहाणं जो काहदि संजदो ववसिदप्पा।**
**णाणगुणसंपजुत्तो सो गाहदि उत्तमं ठाणं ॥ १२२ ॥**

**एवं चर्याविधानं यः करोति संयतो व्यवसितात्मा।**
**ज्ञानगुणसंप्रयुक्तः स गच्छति उत्तमं स्थानं ॥ १२२ ॥**

**टीका**—एवमनेन प्रकारेण चर्याविधानं दशसूत्रैः कथितं यः करोति व्रतादिसंपन्नो व्यवसितात्मा तपस्युद्योगपरो ज्ञानेन मूलगुणैश्च संप्रयुक्तः संयतो गच्छत्युत्तमं स्थानमिति ॥ १२२ ॥

यः शृणोतीममनगाराणां स्तवं तस्यापि फलमाह;—

**भत्तीए मए कहियं अणयाराण त्थवं समासेण।**
**जो सुणदि पयदमणसो सो गच्छदि उत्तमं ठाणं॥१२३॥**

**भक्त्या मया कथितं अनगाराणां स्तवं समासेन।**
**यः शृणोति प्रयत्नमनाः स गच्छति उत्तमं स्थानं ॥१२३ ॥**

**टीका**—भक्त्या मया कथितमिममनगारस्तवं संक्षेपेण यः शृणोति प्रयत्नमनाः संयतात्मा सन् स गच्छत्युत्तमं स्थानमिति ॥ १२३ ॥

तथा च[2],—

**एवं संजमरासिं जो काहदि संजदो ववसिदप्पा।**
**दंसणणाणसमग्गो सो गाहदि उत्तमं ठाणं ॥ १२४ ॥**

---

१ अनगारभावनाया। २ तथा चेति पाठः ख–ग–पुस्तके नास्ति।

**एवं संयमराशिं यः करोति संयतो व्यवसितात्मा ।**
**दर्शनज्ञानसमग्रः स गच्छति उत्तमं स्थानं ॥ १२४ ॥**

**टीका**—यः पुनरेवं संयमराशिं करोति संयतो व्यवसितात्मा दर्शनज्ञानसमग्रः स गच्छत्युत्तमं स्थानमित्यत्र किमत्राद्भुतमस्तीति[1] ॥ १२४ ॥

अनगारभावनां संक्षेपयन्मंगलं च कुर्वन्नाह;—

**एवं मए अभित्थुदा अणगारा गारवेहिं उम्मुक्का ।**
**धरणिधरेहिं य महिया देंतु समाधिं च बोधिं च ॥१२५॥**

**एवं मया अभिस्तुता अनगारा गौरवैः उन्मुक्ताः ।**
**धरणिधरैः च महिता ददतु समाधिं च बोधिं च ॥१२५ ॥**

**टीका**—एवमनेन प्रकारेण मयाभिष्टुता अनगारा गौरवैरुन्मुक्ता धरणीधरैः पृथिवीपातिभिश्च महिताः पूजिता ददतां प्रयच्छंतु समाधिं मरणकालेऽन्यस्मिँश्च काले संयमपूर्विकां भावपंचनमस्कारपरिणतिं बोधिं च दर्शनविशुद्धिं च नान्यत्किंचिदपि[2] याचेऽहमिति ॥ १२५ ॥

इति श्रीमद्वट्टकेर्याचार्यवर्यप्रणीते मूलाचारे वसुनंद्याचार्यप्रणीताचारवृत्त्याख्यटीकासहिते नवमः परिच्छेदः[3] ॥

---

1 किमत्राद्भुतमिति ख. ग. 2 अपि, नास्ति ख. ग. 3 इत्याचार्यश्रीवसुनन्दिविरचितायां आचारवृत्तौ नवमः परिच्छेद समाप्त इति ग-पुस्तके । ख-पुस्तके-

# समयसाराधिकारः ।

सर्वस्यागमस्य स्वसमयपरसमयानां च सारभूतं समयसाराख्यमधिकारं प्रतिपादयंस्तावदादाविष्टदेवतानमस्कारपूर्विकां प्रतिज्ञामाह—

**वंदित्तु देवदेवं तिहुअणमहिदं च सव्वसिद्धाणं ।**
**वोच्छामि समयसारं सुण संखेवं जहावुत्तं ॥ १ ॥**

**वंदित्वा देवदेवं त्रिभुवनमहितं च सर्वसिद्धान् ।**
**वक्ष्यामि समयसारं शृणु संक्षेपं यथावृत्तं ॥ १ ॥**

**टीका**—वंदित्तु—वंदित्वा मनोवाक्कायैः प्रणम्य, देवानां देवो देवदेवस्तं सुराधीश्वरं सर्वलोकनाथं, त्रिभुवनमहितं त्रिभुवनैर्भवनवासिवाणव्यंतरज्योतिष्ककल्पवासिमर्त्यप्रधानैर्महितं तथा सर्वसिद्धांश्च सर्वकर्मविमुक्तांश्च वंदित्वा प्रणम्य वक्ष्ये प्रवक्ष्यामि वक्तुं प्रारभे समयसारं द्वादशांगचतुर्दशपूर्वाणां सारं परमतत्वं मूलगुणोत्तरगुणानां च दर्शनज्ञानचारित्राणां शुद्धिविधानस्य च भिक्षाशुद्धेश्च

---

१ एतद्दशमपरिच्छेदारंभेऽधोलिखितं श्लोकद्वयमपि वर्त्तते, तच्च;—

नरेन्द्रकीर्त्ते ! मल्हारिदेव ! सदाननं पश्यति तावकं यः ।
श्रिया विहीनोऽपि स विष्णुभार्यः कृती भवेत्स श्रमणप्रधानः ॥ १ ॥

जनयति मुदमन्तर्भव्यपाथोरुहाणा,
हरति तिमिरराशिं या प्रभा भानवीव ।
कृतनिखिलपदार्थद्योतना भारतीद्धा,
वितरतु धुतदोषा सार्हती भारती वः ॥ २ ॥

एतच्छ्लोकद्वये द्वितीयः श्लोकस्तु सुभाषितरत्नसंदोहस्याद्यः श्लोक —सम्पादकः । ग—पुस्तके भाषापुस्तके चेमौ श्लोकौ न स्त. ।—संशोधकः । २ तं देवदेवं सुराधीश्वरं ख—ग—पुस्तके ।

सारभूतं स्तोकं वक्ष्येऽहमेकाग्रचित्तो भूत्वा शृण्ववधारय संक्षिप्तसमर्थेन महांतं ग्रंथतोऽल्पं यथावृत्तं येन क्रमेणागतमथवा यथोक्तं पूर्वशास्त्रेषु स्थितं यथा पूर्वाचार्यक्रमेणागतं तथा वक्ष्येऽहं न स्वेच्छया, अनेनात्मकर्तृत्वं निराकृत्या-नात्मकर्तृत्वं स्थापितं भवतीति ॥ १ ॥

समयो नाम सम्यग्दर्शनज्ञानचारित्रतपांसि तेषाञ्च सारश्चारित्रं कुतो यस्मात्;—

**दव्वं खेत्तं कालं भावं च पडुच्च संघडणं ।**
**जत्थ हि जददे समणो तत्थ हि सिद्धिं लहुं लहइ ॥२॥**

**द्रव्यं क्षेत्रं कालं भावं च प्रतीत्य संहननं ।**
**यत्र हि यतते श्रमणः तत्र हि सिद्धिं लघु लभते ॥ २ ॥**

**टीका**—द्रव्यं शरीरमाहारादिकं कर्मागमापगमकारणं च क्षेत्रं निवासो वसतिकादि स्त्रीपशुपाण्डकविवर्जितवैराग्यवर्द्धनकारणस्थानं कालोऽवसर्पिण्यु-त्सर्पिणीरूपश्चैकोऽपि षड्विधः सुषमासुषमादिभेदेन तथा शीतोष्ण-वर्षाकालादिभेदेन त्रिविधः भावः परिणामः, चशब्दोऽनुक्तसमुच्चयार्थस्तेनान्य-दपि कारणं शुद्धचारित्रस्य ग्राह्यं, पडुच्च—आश्रित्य स्वभावमनुबुध्य, संघदणं—संहननं अस्थिबंधबलोद्भूतशक्तिं वीर्यान्तरायक्षयोपशमं वा । यत्र ग्रामेऽरण्ये द्वीपे समुद्रे भोगभूमिकर्मभूमिक्षेत्रे वा ज्ञाने दर्शने तपसि वा यतते सम्य-गाचरति सम्यक्चारित्रं प्रतिपालयति समणा—श्रमणः समतैकतावैराग्याद्या-धारस्तत्रैव सिद्धिं मोक्षं लघु शीघ्रं लभते प्राप्नोति, शरीरशुद्धिं भिक्षा-शुद्धिं चाश्रित्य कालशुद्धिं रात्र्यादिगमनपरिहारं चाश्रित्य भावशुद्धिं चासंयमादिपरिणामपरिहारं चाश्रित्य शरीरसंहननादिकं चाश्रित्य यश्चारित्रं यत्र वा तत्र वा स्थितो बहुश्रुतोऽल्पश्रुतो वा सम्यग्विधानेन प्रतिपालयति स सिद्धिं लभते शीघ्रं यस्मात्तस्मात्समयसारश्चारित्रं द्रव्याद्याश्रितो यतनेनोच्यत

---

१ संक्षेप ख–ग–पुस्तके । २ निराकृत्यात्मकर्तृत्वं ख–ग–पुस्तके ।

इति द्रव्यबलं क्षेत्रबलं कालबलं भावबलं चाश्रित्य तपः कर्त्तव्यं, यथा वातपित्तश्लेष्मादिकं क्षोभं नोपयाति तथा यत्नः कर्त्तव्यः सारस्य कथनमेतदिति ॥ २ ॥

तथा वैराग्यमपि समयस्य सारो यतः,—

**धीरो वइरग्गपरो थोवं हि य सिक्खिदूण सिज्झदि हु ।**
**ण य सिज्झदि वेरग्गविहीणो पढिदूण सव्वसत्थाइं ॥३॥**

**धीरो वैराग्यपरः स्तोकं हि शिक्षित्वा सिध्यति हि ।**
**न च सिध्यति वैराग्यविहीनः पठित्वा सर्वशास्त्राणि ॥ ३ ॥**

**टीका**—धीरो धैर्योपेतः सर्वोपसर्गसहनसमर्थः वैराग्यपरो रागादिभिर्विनिर्मुक्तः शरीरसंस्कारभोगनिर्वेदपरो विषयविरक्तभावः स्तोकमपि सामायिकादिस्वरूपं हि स्फुटं शिक्षित्वा सम्यगवधार्य सिध्यति कर्मक्षयं करोति, न चैव हि सिध्यति वैराग्यहीनः पठित्वापि सर्वाण्यपि शास्त्राणि, हि यस्मात्तस्माद्वैराग्यपूर्वकं करोति चारित्राचरणं प्रधानमिति ॥ ३ ॥

तथा सम्यक्चारित्राचरणायोपदेशमाह,—

**भिक्खं चर वस रण्णे थोवं जेमेहि मा बहू जंप ।**
**दुःखं सह जिण णिद्दा मेत्तिं भावेहि सुट्ठु वेरग्गं ॥ ४ ॥**

**भिक्षां चर वस अरण्ये स्तोकं जेम मा बहु जल्प ।**
**दुःखं सहस्व जय निद्रां मैत्रीं भावय सुष्ठु वैराग्यं ॥ ४ ॥**

**टीका**—भिक्षां चर कृतकारितानुमतिरहितं पिंडं गृहाण, वसारण्ये स्त्रीपशुपांडकादिवर्जितेषु गिरिगुहाकंदरादिषु प्रदेशेषु वस[1], स्तोकं प्रमाणयुक्तं स्वाहारचतुर्थभागहीनं भुंक्ष्वाभ्यवहर, मा च बहु प्रलापयुक्तं जल्प—असारं व[2]चनं कदाचि-

---

१ तिष्ठ ख-ग । २ मा चासारं कदाचिदपि वचनं भवान् ब्रूयात् इति ख-ग ।

दापि मा ब्रूयाः, दुःखं सहस्व केनचित्कारणान्तरेणोत्पन्नामप्रीतिं पीडारूपां सम्यगनुभव, निद्रां च जय—अकाले स्वापक्रियां वर्जय, मैत्री च भावय सर्वैः सत्वैः सह मैत्री भावय परेषां दुःखानुत्पत्यभिलाषं कुरु, वैराग्यं च सुष्टु भावय। यतः सर्वस्य प्रवचनस्य सारभूतमेतदिति ॥ ४ ॥

तथैवंभूतश्च भवेत्;—

**अव्ववहारी एक्को झाणे एयग्गमणो भवे णिरारंभो ।**
**चत्तकसायपरिग्गह पयत्तचेट्ठो असंगो य ॥ ५ ॥**

**अव्यवहारी एको ध्याने एकाग्रमना भवेन्निरारंभः ।**
**त्यक्तकषायपरिग्रहः प्रयत्नचेष्टः असंगश्च ॥ ५ ॥**

**टीका**—व्यवहरतीति व्यवहारी न व्यवहार्यव्यवहारी लोकव्यवहाररहितो भवेत्तथैकोऽसहायो भवेज्ज्ञानदर्शनादिकं मुक्त्वा ममान्यन्नास्तीत्येकत्वं भावयेत्तथा ध्याने धर्मध्याने शुक्लध्याने चैकाग्रमनास्तन्निष्ठचित्तो भवेत्तथा निरारंभ आरंभान्निर्गतः स्यात्तथा[1] त्यक्तकषायः क्रोधमानमायालोभादिरहितस्तथा त्यक्तपरिग्रहोऽथवा त्यक्तः कषायः परिग्रहो येनासौ त्यक्तकषायपरिग्रहो भवेत्तथा[2] प्रयत्नचेष्टः सर्वथा प्रयत्नपरो भवेत्तथा[3]ऽसंगः संगं केनाऽपि मा कुर्या[4]त्सर्वथा संगविवर्जितो भवेदिति ॥ ५ ॥

पुनरपि मुख्यरूपेण चारित्रस्य प्राधान्यं न श्रुतस्य यतः;—

**थोवह्मि सिक्खिदे जिणइ बहुसुदं जो चारित्तसंपुण्णो ।**
**जो पुण चारित्तहीणो किं तस्स सुदेण बहुएण ॥ ६ ॥**

**स्तोके शिक्षिते जयति बहुश्रुतं यः चारित्रसंपूर्णः ॥**
**यः पुनः चारित्रहीनः किं तस्य श्रुतेन बहुकेन ॥ ६ ॥**

---

१-२-३ इमे तथा शब्दाः ख-ग-पुस्तके न संति । ४ मा कृथाः ख-ग-पुस्तके ।

टीका—स्तोकेऽपि शिक्षिते पंचनमस्कारमात्रेऽपि परिज्ञाते तस्य स्मरणे सति जयति बहुश्रुतं दशपूर्वधरमपि करोत्यधः यश्चारित्रसंपन्नो यो यथोक्तचारित्रेण युक्तः, यः पुनश्चारित्रहीनः किं तस्य श्रुतेन बहुना। यतः स्तोकमात्रेण श्रुतेन संपन्नः सन् बहुश्रुतं जयति ततश्चारित्रं प्रधानमत्र ज्ञानस्य दर्शनस्य तपसोपि यतो हेयोपादेयविवेकमन्तरेण श्रद्धानमन्तरेण च सम्यक्चारित्रं न युज्यते ततः सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग इत्यनेन सह[1] न विरोध इति ॥ ६ ॥

तथैव प्रतिपादयन्नाह,—

**णिज्जावगो य णाणं वादो झाणं चरित्त णावा हि।**
**भवसागरं तु भविया तरंति तिहिसण्णिपायेण ॥ ७ ॥**

**निर्जीवकश्च ज्ञानं वातः ध्यानं चारित्रं नौर्हि।**
**भवसागरं तु भव्याः तरंति त्रिसन्निपातेन ॥ ७ ॥**

टीका—नौचारित्रयो रूपकालंकारमाह संसारसमुद्रतरणे—ननु समुद्रतरणे पोतेन भवितव्यं निर्जीवकेन वातेन च तत्कथमत्रेत्याशंकायामाह;—निर्जीवको यः पोते सर्वमुपसर्गजातं पश्यति स निर्जीवको ज्ञानं, वातो ध्यानं, चारित्रं नौः पोतः, भवः संसारः सागरः समुद्रो जलधिः, तु एवकारार्थः। भव्या रत्नत्रयोपेतमनुजास्तरंति समतिक्रामंति त्रिसंनिपातेन त्रयाणां संयोगेन। यथा निर्जीवकवातनौसंयोगेन वणिजः समुद्रं तरंति एवं ज्ञानध्यानचारित्रसंयोगेन संसारं तरंत्येव भव्या इति ॥ ७ ॥

किमिति कृत्वा त्रयाणां संयोगे मोक्ष इत्याशंकायामाह,—

**णाणं पयासओ तओ सोधओ संजमो य गुत्तियरो।**
**तिण्हं पि य संपजोगे होदि हु जिणसासणे मोक्खो ॥ ८ ॥**

---

१ सहाविरोध इति ख–ग।

**ज्ञानं प्रकाशकं तपः शोधकं संयमश्च गुप्तिकरः ।**
**त्रयाणामपि च संयोगे भवति हि जिनशासने मोक्षः ॥ ८ ॥**

**टीका**—यतो ज्ञानं प्रकाशकं द्रव्यस्वरूपप्रदर्शकं हेयोपादेयविवेककारणं, तपः शोधकं शोधयति कर्माणीति शोधकं सर्वकर्मणामपायकारणमात्रं, तपः-शब्देन ध्यानं परिगृह्यते तस्य प्रस्तुतत्वादथवा सर्वस्य वा ग्रहणं तन्मध्यपतित-त्वात् ध्यानस्य, संयमश्च गुप्तिकरः इन्द्रियनिग्रहो जीवदया च कर्मागमप्रतिबंध-कारणमतो ज्ञानेन प्रकाशिते संयमः परिहारो युक्तः परिहारे च ध्यानं निर्विघ्नतया प्रवर्त्ततेऽतस्त्रयाणामपि संयोगे भवति स्फुटं जिनशासने मोक्षो न पूर्वेण विरोधो द्रव्यार्थिकनयाश्रयणादिति ॥ ८ ॥

यदि पुनरेतै रहितानि ज्ञानलिंगतपांसि करोति तदा किं स्यात्;—

**णाणं करणविहीणं लिंगग्गहणं च संजमविहूणं ।**
**दंसणरहिदो य तवो जो कुणइ णिरत्थयं कुणइ ॥ ९ ॥**

**ज्ञानं करणविहीनं लिंगग्रहणं च संयमविहीनं ।**
**दर्शनरहितं च तपः यः करोति निरर्थकं करोति ॥ ९ ॥**

**टीका**—ज्ञानं करणविहीनं करणशब्देनात्र षडावश्यकादिक्रियाचारित्रं परिगृह्यते, लिंगं जिनरूपमचेलकत्वादियुक्तता लिंगस्य ग्रहणमुपादानं तत्संयम-विहीनं संयमेन विना, दर्शनं सम्यक्त्वं तेन रहितं च तपो यः करोति स पुरुषः कर्मनिर्जरारहितं निरर्थकं करोति । ज्ञानं चारित्रविमुक्तं लिंगोपादानं चेन्द्रियजयरहितं दयारहितं च यः करोति सोऽपि न किंचित्करोतीति तस्मा-त्सम्यग्दर्शनज्ञानचारित्रयुक्तान्येवेति ॥ ९ ॥

सम्यग्ज्ञानादियुक्तस्य तपसो ध्यानस्य च माहात्म्यमाह;—

**तवेण धीरा विधुणंति पावं अज्झप्पजोगेण खवंति मोहं ।**
**संखीणमोहा धुदरागदोसा ते उत्तमा सिद्धिगदिं पयंति**

**तपसा धीरा विधुन्वंति पापं अध्यात्मयोगेन क्षपयंति मोहं ।**
**संक्षीणमोहा धुतरागद्वेषाः ते उत्तमाः सिद्धिगतिं प्रयांति॥१०॥**

**टीका**—ततो ज्ञानादियुक्तेन तपसा धीराः सर्वसत्त्वसंपन्ना विधुन्वंति विनाशयंति पापं चारित्रमोहं कर्माण्यप्यशुभानि, अध्यात्मयोगेन परमध्यानेन क्षपयंति प्रलयं नयंति मोहं मिथ्यात्वादिकं ततः क्षीणमोहा धुतरागद्वेषा विनष्टज्ञानावरणदर्शनावरणान्तराया निर्मूलिताशेषकर्माणश्च, ते संतस्ते साधव उत्तमाः सर्वप्रकृष्टगुणशीलोपेताः सिद्धिं गतिमनतचतुष्टयं प्रयांति प्राप्नुवंति लोकाग्रमिति ॥ १० ॥

पुनरपि ध्यानस्य माहात्म्यमाह;—

**लेस्साझाणतवेण य चरियविसेसेण सुग्गई होइ ।**
**तह्मा इदराभावे झाणं संभावए धीरो ॥ ११ ॥**

**लेश्याध्यानतपोभिश्च चर्याविशेषेण सुगतिर्भवति ।**
**तस्मादितराभावे ध्यानं संभावयेद्धीरः ॥ ११ ॥**

**टीका**—विशेषशब्दः प्रत्येकमभिसंबध्यते। लेश्याविशेषेण तेजःपद्मशुक्ल-लेश्याभिः, ध्यानविशेषेण धर्मध्यानशुक्लध्यानाभ्यां,तपोविशेषेण चारित्रानुकूलका-यक्लेशादिभिः,चारित्रविशेषेण च सामायिकशुद्धिपरिहारच्छेदोपस्थापनसूक्ष्मसाम्प रायययथाख्यातचारित्रैः सुगतिर्भवति शोभना गतिः शुद्धदेवगतिः सिद्धगतिर्मनु-ष्यगतिश्च दर्शनादियोग्या । यद्यपि विशेषशब्दश्चारित्रेण सह संगतस्तथापि सर्वैः सह संबध्यत इत्यर्थविशेषदर्शनादथवा न चारित्रेण संबंधः समासकरणाभावात्तस्मात्सर्वैः सह संबंधः करणीयः, मध्ये च विभक्तिश्रवणं यत्तत्प्राकृतबलेन कृतं न तत्तत्र। अथवा सुगतिर्मोक्षगतिरेवाभिसंबध्यते यत एवं तस्मादितरेषामभावेऽपि लेश्यातपश्चारित्राणामभावेऽपि ध्यानं संभावयेद्धीरः सम्यग्ध्यानं प्रयोजयेद्यतः सर्वाण्येतानि ध्यानेऽन्तर्भूतानि । सर्वैर्यद्यपि सुगति-र्भवति तथापि ध्यानं प्रधानं यतः सम्यग्दर्शनाविनाभावि ॥ ११ ॥

सम्यग्दर्शनस्य माहात्म्यमाह;—

**सम्मत्तादो णाणं णाणादो सव्वभावउवलद्धी ।**
**उवलद्धपयत्थो पुण सेयासेयं वियाणादि ॥ १२ ॥**

**सम्यक्त्वात् ज्ञानं ज्ञानात् सर्वभावोपलब्धिः ।**
**उपलब्धपदार्थः पुनः श्रेयः अश्रेयः विजानाति ॥ १२ ॥**

**टीका**—सम्यक्त्वाज्जिनवचनरुचेर्ज्ञानं स्यात्सम्यक्त्वेन ज्ञानस्य शुद्धिर्यतः क्रियतेऽतः सम्यग्ज्ञानं सम्यक्त्वाद्भवति, सम्यग्ज्ञानाच्च सर्वभावोपलब्धिर्भवति यतः सर्वेषां द्रव्याणां पदार्थानामस्तिकायानां सभेदानां सपर्यायाणां च सम्यग्ज्ञानेन परिच्छित्तिः क्रियते । दर्शनस्य विषयो विविक्तो न भवति ज्ञानात् कथं तर्हि तत्पूर्वकं ज्ञानं नैष दोषो विपरीतानध्यवसायाकिंचित्क-रत्वादीनि स्वरूपाणि ज्ञानस्य सम्यक्त्वेनापनीयंत इति । उपलब्धपदार्थश्च पुनः श्रेयः पुण्यं कर्मापायकारणं चाश्रेयः पापं कर्मबंधकारणं च विजानाति सम्यगवबुध्यत इति ॥ १२ ॥

तथा;—

**सेयासेयविदण्हू उद्धुददुस्सील सीलवं होदि ।**
**सीलफलेणब्भुदयं तत्तो पुण लहदि णिव्वाणं ॥ १३ ॥**

**श्रेयोश्रेयोवित् उद्धूतदुःशीलः शीलवान् भवति ।**
**शीलफलेनाभ्युदयं ततः पुनः लभते निर्वाणं ॥ १३ ॥**

**टीका**—ततः श्रेयसोऽश्रेयसश्च वित् वेत्ता श्रेयोऽश्रेयोवित्सन् उद्धूतदुः-शीलः सन् शीलवानष्टादशशीलसहस्राधारः स्यात्ततः शीलफलेनाभ्युदयः संपूर्णचारित्रं अथवोद्धूतदुःशीलो निवृत्तपापक्रियः स्यात्ततश्चारित्रसमन्वितः स्यात्तच्च शीलं तस्माच्चाभ्युदयः स्वर्गादिसुखाद्यनुभवनं ततश्च लभते पुनर्नि-र्वाणं सर्वकर्मापायोत्पन्नसुखानुभवनमिति ततः सर्वेण पूर्वग्रंथेन चारित्रस्य माहात्म्यं दत्तं ॥ १३ ॥

यतश्च सम्यक्चारित्रात्सुगतिस्ततः;—

**सव्वं पि हु सुदणाणं सुट्ठु सुगुणिदं पि सुट्ठु पढिदं पि ।**
**समणं भट्ठचरित्तं ण हु सक्को सुग्गइं णेदुं ॥ १४ ॥**

**सर्वमपि हि श्रुतज्ञानं सुष्ठु सुगुणितमपि सुष्ठु पठितमपि ।**
**श्रमणं भ्रष्टचारित्रं न हि शक्नोति सुगतिं नेतुं ॥ १४ ॥**

**टीका**—चारित्रस्य प्राधान्यं यतः सर्वमपि श्रुतज्ञानं सुष्ठु कालादिशुद्ध्या शोभनविधानेन परिणामशुद्ध्या गुणितं परिवर्तितं सुष्ठु पठितं च शोभनविधानेन श्रुतं व्याख्यातमवधारितं च सत्, श्रमणं यतिं भ्रष्टचारित्रं चारित्रहीनं नैव खलु स्फुटं शक्तं समर्थं सुगतिं नेतुं प्रापयितुमथवा न शक्नोति परमगतिं नेतुमित्यतश्चारित्रं प्रधानमिति ॥ १४ ॥

इममेवार्थं दृष्टांतेन पोषयन्नाह,—

**जदि पडदि दीवहत्थो अवडे किं कुणदि तस्स सो दीवो।**
**जदि सिक्खिऊण अणयं करेदि किं तस्स सिक्खफलं॥१५**

**यदि पतति दीपहस्तः अवटे किं करोति तस्य स दीपः ।**
**यदि शिक्षित्वा अनयं करोति किं तस्य शिक्षाफलं ॥ १५ ॥**

**टीका**—ननु शिक्षाफलेन भवितव्यमित्याशंकायामाह;—यदि प्रदीपहस्तोऽप्यवटे कूपे पतति ततः किं करोति तस्यासौ प्रदीपः । प्रदीपो हि गृह्यते चक्षुरिन्द्रियसहकारित्वेन हेयोपादेयनिरूपणाय च तद्यदि न कुर्यात्तर्हि तद्ग्रहणे न किंचित्प्रयोजनं एवं यदि श्रुतज्ञानं शिक्षित्वा सम्यगवधार्यानयं चारित्रभंगं करोति किं तस्य शिक्षाफलं यावता हि न किंचित् । श्रुतावधारणस्यैतत्फलं चारित्रानुष्ठानं तद्यदि न भवेच्छ्रुतमप्यश्रुतकल्पमर्थक्रियाऽभावादिति ॥ १५ ॥

एवं चारित्रस्य प्राधान्यमुपन्यस्य शुद्धिकारणमाह;—

**पिंडं सेज्जं उवधिं उग्गमउप्पायणेसणादीहिं ।**
**चारित्तरक्खणट्ठं सोधणयं होदि सुचरित्तं ॥ १६ ॥**

**पिंडं शय्यां उपधिं उद्गमोत्पादनैषणादिभ्यः ।**
**चारित्ररक्षणार्थं शोधयन् भवति सुचरित्रं ॥ १६ ॥**

**टीका**—पिंडं भिक्षां, शय्यां वसत्यादिकं, उपधिं ज्ञानोपकरणं शौचोपकरणं चेति उद्गमोत्पादनैषणादिभ्यो दोषेभ्यः शोधयॅश्चारित्ररक्षणार्थं सुचरित्रो भवति । अथवा चारित्ररक्षणार्थं पिंडमुपधिं शय्यां च शोधयतः सुचरित्रं भवति शुद्धिश्च तेषामुद्गमोत्पादनैषणादोषाणामभाव इति । अथवा पिंडादीनामुद्गमादिदोषेभ्यो शोधनं यच्चारित्ररक्षणार्थं तत्सुचारित्रं भवतीति ॥ १६ ॥

येन लिंगेन तच्चारित्रमनुष्ठीयते तस्य लिंगस्य भेदं स्वरूपं च निरूपयन्नाह;—

**अच्चेलक्कं लोचो वोसट्टसरीरदा य पडिलिहणं ।**
**एसो हु लिंगकप्पो चदुव्विधो होदि णायव्वो ॥ १७ ॥**

**अचेलकत्वं लोचो व्युत्सृष्टशरीरता च प्रतिलेखनं ।**
**एष हि लिंगकल्पः चतुर्विधो भवति ज्ञातव्यः ॥ १७ ॥**

**टीका**—अचेलकत्त्वं चेलशब्देन सर्वोऽपि वस्त्रादिपरिग्रह उच्यते, यथा तालशब्देन सर्वोऽपि वनस्पतिः, तालफलं न भक्ष्य इत्युक्ते सर्वं वनस्पतिफलं न भक्षयिष्यामीति ज्ञायते, एवं चेलपरिहारेण सर्वस्य परिग्रहस्य परिहारः, न चेलकत्त्वमचेलकत्त्वं सर्वपरिग्रहपरिहरणोपायः, एतदप्यचेलकत्त्वमुपलक्षणपरं तेनाचेलकत्वौद्देशिकादयः सर्वेऽपि गृह्यन्त इति । लोचः स्वहस्तपरहस्तैर्मस्तककूर्चगतकेशापनयनं । व्युत्सृष्टशरीरता च स्नानाभ्यंगनांजनपरिमर्दनादि-

१ "चारित्ररक्षणार्थे शोधयतो भवति सुचरित्रं" "चारित्ररक्षणार्थं शोधनं यद्भवति सुचारित्रमित्येतद्द्वयमपि संस्कृतं भवितुमर्हति" । —संपादक ।

संस्काराभावः । प्रतिलेखनं मयूरपिच्छग्रहणं । अचेलकत्त्वं नैःसंग्याचिह्नं, सद्भावनायाश्चिह्नं लोचः, व्युत्सृष्टदेहत्वमपरागतायाश्चिह्नं, दयाप्रतिपालनस्य लिंगं मयूरपिच्छिकाग्रहणमिति, एष एवं लिंगकल्पो लिंगविकल्पश्चतुर्विधो भवति ज्ञातव्यश्चारित्रोपकारकत्वादिति ॥ १७ ॥

अथ के तेऽचेलकत्वादय इत्याशंकायामाह;—

**अच्चेलकुद्देसियसेज्जाहररायपिंड किदियम्मं ।**
**वद जेट्ठ पडिक्कमणं मासं पज्जो समणकप्पो ॥ १८ ॥**

**अचेलकत्वौद्देशिकंशय्यागृहराजपिंडः कृतिकर्म ।**
**व्रतं ज्येष्ठः प्रतिक्रमणं मासः पर्या श्रमणकल्पः ॥ १८ ॥**

**टीका**—अचेलकत्त्वं वस्त्राद्यभावः, अत्र यो नञ् स उत्तरत्राभिसंबंधनीयः, यथा चेलकस्याभावस्तथौद्देशिकस्याभावस्तथा शय्यागृहस्याभावस्तथा राजपिंडस्याभावः । उद्दिश्य न भुंक्ते, उद्देशे भवस्य दोषस्य परिहारोऽनौद्देशिको मदीयायां वसतिकायां यस्तिष्ठति तस्य दानादिकं ददामि नान्यस्येत्येवमभिप्रेतस्य दानस्य परिहारः, शय्यागृहपरिहारो मठगृहमपि शय्यागृहमित्युच्यते तस्यापि परिहारः, राजपिंडस्य परित्यागो वृष्यान्नस्येन्द्रियप्रवर्धनकारिण आहारस्य परित्यागोऽथवा स्वार्थं दानशालाया ग्रहणं यत्तस्य [1]परित्यागः, कृतिकर्म स्वेन वंदनादिकरणे उद्योगः, व्रतान्याहिंसादीनि तैरात्मभावनं तैः सह संयोगः संवासस्तद्व्रतं, ज्येष्ठो ज्येष्ठत्वं मिथ्यादृष्टिसासादनसम्यङ्मिथ्यादृष्ट्यसंयतसम्यग्दृष्टिसंयतासंयतानां ज्येष्ठः सर्वेषां पूज्यो बहुकालप्रव्रजिताया अप्यार्यिकाया अद्य प्रव्रजितोऽपि महाँस्तथेन्द्रचक्रधरादीनामपि महान् यतोऽतो ज्येष्ठ इति, प्रतिक्रमणं सप्तप्रतिक्रमणैरात्मभावनं दैवसिकादिप्रतिक्रमणानुष्ठाने, मासोः योगग्रहणात्प्राङ्मासमात्रमवस्थानं कृत्वा वर्षाकाले योगो ग्राह्यस्तथा योगं [2]समाप्य मासमात्रमवस्थानं कर्त्तव्यं । लोकस्थितिज्ञापनार्थमहिंसादि-

१ त्याग इत्येव ग–पुस्तके । २ समापयित्वा ख–ग–पुस्तके ।

व्रतपरिपालनार्थं च योगात्प्राङ्मासमात्रावस्थानस्य (म्) पश्चाच्च मासमात्राव-स्थानं श्रावकलोकादिसंक्लेशपरिहरणायाथवा ऋतौ ऋतौमासमासमात्रं स्थातव्यं मासमात्रं च विहरणं कर्त्तव्यमिति मासः श्रमणकल्पोऽथवा वर्षाकाले योग-ग्रहणं चतुर्षु चतुर्षु मासेषु नंदीश्वरकरणं च मासश्रमणकल्पः। पज्जो—पर्या पर्युपासनं निषद्यकायाः पंचकल्याणस्थानानां च सेवनं पर्येत्त्युच्यते, श्रम-णस्य श्रामण्यस्य वा कल्पो विकल्पः श्रमणकल्पः। अनेन प्रकारेण दशप्रकारः श्रमणकल्पो वेदितव्य इति ॥ १८ ॥

लोचो मूलगुणे व्याख्यातस्तथा व्युत्सृष्टशरीरत्वं चास्नानमूलगुणे व्या-ख्यातमतो न तयोरिह प्रपंचस्ततः प्रतिलेखनस्वरूपमाह;—

**रजसेदाणमगहणं मद्दव सुकुमालदा लहुत्तं च।**
**जत्थेदे पंचगुणा तं पडिलिहणं पसंसंति ॥ १९ ॥**

**रजःस्वेदयोरग्रहणं मार्दवं सुकुमारता लघुत्वं च।**
**यत्रैते पंचगुणास्तं प्रतिलेखनं प्रशंसंति ॥ १९ ॥**

**टीका**—रज स्वेदयोर्यत्राग्रहणं रजसा पांस्वादिना प्रस्वेदेन च यन्म-लिनं न भवति। रजसोऽग्रहणमेको गुणः स्वेदस्य चाग्रहणं द्वितीयो गुणः, मार्दवं मृदुत्वं चक्षुषि प्रक्षिप्तमपि न व्यथयति यतः स तृतीयो गुणः, सुकु-मारता सौकुमार्य दर्शनीयरूपं चतुर्थो गुणः, लघुत्त्वं च गुरुत्वस्याभावः प्रमा-णस्थानमुत्क्षेपणादौ योग्यता पंचमो गुणः, यत्रैते पंचगुणा द्रव्ये संति तत्प्रातिलेखनं मयूरपिच्छग्रहणं प्रशंसंत्यभ्युपगच्छन्त्याचार्या गणधरदेवादय इति ॥ १९ ॥

---

१ पंचकल्याणाना ग। स्थानाना पदं नास्ति तत्र । २ ‘अतो, इति ख–ग–पुस्तके नास्ति। ३ उत्क्षेपणावक्षेपणादौ ग–पुस्तके।

ननु चक्षुषैव प्रमार्जनं क्रियते किमर्थं प्रतिलेखनधारणं, नैष दोषो न हि चक्षुः सर्वत्र प्रवर्त्तते यतः;—

**सुहुमा हु संति पाणा दुप्पेक्खा अक्खिणो अगेज्झा हु ।**
**तह्मा जीवदयाए पडिलिहणं धारए भिक्खू ॥ २० ॥**

**सूक्ष्मा हि संति प्राणा दुष्प्रेक्ष्या अक्ष्णा अग्राह्या हि ।**
**तस्मात् जीवदयायै प्रतिलेखनं धारयेत् भिक्षुः ॥ २० ॥**

**टीका**—सूक्ष्माः सुष्ठु क्षुद्राः, हु—स्फुटं, संति विद्यन्ते, प्राणा द्वीन्द्रियादय एकेन्द्रियाश्च, दुःप्रेक्ष्या दुःखेन दृश्या मांसचक्षुषा चाग्राह्या मांसमयेक्षणेन ग्रहीतुं न शक्या यत एवं तस्मात्तेषां जीवानां दयानिमित्तं प्राणसंयमप्रतिपालनार्थं प्रतिलेखनं धारयेन्मयूरपिच्छिकां[1] गृह्णीयाद्भिक्षुः साधुरिति ॥ २० ॥

प्रतिलेखनमन्तरेण न साधुः,—

**उच्चारं पस्सवणं णिसि सुत्तो उट्ठिदो हु काऊण ।**
**अप्पडिलिहिय सुवंतो जीववहं कुणदि णियदं तु ॥२१॥**

**उच्चारं प्रस्रवणं निशि सुप्त उत्थितो हि कृत्वा ।**
**अप्रतिलेख्य स्वपन् जीववधं करोति नियतं तु ॥ २१ ॥**

**टीका**—उच्चारं पुरीषोत्सर्गं प्रस्रवणं मूत्रश्लेष्मादिकं च कृत्वा निशि रात्रौ प्रसुप्तो निद्राक्रान्त उत्थितश्चेतयमानोऽपि चक्षुषोऽप्रसरेऽप्रतिलेख्य प्रतिलेखनमंतरेण पुनः स्वपन् गच्छन्नुद्वर्तनपरावर्तनानि च कुर्वन् जीववधं जीवानां वधं जीवघातनं परितापनादिकं च नियतं निश्चितं निश्चयेन करोति । निशि सुप्तः पुनरुत्थित उच्चारं प्रस्रवणं च कृत्वा पुनः स्वपन् प्रतिलेखनमंतरेण निश्चयेन जीवविघातादिकं च कुर्यादिति ॥ २१ ॥

---

१ मयूरपिंच्छं ख-ग-पुस्तके ।

ननु प्रतिलेखनेनाऽपि जीवानां पीडा भवतीति ततः किमुच्यते प्रतिलेखनधारणमित्याशंक्य प्रतिलेखनस्य कस्यापि[1] सौकुमार्यमाह;—

**ण य होदि णयणपीडा अच्छिं पि भमाडिदे दु पडिलेहे।**
**तो सुहुमादी लहुओ पडिलेहो होदि कायव्वो ॥ २२ ॥**

**न च भवति नयनपीडा अक्षिण अपि भ्रामिते तु प्रतिलेखे ।**
**ततः सूक्ष्मादिः लघुः प्रतिलेखो भवति कर्तव्यः ॥ २२ ॥**

टीका—न च भवति नयनपीड़ा चक्षुषो व्यथा अक्षिण नयनेऽपि भ्रामिते प्रवेशिते प्रतिलेखे मयूरपिच्छे यतस्ततः सूक्ष्मत्वादियुक्तो लघुप्रमाणस्थः प्रतिलेखो भवति कर्त्तव्यो जीवदयानिमित्तमिति ॥ २२ ॥

प्रतिलेखनास्थानान्याह;—

**ठाणे चंकमणादाणे णिक्खेवे सयणआसण पयत्ते ।**
**पडिलेहणेण पडिलेहिज्जइ लिंगं च होइ सपक्खे ॥२३॥**

**स्थाने चंक्रमणे आदाने निक्षेपे शयनासने प्रयत्नेन ।**
**प्रतिलेखनेन प्रतिलिख्यते लिंगं च भवति स्वपक्षे ॥ २३ ॥**

टीका—स्थाने कायोत्सर्गे चंक्रमणे गमने आदाने कुंडिकादिग्रहणे निक्षेपे पुस्तकादीनां निक्षेपणे शयने आसने उद्वर्त्तनपरावर्त्तनादौ[3] संस्तरग्रहणे भुक्तोच्छिष्टप्रमार्जने च यत्नेन प्रतिलेखनेन प्रतिलिख्यते प्रमार्ज्यते जीवानां रक्षा क्रियते यतो लिंगं च चिह्नं च स्वपक्षे भवति यतोऽयं वाताधिको न भवति संयतोऽयमिति लिंगं भवति ततः प्रतिलेखनधारणं साधूक्तं युक्त्यागमाविरोधि[4] चेति । न च प्राणिघातयोगात्तेषामुत्पत्तिः कार्त्तिकमासे स्वत एव पतनात्, यथाहारस्य शुद्धिः क्रियते एवमुपकरणादिकस्यापि कार्येति ॥ २३ ॥

१ कस्येति शब्दो ग–पुस्तके नास्ति । २ पिंछे ख–ग–पुस्तके । ३ उद्वर्तन–परावर्तने ख–ग–पुस्तके । ४ माविरोधाच्चेति ख–ग–पुस्तके ।

अनेन लिंगेन युक्तस्याचरणफलमाह;—

**पोसह उवहोपक्खे तह साहू जो करेदि णावाए।**
**णावाए कल्लाणं चादुम्मासेण णियमेण ॥ २४ ॥**

**प्रौषधं उभयपक्षयोस्तथा साधुः यः करोति नापाये।**
**नयते कल्याणं चातुर्मासेन नियमेन ॥ २४ ॥**

**टीका**—अनेन लिंगेन युक्तः सन् साधुर्यः करोति प्रोषधमुपवासमुभयपक्षयोः कृष्णाचतुर्दश्यां शुक्लचतुर्दश्यां च, णावाए—नापाये तयोरविनाशे सति, णावाए—नयते प्राप्नोति, कल्लाण—कल्याणं परमसुखं, चातुर्मासेन चातुर्मासिकप्रतिक्रमणेन, नियमेन सांवत्सारिकप्रतिक्रमणेन च सह, नियमेन निश्चयेन वा। चातुर्मासिकोपवासेन सांवत्सारिकोपवासेन च सह यः साधुः कृष्णचतुर्दश्यां शुक्लचतुर्दश्यां चोपवासं करोति निरन्तरममुंचन् स प्राप्नोति कल्याणं निश्चयेन। अथवा कृष्णपक्षे शुक्लपक्षे चोपवासं यः करोति साधुरपायमंतरेण स साधुश्चातुर्मासिकेन नियमेन कल्याणं प्रायश्चित्तं तथापि प्राप्नोत्यथवा न प्राप्नोतीति संबध इति ॥ २४ ॥

एवं पिंडादिकं शोधयतः सुचरित्रं भवति, यः पुनर्न शोधयेत्तस्य फलमाह,—

**पिंडोवधिसेज्जाओ अविसोधिय जो य भुंजदे समणो।**
**मूलट्ठाणं पत्तो भुवणेसु हवे समणपोल्लो ॥ २५ ॥**

**पिंडोपधिशय्या अविशोध्य यश्च भुंक्ते श्रमणः।**
**मूलस्थानं प्राप्तः भुवनेषु भवेत् श्रामण्यतुच्छः ॥ २५ ॥**

**टीका**—पिंडमुपधिं शय्यां चाहारोपकरणावासादिकमविशोध्य च शुद्धिमकृत्वा यो भुंक्ते सेवते श्रमणः स मूलस्थानं प्राप्तो गृहस्थः संजातः भुवने लोकमध्ये चासौ श्रामण्यतुच्छो यतित्वहीनो भवेदिति ॥ २५ ॥

तथा;—

**तस्स ण सुज्झइ चरियं तवसंजमणिच्चकालपरिहीणं ।**
**आवासयं ण सुज्झइ चिरपव्वइयो वि जइ होइ ॥२६॥**

**तस्य न शुध्यति चारित्रं तपःसंयमनित्यकालपरिहीनं ।**
**आवश्यकं न शुध्यति चिरप्रव्रजितोपि यदि भवति ॥ २६ ॥**

**टीका**—पिंडादिशुद्धिमन्तरेण यस्तपः करोति तस्य न शुद्ध्याति चारित्रं तपःसंयमाभ्यां नित्यकालं परिहीणो यत आवश्यकक्रिया न तस्य शुद्धा । यद्यपि चिरप्रव्रजितो भवति तथापि किं तस्य चारित्रादिकं भवति यदि पिंडादिशुद्धिं न कुर्यादिति ॥ २६ ॥

पुनरपि चारित्रस्य प्राधान्यमाह;—

**मूलं छित्ता समणो जो गिण्हादी य बाहिरं जोगं ।**
**बाहिरजोगा सव्वे मूलविहूणस्स किं करिस्संति ॥२७॥**

**मूलं छित्त्वा श्रमणो यो गृह्णाति च बाह्यं योगं ।**
**बाह्ययोगा सर्वे मूलविहीनस्य किं करिष्यंति ॥ २७ ॥**

**टीका**—मूलगुणानहिंसादिव्रतानि छित्वा विनाश्य श्रमणः साधुर्यो गृह्णाति च बाह्यं योगं वृक्षमूलादिकं तस्य साधोर्बाह्या योगाः सर्वे मूलविहीनस्य मूलगुणराहितस्य किं करिष्यंति यावता हि न किंचिदपि कुर्वन्ति नापि कर्मक्षयं करिष्यन्तीति ॥ २७ ॥

तावदहिंसादिव्रतं विनाश्य यः करोत्युत्तरगुणं तस्य दोषमाह;—

**हंतूण य बहुपाणं अप्पाणं जो करेदि सप्पाणं ।**
**अप्पासुअसुहकंखी मोक्खंकंखी ण सो समणो ॥२८॥**

**हत्त्वा बहुप्राणं आत्मानं यः करोति सप्राणम् ।**
**अप्रासुकसुखकांक्षी मोक्षकांक्षी न स श्रमणः ॥ २८ ॥**

**टीका**—बहुप्राणान् हत्वा बहून् जीवान् त्रसस्थावरादीन् हत्त्वाऽधः-कर्मादिभिरात्मानं यः करोति सप्राणं सावद्याहारं भुक्त्वाऽऽत्मनो बलोपचयं यः कुर्यात्सः साधुरप्रासुकसुखकांक्षी येन सुखेन नरकादीन् भ्रमति तद्वी-हतेऽसौ मोक्षकांक्षी नासौ श्रमणः—सर्वकर्मक्षयविमुक्तिं नेच्छतीति ॥ २८ ॥

दृष्टान्तेन दोषमाह;—

**एक्को वावि तयो वा सीहो वग्घो मयो व खादिज्जो ।**
**जदि खादेज्ज स णीचो जीवयरासिं णिहंतूण ॥ २९ ॥**

**एकं वापि त्रीन् वा सिंहो व्याघ्रो मृगं वा खादयेत् ।**
**यदि खादयेत् स नीचो जीवराशिं निहत्य ॥ २९ ॥**

**टीका**—एक्को वावि—एकं वाऽपि मृगं शशकं वा, तयो वा—त्रीन् वा, द्वौ चतुरो वा मृगान् सिंहो मृगारिर्व्याघ्रः शार्दूलो वासमुच्चयार्थः तेनान्योऽपि गृह्यते शरभादिः । खादिज्ज—खादयेत् यदि[1] भक्षयेत्[2] स नीचोऽधमः पापिष्ठो जीवराशिं निहत्य । यदि एकं द्वौ त्रीन् वा जीवान् सिंहो व्याघ्रो वा खादयेत् स नीच इत्युच्यते यः पुनरधःकर्मणो जीवराशिं निहत्य खादयेत् स कथं न नीचः किन्तु नीच एवेति भावार्थः ॥ २९ ॥

येन प्राणिवधः कृतस्तेनात्मवधः कृत इति प्रतिपादयन्नाह;—

**आरंभे पाणिवहो पाणिवहे होदि अप्पणो हु वहो ।**
**अप्पा ण हु हंतव्वो पाणिवहो तेण मोत्तव्वो ॥ ३० ॥**

**आरंभे प्राणिवधः प्राणिवधे भवति आत्मनो हि वधः ।**
**आत्मा न हि हंतव्यः प्राणिवधस्तेन मोक्तव्यः ॥ ३० ॥**

---

१ 'यदि, शब्दो ग–पुस्तके नास्ति। २ खादेज्ज–खादेयत् भक्षयेत् यदि खादयेत् इति–ख–पुस्तके ।

टीका—आरंभे पचनादिकर्मणि सति प्राणिवधः स्यात्प्राणिवधश्च भवत्यात्मवधः स्फुटं नरकातिर्यग्गतिदुःखानुभवनं, आत्मा च न हंतव्यो यतोऽतः प्राणिवधस्तेन मोक्तव्यस्त्याज्य इति ॥ ३० ॥

पुनरप्यधःकर्मणि दोषमाहोत्तरेण ग्रंथप्रबंधेन;—

**जो ठाणमोणवीरासणेहिं अत्थदि चउत्थछट्ठेहिं ।**
**भुंजदि आधाकम्मं सव्वे वि णिरत्थया जोगा ॥ ३१ ॥**

**यः स्थानमौनवीरासनैः आस्ते चतुर्थषष्ठभिः ।**
**भुंक्ते अधःकर्म सर्वे अपि निरर्थका योगाः ॥ ३१ ॥**

टीका—यः पुनः स्थानमौनवीरासनैश्चतुर्थषष्ठादिभिश्चास्ते अधःकर्मपरिणतं च भुंक्ते तस्य सर्वेऽपि निरर्थका योगा उत्तरगुणा इति ॥ ३१ ॥

तथा;—

**किं काहदि वणवासो सुण्णागारो य रुक्खमूलो वा ।**
**भुंजदि आधाकम्मं सव्वे वि णिरत्थया जोगा ॥ ३२ ॥**

**किं करिष्यति वनवासः शून्यागारश्च वृक्षमूलो वा ।**
**भुंक्ते अधःकर्म सर्वेऽपि निरर्थका योगाः ॥ ३२ ॥**

टीका—किं करिष्यति तस्य वनवासः किं वा शून्यागारवासो वृक्षमूलवासो वा भुंक्ते चेदधःकर्म तत्र[1] सर्वेऽपि निरर्थका योगा इति ॥ ३२ ॥

तथा;—

**किं तस्स ठाणमोणं किं काहदि अब्भोवगासमादावो ।**
**मेत्तिविहूणो समणो सिज्झदि ण हु सिद्धिकंखो वि ॥ ३३ ॥**

---

१ 'तत्र' शब्दो नास्ति ख–ग–पुस्तके ।

**किं तस्य स्थानं मौनं किं करिष्यति अभ्रावकाशमातापः ।**
**मैत्रीविहीनः श्रमणः सिध्यति न हि सिद्धिकांक्षोपि ॥ ३३ ॥**

**टीका**—कि तस्य स्थानं कायोत्सर्गः मौनं वा किं तस्य करिष्यति अभ्रावकाश आतापो वा यो मैत्रीभावरहितः श्रमणः सिद्धिकांक्षोऽपि नैव स्फुटं सिध्यतीति ॥ ३३ ॥

तथा,—

**जह वोसरित्तु कत्तिं विसं ण वोसरादि दारुणो सप्पो ।**
**तह को वि मंदसमणो पंच दु सूणा ण वोसरादि ॥३४॥**

**यथा व्युत्सृज्य कृत्तिं विषं न व्युत्सृजति दारुणः सर्पः ।**
**तथा कोपि मंदश्रमणः पंच तु शूना न व्युत्सृजति ॥ ३४ ॥**

**टीका**—यथा सर्पो रौद्रः कृत्तिं कंचुकं व्युत्सृज्य विषं न त्यजति तथा कश्चिन्मंदः श्रमणः चारित्रालसः पंचशूना न व्युत्सृजति भोजनादिलोभेनेति ॥ ३४ ॥

कास्ताः पंचशूना इत्याशंकायामाह;—

**कंडणी पीसणी चुल्ली उदकुंभं पमज्जणी ।**
**बीहेदव्वं णिच्चं ताहिं जीवरासी से मरादि ॥ ३५ ॥**

**कंडनी पेषणी चुल्ली उदकुंभं प्रमार्जनी ।**
**भेतव्यं नित्यं ताभ्यः जीवराशिः ताभ्यो म्रियते ॥ ३५ ॥**

**टीका**—यवादयः कंड्यंतेऽनया कंडनी उदूखलः, पिष्यंते यवादयोऽनया पेषणी यंत्रकं, चुल्ली अग्न्याधिकरणं, उदकुंभः वृहदालिंजरादिकं, प्रमार्ज्यतेऽनया प्रमार्जिनी अपस्करानिराकरिणी । एताभ्यो भेतव्यं नित्यं जीवराशिर्यतस्ताभ्यो म्रियते ॥ ३५ ॥

पुनरपि विशेषतोऽधःकर्मणि दोषमाह;—

**जो भुंजदि आधाकम्मं छज्जीवाण घायणं किच्चा ।**
**अबुहो लोल सजिब्भो ण वि समणो सावओ होज्ज॥३६॥**

**यो भुंक्ते अधःकर्म षट्जीवानां घातनं कृत्वा ।**
**अबुधो लोलः सजिह्वः नापि श्रमणः श्रावकः भवेत् ॥ ३६ ॥**

**टीका**—यो भुंक्तेऽधःकर्म षड्जीवानां घातनं कृत्वा अबुधोऽसौ लोलो लंपटः सजिह्वो जिह्वावशं गतः नापि श्रमणः किं तु श्रावकः स्यात् । अथवा न श्रमणो नापि श्रावकः स्यात् उभयधर्मरहितत्वादिति ॥ ३६ ॥

तथा;—

**पयणं व पायणं वा अणुमणचित्तो ण तत्थ बीहेदि ।**
**जेमंतो वि सघादी ण वि समणो दिट्ठिसंपण्णो ॥ ३७॥**

**पचने वा पाचने वा अनुमनचित्तो न तत्र बिभेति ।**
**जेमन्नापि स्वघाती नापि श्रमणः दृष्टिसंपन्नः ॥ ३७ ॥**

**टीका**—पचने वा[1] पाचने वाऽनुमननचित्तः कंडन्याद्युपकरणेनाधःकर्मणि प्रवृत्तोनुमतिकुशलश्च न च तस्मात्पचनादिकाद्बिभेति भुंजानोऽपि स्वघाती नापि श्रमणो न च दृष्टिसंपन्नो विपरीताचरणादिति ॥ ३७ ॥

तथा;—

**ण हु तस्स इमो लोओ ण वि परलोओ उत्तमट्ठभट्ठस्स ।**
**लिंगग्गहणं तस्स दु णिरत्थयं संजमेण हीणस्स ॥३८॥**

**न हि तस्य अयं लोकः नापि परलोक उत्तमार्थभ्रष्टस्य ।**
**लिंगग्रहणं तस्य तु निरर्थकं संयमेन हीनस्य ॥ ३८ ॥**

---

१ वेति ख–ग–पुस्तके नास्ति ।

**टीका**—नैव तस्येह लोको नाऽपि परलोक उत्तमार्थाच्चारित्राद् भ्रष्टस्य, लिंगग्रहणं तु तस्य निरर्थकं संयमेन हीनस्येति ॥ ३८ ॥

तथा;—

**पायच्छित्तं आलोयणं च काऊण गुरुसयासह्मि ।**
**तं चेव पुणो भुंजदि आधाकम्मं असुहकम्मं ॥ ३९ ॥**

**प्रायश्चित्तं आलोचनं च कृत्वा गुरुसकाशे ।**
**तदेव पुनः भुंक्ते अधःकर्म अशुभकर्म ॥ ३९ ॥**

**टीका**—कश्चित्साधुः प्रायश्चित्तं दोषनिर्हरणं आलोचनं च दोषप्रकटनं च कृत्वा गुरुसकाशे गुरुसमीपे पुनरपि तदेव भुंक्तेऽधःकर्माशुभकर्म । यदर्थं प्रायश्चित्तादिकं कृतं तदेव भुंक्ते यस्तस्यापि नेह लोको नापि परलोक इति ॥ ३९ ॥

तथा;—

**जो जत्थ जहा लद्धं गेण्हादि आहारमुवधिमादीयं ।**
**समणगुणमुक्कजोगी संसारपवड्ढओ होइ ॥ ४० ॥**

**यो यत्र यथा लब्धं गृह्णाति आहारमुपधिकादिकं ।**
**श्रमणगुणमुक्तयोगी संसारप्रवर्धको भवति ॥ ४० ॥**

**टीका**—यः साधुर्यत्र देशे शुद्धेऽशुद्धे वा यथा लब्धं शुद्धमशुद्धं वा गृह्णाति आहारमुपधिकादिकं च यः श्रमणगुणमुक्तयोगी स तु संसारप्रवर्धको भवतीति ॥ ४० ॥

तथा,—

**पयणं पायणमणुमणणं सेवंतो ण संजदो होदि ।**
**जेमंतो वि य जह्मा ण वि समणो संजमो णत्थि॥ ४१ ॥**

**पचनं पाचनमनुमननं सेवमानो न संयतो भवति ।**
**जेमन्नपि च यस्मात् नापि श्रमणः संयमो नास्ति ॥ ४१ ॥**

**टीका**—पचनं पाचनमनुमननं च सेवमानो न संयतो भवति, तस्मा-द्भुंजानोऽपि च पुनर्न श्रमणो नापि संयमस्तत्रेति ॥ ४१ ॥

बहुश्रुतमपि चारित्रहीनस्य निरर्थकमिति प्रतिपादयन्नाह;—

**बहुगं पि सुदमधीदं किं काहदि अजाणमाणस्स ।**
**दीवविसेसो अंधे णाणविसेसो वि तह तस्स ॥ ४२ ॥**

**बहुकमपि श्रुतमधीतं किं करिष्यति अजानतः ।**
**दीपविशेषः अंधे ज्ञानविशेषोपि तथा तस्य ॥ ४२ ॥**

**टीका**—बह्वपि श्रुतमधीतं किं करिष्यत्यजानतश्चारित्रमनाचरत उप-योगरहितस्य। यथा प्रदीपविशेषोंऽधे लोचनरहिते न किंचित्करोति तथा ज्ञान-विशेषोऽपि चारित्ररहितस्य न किंचित्करोतीति ॥ ४२ ॥

परिणामवशेन शुद्धि[1]माह;—

**आधाकम्मपरिणदो फासुगदव्वे वि बंधगो भणिदो ।**
**सुद्धं गवेसमाणो आधाकम्मे वि सो सुद्धो ॥ ४३ ॥**

**अधःकर्मपरिणतः प्रासुकद्रव्योपि बंधको भणितः ।**
**शुद्धं गवेषमाणः अधःकर्मण्यपि स शुद्धः ॥ ४३ ॥**

**टीका**—प्रासुकद्रव्ये स[2]त्यपि योऽधःकर्मपरिणतः स बंधको भणित आगमे। यदि पुनः शुद्धं मृगयमाणोऽधःकर्मण्यप्यसौ शुद्धः परिणाम-शुद्धेरिति ॥ ४३ ॥

---

१ शुद्धिमशुद्धिं चाह ख—ग—पुस्तके । २ सति शब्दो नास्ति ख—ग—पुस्तके

तथा,—

**भावुग्गमो य दुविहो पसत्थपरिणाम अप्पसत्थोत्ति।**
**सुद्धे असुद्धभावो होदि उवट्ठावणं पायछित्तं ॥ ४४ ॥**

**भावोद्गमश्च द्विविधः प्रशस्तपरिणामः अप्रशस्त इति।**
**शुद्धे अशुद्धभावो भवति उपस्थापनं प्रायश्चित्तं ॥ ४४ ॥**

**टीका**—भावोद्गमश्च भावदोषश्च द्विप्रकारः प्रशस्तपरिणामोऽप्रशस्तपरिणामश्च, तत्र शुद्धे वस्तुनि यद्यशुद्धभावं करोति तत्रोपस्थापनप्रायश्चित्तं भवतीति ॥ ४४ ॥

तस्मात्;—

**फासुगदाणं फासुगउवधिं तह दो वि अत्तसोधीए।**
**जो देदि जो य गिण्हदि दोण्हं पि महप्फलं होइ ॥४५॥**

**प्रासुकदानं प्रासुकोपधिं तथा द्वयमपि आत्मशुद्ध्या।**
**यो ददाति यश्च गृह्णाति द्वयोरपि महाफलं भवति ॥ ४५ ॥**

**टीका**—यत एवं विशुद्धभावेन कर्मक्षयस्ततः प्रासुकदानं निरवद्यभैक्ष्यं प्रासुकोपधिं हिंसादिदोषरहितोपकरणं च द्वयमपि तथात्मशुद्ध्या विशुद्धपरिणामेन यो ददाति यश्च गृह्णाति तयोर्द्वयोरपि महत्फलं भवति, यत्किंचिदाहारादिकं शोभनं निरवद्यं वातपित्तश्लेष्मोपशमनकारणं सर्वरसोपेतं तन्मया प्रतिग्रहादिपूर्वकं श्रद्धादिगुणसमन्वितं दातव्यमिति तद्दातृत्वशुद्धिः, मया सर्वोऽप्याहारादिविधिस्त्याज्यः किमनेन शोभनाहारेण गृहीतेन यत्किंचित्प्रासुकं गृहीत्वा कुक्षिपूरणं कर्तव्यमिति परिणामः पात्रस्यात्मशुद्धिरिति ॥ ४५ ॥

किमर्थं चर्याशुद्धिः प्रपंचेनाख्यायत इत्याशंकायामाह,—

**जोगेसु मूलजोगं भिक्खाचरियं च वण्णियं सुत्ते।**
**अण्णे य पुणो जोगा विण्णाणविहीणएहिं कया ॥४६॥**

**योगेषु मूलयोगो भिक्षाचर्या च वर्णिता सूत्रे ।**
**अन्ये च पुनर्योगा विज्ञानविहीनैः कृताः ॥ ४६ ॥**

**टीका**—सर्वेषु मूलगुणेषूत्तरगुणेषु मध्ये मूलयोगः प्रधानव्रतं भिक्षा-चर्या कृतकारितानुमतिरहितं प्रासुकं काले प्राप्तं भोजनं वर्णिता व्याख्याता सूत्रे प्रवचने, तस्मात्तां भिक्षाशुद्धिं परित्यज्यान्यान् योगानुपवासत्रिकाल-योगादिकान् ये कुर्वंति तैस्तेऽन्ये योगा विज्ञानविरहितैस्तैश्चारित्रविहीनैः पुनः कृता न परमार्थं जानद्भिरिति, चर्याशुद्ध्या स्तोकमपि क्रियते यत्त-पस्तच्छोभनमिति ॥ ४६ ॥

तथा;—

**कल्लं कल्लं पि वरं आहारो परिमिदो पसत्थो य ।**
**ण य खमण पारणाओ बहवो बहुसो बहुविधो य॥४७॥**

**कल्यं कल्यमपि वरं आहारः परिमितः प्रशस्तश्च ।**
**न च क्षमणानि पारणा बहवो बहुशो बहुविधश्च ॥ ४७ ॥**

**टीका**—कल्लं कल्लं श्वस्तनदिने दिने वरं श्रेष्ठमाहारो भोजनं परिमितः प्रमाणस्थः वातपित्तश्लेष्मविकाराहेतुकः प्रशस्तोऽधःकर्मादिदोषरहितः न च क्षमणानि उपवासाः पारणा भोजनदिनानि बव्ह्यः षष्ठाष्टमदशमद्वादश-मासार्द्धमासादिदिनानि बहुशो बहुवारान् बहुविधश्च बहुप्रकारश्च बहुसावद्य-योगयुक्तो महारंभनिष्पन्नो दातृजनसंक्लेशोत्पादको य आहारस्तेन यदि महत्तपः क्रियते न तत्तपो महद्भवति बह्वारंभादिति ॥ ४७ ॥

कस्तर्हि शुद्धयोग इत्याशंकायामाह;—

**मरणभयभीरुआणं अभयं जो देदि सव्वजीवाणं ।**
**तं दाणाण वि दाणं तं पुण जोगेसु मूलजोगं पि ॥४८॥**

**मरणभयभीरुकेभ्यः अभयं यो ददाति सर्वजीवेभ्यः ।**
**तत् दानानामपि दानं तत् पुनः योगेषु मूलयोगोपि ॥ ४८ ॥**

**टीका**—मरणाद्भयं तस्माद्भीतेभ्योऽभयं यो ददाति सर्वसत्त्वेभ्यस्तद्दानानामपि दानं सर्वेषां दानानां मध्ये तद्दानं तत्पुनर्योगेषु अपि मूलयोगः प्रधानानुष्ठानं यदभयदानमिति ॥ ४८ ॥

गुणस्थानापेक्षया चारित्रस्य माहात्म्यमाह;—

**सम्मादिट्ठिस्य वि अविरदस्स ण तवो महागुणो होदि ।**
**होदि हु हत्थिण्हाणं चुंदच्छिदकम्म तं तस्स ॥ ४९ ॥**

**सम्यग्दृष्टेरपि अविरतस्य न तपो महागुणो भवति ।**
**भवति हि हस्तिस्नानं चुंदच्छित्कर्म तत् तस्य ॥ ४९ ॥**

**टीका**—तिष्ठतु तावन्मिथ्यादृष्टिः सम्यग्दृष्टेरप्यविरतस्यासंयतस्य न तपो महागुणः । अयं गुणशब्दोऽनेकार्थे वर्त्तते, तद्यथा—रूपादयो गुणा रूपरसगंधस्पर्शसंख्यापृथक्त्वपरिणामादीनि गुणशब्देनोच्यंते, तथा गुणभूता वयमत्र नगरे इत्यत्राप्रधानवाची गुणशब्दस्तथा यस्य गुणस्य भावादिति विशेषणे वर्त्तते तथा गुणोऽनेन कृत इत्यत्रोपकारे वर्त्तते इहोपकारे वर्त्तमानो गृह्यते । तेन तपो महोपकारं भवति । कर्मनिर्मूलनं कर्तुमसमर्थं तपोऽसंयतस्य दर्शनान्वितस्यापि कुतो यस्माद्भवति हस्तिस्नानं । हु शब्द एवकारार्थः स च हस्तिस्नानेनाभिसंबंधनीयो हस्तिस्नानमेवेति । यथा हस्ती स्नातोऽपि न नैर्मल्यं वहति पुनरपि करेणार्जितपांशुपटलेनात्मानं मलिनयति तद्वत्तपसा निर्जीर्णेऽपि कर्मांशे बहुतरादानं कर्मणोऽसंयममुखेनेति । दृष्टांतांतरमप्याचष्टे—चुंदच्छिदकर्म्म चुंदं काष्ठं छिनत्तीति चुंदच्छिद्रज्जुस्तस्याः कर्म क्रिया, यथा चुंदच्छिद्रज्जोरुद्वेष्टनं वेष्टनं च भवति तद्वत्तस्यासंयतस्य तत्तपः, अथवा चुंदच्छुदगं व—चुंदच्युतकमिव मंथनचर्मपालिकेव तत्संयमहीनं तपः । दृष्टांतद्वयोपन्यासः किमर्थं इति चेन्नैष दोषः, अपगतात्कर्मणो बहुत-

रोपादानमसंयमनिमित्तस्येति प्रदर्शनाय हस्तिस्नानोपन्यासः, आर्द्रतनुतया हि बहुतरमुपादत्ते रजः, बंधरहिता निर्जरा स्वास्थ्यं प्रापयति नेतरा बंधसहभाविनीति । किमिवं ? चुंदच्छिदः कर्मेव—एकत्र वेष्टयत्यन्यत्रोद्वेष्टयति तपसा निर्जरयति, कर्मासंयमभावेन बहुतरं गृह्णाति कठिनं च करोतीति ॥ ४९ ॥

सन्निपातेन शोभनक्रियाणां कर्मक्षयो भवतीति दृष्टांतेन पोषयन्नाह;—

**वेज्जादुरभेसज्जापरिचारयसंपदा जहारोग्गं ।**
**गुरुसिस्सरयणसाहणसंपत्तीए तहा मोक्खो ॥ ५० ॥**

**वैद्यातुरभैषज्यपरिचरकसंपदा यथा आरोग्यं ।**
**गुरुशिष्यरत्नसाधनसंपत्या तथा मोक्षः ॥ ५० ॥**

**टीका**—वैद्यो भिषक् आतुरो व्याधितः भैषज्यमौषधं परिचारका वैयावृत्त्यकारा एतेषां संपत्संयोगस्तथा संपदा यथाऽऽरोग्यं व्याधितस्य रोगाभावः संजायते तथा गुरुराचार्यः शिष्यो वैराग्यपरो विनेयो रत्नानि सम्यग्दर्शनादिसाधनानि पुस्तककुंडिकापिच्छिकादीन्येतेषां संपत्तिः संप्राप्तिः संयोगस्तया तेनैव[1] प्रकारेण मोक्षो भवतीति ॥ ५० ॥

दृष्टांतं दार्ष्टान्तेन योजयन्नाह;—

**आइरिओ वि य वेज्जो सिस्सो रोगी दु भेसजं चरिया ।**
**खेत्त बल काल पुरिसं णाऊण सणिं दढं कुज्जा ॥ ५१ ॥**

**आचार्योऽपि च वैद्यः शिष्यो रोगी तु भेषजं चर्या ।**
**क्षेत्रं बलं कालं पुरुषं ज्ञात्वा शनैः दृढं कुर्यात् ॥ ५१ ॥**

**टीका**—आचार्यो नाम वैद्यः शिष्यश्च रोगी भेषजं चर्या क्षेत्रं शीतमुष्णादिकं बलं शरीरसामर्थ्यादिकं कालः प्रावृडादिकः पुरुषो जघन्यमध्यमो-

---

१ येनैव ग—पुस्तके ।

त्कृष्टभेदभिन्न एतान् सर्वान् ज्ञात्वा शनैराकुलतामंतरेण शिष्यमाचार्यश्च यथारोग्ययुक्तं कुर्यादिति चर्यौषधं कथनीयमिति ॥ ५१ ॥

तत्कथमित्याह;—

**भिक्खं सरीरजोग्गं सुभत्तिजुत्तेण फासुयं दिण्णं ।**
**दव्वपमाणं खेत्तं कालं भावं च णादूण ॥ ५२ ॥**
**णवकोडीपडिसुद्धं फासुय सत्थं च एसणासुद्धं ।**
**दसदोसविप्पमुक्कं चोद्दसमलवज्जियं भुंजे ॥ ५३ ॥**

भैक्ष्यं शरीरयोग्यं सुभक्तियुक्तेन प्रासुकं दत्तं ।
द्रव्यप्रमाणं क्षेत्रं कालं भावं च ज्ञात्वा ॥ ५२ ॥
नवकोटिपरिशुद्धं प्रासुकं शस्तं च एषणाशुद्धं ।
दशदोषविप्रमुक्तं चतुर्दशमलवर्जितं भुंजीत ॥ ५३ ॥

टीका—सुभक्तियुक्तेन शरीरयोग्यं भैक्ष्यं प्रासुकं प्रदत्तं नवकोटिपरिशुद्धं प्रासुकं निरवद्यं प्रशस्तं कुत्सादिदोषरहितमेषणासमितिशुद्धं दशदोषविप्रमुक्तं चतुर्दशमलवार्जितं च द्रव्यप्रमाणं क्षेत्रं कालं भावं च ज्ञात्वा परिणाममंतरेण भुंजीतेति ॥ ५२-५३ ॥

तथा,—

**आहारेदु तवस्सी विगदिंगालं विगदधूमं च ।**
**जत्तासाहणमेत्तं जवणाहारं विगदरागो ॥ ५४ ॥**

आहरेत् तपस्वी विगतांगारं विगतधूमं च ।
यात्रासाधनमात्रं यवनाहारं विगतरागः ॥ ५४ ॥

टीका—आहारं, किं विशिष्टं ? विगतांगारं विगतधूमं यात्रासाधनमात्रं

---

१ राकुलमन्तरेण ख-ग-पुस्तके ।

सम्यग्दर्शनज्ञानचारित्रप्रतिपालननिमित्तं यवनाहारं क्षुधोपशमनमात्रं विगतरागः सन्नाकांक्षारहितस्तपस्वी वैराग्यपर आहरेदभ्यवहरेदिति ॥ ५४ ॥

जुगुप्सापरिहारमाह;—

**ववहारसोहणाए परमट्ठाए तहा परिहरउ ।**
**दुविहा चावि दुगंछा लोइय लोगुत्तरा चेव ॥ ५५ ॥**

**व्यवहारशोधनाय परमार्थाय तथा परिहरतु ।**
**द्विविधा चापि जुगुप्सा लौकिकी लोकोत्तरा चैव ॥ ५५ ॥**

**टीका**—जुगुप्सा गर्हा द्विविधा द्विप्रकारा लौकिकी लोकोत्तरा च । लोकव्यवहारशोधनार्थं सूतकादिनिवारणाय लौकिकी जुगुप्सा परिहरणीया तथा परमार्थार्थं रत्नत्रयशुद्ध्यर्थं लोकोत्तरा च कार्येति[1] ॥ ५५ ॥

पुनरपि क्रियापदेन प्रकटयन्नाह;—

**परमट्ठियं विसोहिं सुट्ठु पयत्तेण कुणइ पव्वइओ ।**
**परमट्ठदुगंछा वि य सुट्ठु पयत्तेण परिहरउ ॥ ५६ ॥**

**परमार्थिकां विशुद्धिं सुष्ठु प्रयत्नेन करोति प्रव्रजितः ।**
**परमार्थजुगुप्सापि च सुष्ठु प्रयत्नेन परिहरतु ॥ ५६ ॥**

**टीका**—परमार्थिकां विशुद्धिं कर्मक्षयनिमित्तां रत्नयत्रयशुद्धिं सुष्ठु प्रयत्नेन करोतु प्रव्रजितः साधुः परमार्थजुगुप्सामपि शंकादिकां सुष्ठु प्रयत्नेन परिहरतु त्यजत्विति ॥ ५६ ॥

तथा;—

**संजममविराधंतो करेउ ववहारसोधणं भिक्खू ।**
**ववहारदुगंछावि य परिहरउ वदे अभंजंतो ॥ ५७ ॥**

---

१ न कार्येति प्रेस—पुस्तके ।

**संयममविराधयन् करोतु व्यवहारशोधनं भिक्षुः ।**
**व्यवहारजुगुप्सामपि च परिहरतु व्रतानि अभंजयन् ॥ ५७ ॥**

**टीका**—भिक्षुः संयमं चारित्रमविराधयन्नपीडयन् करोतु व्यवहारशोधनं लोकव्यवहारशोधनं प्रायश्चितं च व्यवहारजुगुप्सां च, येन कर्मणा लोके विशिष्टजनमध्ये कुत्सितो भवति तत्कर्म परिहरतु च व्रतान्यहिंसादीनि अभंजयन्नखंडयन् । किमुक्तं भवति—संयमं मा विराधयतु व्यवहारशुद्धिं च करोतु व्रतानि मा भंजयतु व्यवहारजुगुप्सां च परिहरतु साधुरिति ॥ ५७ ॥

द्रव्यशुद्धिं विधाय क्षेत्रशुद्ध्यर्थमाह;—

**जत्थ कसायुप्पत्तिरभत्तिंदियदारइत्थिजणबहुलं ।**
**दुक्खमुवसग्गबहुलं भिक्खू खेत्तं विवज्जेऊ ॥ ५८ ॥**

**यत्र कषायोत्पत्तिरभक्तिरिंद्रियद्वारस्त्रीजनबाहुल्यं ।**
**दुःखमुपसर्गबहुलं भिक्षुः क्षेत्रं विवर्जयेत् ॥ ५८ ॥**

**टीका**—यस्मिन् क्षेत्रे कषायाणामुत्पत्तिः प्रादुर्भावस्तथा यस्मिन् क्षेत्रेऽभक्तिरादराभावः शाठ्यबाहुल्यं, यत्र चेंद्रियद्वारबाहुल्यमिन्द्रियद्वाराणां चक्षुरादीनां बाहुल्यं सुष्ठु रागकारणविषयप्राचुर्यं, स्त्रीजनबाहुल्यं च यत्र स्त्रीजनो बाहुल्येन शृंगाराकारविकारविषयलीलाहावभावनृत्तगतिवादित्रहासोपहासादिनिष्ठस्तथा दुःखं क्षेत्रं क्लेशप्रचुरं, उपसर्गबहुलं बाहुल्येनोपसर्गोपेतं च तदेतत्सर्वं क्षेत्रं भिक्षुः साधुर्विवर्जयतु परिहरतु सम्यग्दर्शनादिशुद्धिकरणायेति ॥ ५८ ॥

इत्थंभूतं च क्षेत्रं सेवयत्विति कथयन्नाह;—

**गिरिकंदरं मसाणं सुण्णागारं च रुक्खमूलं वा ।**
**ठाणं विरागबहुलं धीरो भिक्खु णिसेवेऊ ॥ ५९ ॥**

---

१ भनक्कु ख-ग-पुस्तके ।

**गिरिकंदरां श्मशानं शून्यागारं च वृक्षमूलं च ।**
**स्थानं वैराग्यबहुलं धीरो भिक्षुः निषेवयतु ॥ ५९ ॥**

**टीका**—गिरिकंदरां श्मशानं शून्यागार वृक्षमूलं च धीरो भिक्षुर्निषेवयतु भावयतु यत एतत्स्थानं वैराग्यबहुलं चारित्रप्रवृत्तिहेतुकमिति ॥ ५९ ॥

तथैतच्च क्षेत्रं वर्जयत्विति कथनायाह;—

**णिवदिविहूणं खेत्तं णिवदी वा जत्थ दुट्ठओ होज्ज ।**
**पव्वज्जा च ण लब्भइ संजमघादो य तं वज्जे ॥ ६० ॥**

**नृपतिविहीनं क्षेत्र नृपतिर्वा यत्र दुष्टो भवेत् ।**
**प्रव्रज्या च न लभ्यते संयमघातश्च तत् वर्जयेत् ॥ ६० ॥**

**टीका**—नृपतिविहीनं यत् क्षेत्रं यस्मिन् देशे नगरे ग्रामे गृहे वा प्रभुर्नास्ति स्वेच्छया प्रवर्त्तते सर्वो जनः, यत्र च क्षेत्रे नृपतिर्दुष्टः यस्मिंश्च देशे नगरे ग्रामे गृहे वा स्वामी दुष्टः कदर्थनशीलो धर्मविराधनप्रवणः, *यत्र च प्रव्रज्या न लभ्यते न प्राप्यते*, यत्र यस्मिंश्च देशे शिष्याः श्रोतारोऽध्येतारो व्रतरक्षणतन्निष्ठा दीक्षाग्रहणशीलाश्च न संभवंति, संयमाघतश्च यत्र बाहुल्येनातीचारबहुलं तदेतत्सर्वं क्षेत्रं च वर्जयेत्, यत्नेन परिहरतु साधुरित्युपदेशः ॥ ६० ॥

तथैतदपि वर्जयेत्[1];—

**णो कप्पदि विरदाणं विरदीणमुवासयह्मि चेट्ठेदुं ।**
**तत्थ णिसेज्जउवट्टणसज्झायाहारवोसरणे ॥ ६१ ॥**

**नो कल्प्यते विरतानां विरतीनामुपाश्रये स्थातुं ।**
**तत्र निषद्योद्वर्तनस्वाध्यायाहारव्युत्सर्गम् ॥ ६१ ॥**

---

* पुष्पमध्यगत पाठस्थाने ख-ग-पुस्तके ' प्रव्रज्या च न लभते ' इत्येव पाठः ।

1 वर्जयतु ख-ग-पुस्तके ।

टीका—विरतानां नो कल्प्यंते न युज्यते विरतीनामार्यिकाणामुपाश्रये स्थातुं कालांतरं धर्मकार्यमन्तरेण, तत्र च शय्या निषद्या स्वाध्याय आहारः कायिकादिक्रिया प्रतिक्रमादिकं च न कल्प्यंते युक्ताचारस्य साधोरिति ॥ ६१ ॥

कुतो यतः,—

**होदि दुगंछा दुविहा ववहारादो तधा य परमट्ठे।**
**पयदेण य परमट्ठे ववहारेण य तहा पच्छा ॥ ६२ ॥**

**भवति जुगुप्सा द्विविधा व्यवहारात् तथा च परमार्थेन।**
**प्रयत्नेन च परमार्था व्यवहारेण च तथा पश्चात् ॥ ६२ ॥**

टीका—तत्रार्यिकोपाश्रये वसतः साधोर्द्विप्रकारापि जुगुप्सा, व्यवहाररूपा तथा परमार्था च, लोकापवादो व्यवहाररूपा, व्रतभंगश्च परमार्थतः यत्नेन परमार्थरूपा जायते जुगुप्सा, व्यवहारतश्च ततोऽथवा व्यवहारतो भवति पश्चात्परमार्थतश्चेति ॥ ६२ ॥

तथा संसर्गजं दोषमाह,—

**वड्ढदि बोही संसग्गेण तह पुणो विणस्सेदि।**
**संसग्गविसेसेण दु उप्पलगंधो जहा कुंभो ॥ ६३ ॥**

**वर्धते बोधिः संसर्गेण तथा पुनर्विनश्यति।**
**संसर्गविशेषेण तु उत्पलगंधो यथा कुंभः ॥ ६३ ॥**

टीका—संसर्गेण संपर्केण बोधिः सम्यग्दर्शनादिशुद्धिर्वर्द्धते तथा पुनरपि विनश्यति च। सदाचारप्रसंगेन वर्द्धते कुत्सिताचारसंपर्केण विनश्यति, यथा संसर्गविशेषेणोत्पलगंधः जलकुंभ उत्पलादिसंपर्केण सुगंधः शीतलश्चाग्न्यादिसंयोगेनोष्णो विरसश्चेति ॥ ६३ ॥

१-२ कल्पते ख-ग-पुस्तके।

तथैतैश्च संसर्गं वर्जयेदिति प्रतिपादयन्नाह;—

**चंडो चवलो मंदो तह साहू पुट्ठिमंसपडिसेवी ।**
**गारवकसायबहुलो दुरासओ होदि सो समणो ॥ ६४ ॥**

**चंडश्चपलो मंदस्तथा साधुः पृष्ठिमांसप्रतिसेवी ।**
**गौरवकषायबहुलो दुराश्रयो भवति स श्रमणः ॥ ६४ ॥**

**टीका**—चंडो रौद्रो मारणात्मको विषतरुरिव, चपलोऽस्थिरप्रकृतिर्वाचिकादिक्रियायां स्थैर्यहीनः, मंदश्चारित्रालसस्तथा साधुः पृष्ठमांसप्रतिसेवी पश्चाद्दोषकथनशीलः पैशून्यतत्परः, गौरवबहुलः, कषायबहुलश्च पदं पदं प्रति रोषणशीलः, दुराश्रय एवंभूतः श्रमणो दुःसेव्यो भवति केनाप्युपकारेणात्मीयः कर्तुं न शक्यते यत एवंभूतं श्रमणं न सेवयेदिति संबंधः ॥ ६४ ॥

तथा;—

**वेज्जावच्चविहूणं विणयविहूणं च दुस्सुदिकुसीलं ।**
**समणं विरागहीणं सुजमो साधू ण सेविज्ज ॥ ६५ ॥**

**वैयावृत्त्यविहीनं विनयविहीनं च दुःश्रुतिकुशीलं ।**
**श्रमणं विरागहीनं सुयमः साधुर्न सेवेत ॥ ६५ ॥**

**टीका**—वैयावृत्त्यविहीनं ग्लानदुर्बलव्याधितादीनामुपकाररहितं, विनयविहीनं पंचप्रकारविनयरहितं[1], दुःश्रुतिं दुष्टश्रुतिसमन्वितं, कुशीलं, कुत्सिताचरणशीलं, श्रमणं नाग्न्याद्युपेतमपि, विरागहीनं रागोत्कटं, पूर्वोक्तः साधुः संयतो न सेवेत न कदाचिदप्याश्रयेत् दुष्टाश्रयत्वादिति ॥ ६५ ॥

तथा;—

**दंभं परपरिवादं पिसुणत्तण पावसुत्तपडिसेवं ।**
**चिरपव्वइदं पि मुणी आरंभजुदं ण सेविज्ज ॥ ६६ ॥**

---

१ विहीनं ख–ग–पुस्तके ।

दंभं परपरिवादिनं पैशून्यवन्तं पापसूत्रप्रतिसेविनं।
चिरप्रव्रजितमपि मुनिं आरंभयुतं न सेवेत ॥ ६६ ॥

टीका—दंभं वंचनशीलं कुटिलभावं, परपरिवादिनं परोपतापिनं, पैशून्योपपन्नं दोषोद्भावनेन तत्परं, पापसूत्रप्रतिसेविनं मारणोच्चाटनवशीकरण-मंत्रयंत्रतंत्रठकशास्त्रराजपुत्रकोकवात्स्यायनपितृपिंडविधायकं सूत्रं मांसादिवि-धायकवैद्यसावद्यज्योतिषशास्त्रादिरतमित्थंभूतं मुनिं चिरप्रव्रजितमपि आरंभ-युतं च न कदाचिदपि सेवेत न तेन सह संगं कुर्यादिति ॥ ६६ ॥

तथा,—

**चिरपव्वइदं पि मुणी अपुट्ठधम्मं असंपुडं णीचं।**
**लोइय लोगुत्तरियं अयाणमाणं विवज्जेज्ज ॥ ६७ ॥**

चिरप्रव्रजितमपि मुनिं अपुष्टधर्मं असंवृतं नीचं।
लौकिकं लोकोत्तरमजानंतं विवर्जयेत् ॥ ६७ ॥

टीका—तथा चिरप्रव्रजितं बहुकालीनं श्रमणं, अपुष्टधर्मं मिथ्या-त्वोपेतं असंवृतं स्वेच्छावचनवादिनं नीचं नीचकर्मकरं लौकिकं व्यापारं लोकोत्तरं च व्यापारं अजानंतं लोकविराधनपरं परलोकनाशनपरं च श्रमणं विवर्जयेत् परित्यजेन्न तेन सह संवासं कुर्यादिति ॥ ६७ ॥

तथा पापश्रमणस्य लक्षणमाह,—

**आयरियकुलं मुच्चा विहरदि समणो य जो दु एगागी।**
**ण य गेण्हदि उवदेसं पावस्समणोत्ति वुच्चदि दु ॥६८॥**

आचार्यकुलं मुक्त्वा विहरति श्रमणश्च यस्तु एकाकी।
न च गृह्णाति उपदेशं पापश्रमणं इति उच्यते तु ॥ ६८ ॥

१ दोषाणां दोपाद्भावनेन ग-पुस्तके । अदोषोद्भावेन ख-पुस्तके । २ रतं ख-ग-पुस्तके ।

**टीका**—आचार्यकुलं श्रमणसंघं मुक्त्वा यः स्वेच्छया विहरति गच्छति जल्पति चिंतयति श्रमण एकाकी संघाटकरहितः, उपदेशं च दीयमानं यो न गृह्णाति शिक्षां नादत्ते स पापश्रमण इत्युच्यते ॥ ६८ ॥

तथा;—

**आयरियत्तण तुरिओ पुव्वं सिस्सत्तणं अकाऊणं ।**
**हिंडई ढुंढायरिओ णिरंकुसो मत्तहत्थिव्व ॥ ६९ ॥**

**आचार्यत्वं त्वरितः पूर्वं शिष्यत्वं अकृत्वा**
**हिंडति ढोढाचार्यो निरंकुशो मत्तहस्तीव ॥ ६९ ॥**

**टीका**—आचार्यत्वं कर्तुं त्वरितः पूर्वं शिष्यत्वमकृत्वा यः स्वेच्छया हिंडत्याचरति भ्रमति च ढोढाचार्यः पूर्वापरविवेकशून्यो यथा निरंकुशो मत्तहस्ती । सोऽपि पापश्रमण इत्यतस्तमपि न सेवेतेति ॥ ६९ ॥

पुनरपि संसर्गजं दोषमाह दृष्टांतेनेति;—

**अंबो णिंबत्तणं पत्तो दुरासएण जहा तहा ।**
**समणं मंदसंवेगं अपुट्ठधम्मं ण सेविज्ज ॥ ७० ॥**

**आम्रो निंबत्वं प्राप्तो दुराश्रयेण यथा तथा ।**
**श्रमणं मंदसंवेगं अपुष्टधर्मं न सेवेत ॥ ७० ॥**

**टीका**—यथाऽऽम्रवृक्षो दुराश्रयेण निंबत्वं प्राप्तस्तथा श्रमणं मंदसंवेगं धर्मानुरागालसं अपुष्टधर्मं समाचारहीनं दुराश्रयेण संजातं न सेवेत नाश्रयेदात्मापि तदाश्रयेण तथाभूतः स्यादिति ॥ ७० ॥

तथा पार्श्वस्थान्नित्यं भेतव्यमिति प्रदर्शयन्नाह;—

**बिहेदव्वं णिच्चं दुज्जणवयणा पलोट्टजिब्भस्स ।**
**वरणयरणिग्गमं पिव वयणकयारं वहंतस्स ॥ ७१ ॥**

**भेतव्य नित्यं दुर्जनवचनात् प्रलोटजिव्हातः ।**
**वरनगरनिर्गमादिव वचनकचवरं वहतः ॥ ७१ ॥**

**टीका**—दुर्जनवचनात्, किंविशिष्टात्? प्रलोटजिह्वात् पूर्वापरतामनपेक्ष्य वाचिनो वरनगरनिर्गमादिव वचनकचवरं वहतः नित्यं भेतव्यं न तत्समीपे स्थातव्यमिति ॥ ७१ ॥

तथेत्थंभूतोऽपि यस्तस्मादपि भेतव्यमिति दर्शयन्नाह,—

**आयरियत्तणमुवणायइ जो मुणि आगमं ण याणंतो ॥**
**अप्पाणं पि विणासिय अण्णे वि पुणो विणासेई ॥७२॥**

**आचार्यत्वमुपनयति यो मुनिरागमं न जानन् ।**
**आत्मानमपि विनाश्य अन्यानपि पुनः विनाशयति ॥ ७२ ॥**

**टीका**—आचार्यत्वमात्मानं[1]मुपनयाति य आगममजानन् आत्मानं विनाश्य परमपि विनाशयाति । आगमेन विनाचरन्नात्मानं नरकादिषु गमयाति तथा परान् कुत्सितोपदेशेन भावयन् तान्नरकादिषु प्रवेशयतीति ततस्तस्मादपि भेतव्यमिति ॥ ७२ ॥

अभ्यंतरयोगैर्विना बाह्ययोगानामफलत्वं दर्शयन्नाह,—

**घोडयलद्दिसमाणस्स बाहिर बगणिहुदकरणचरणस्स ।**
**अब्भंतरम्हि कुहिदस्स तस्स दु किं बज्झजोगेहि ॥७३॥**

**घोटकलादिसमानस्य बाह्येन बकनिभृतकरणचरणस्य ।**
**अभ्यंतरे कुथितस्य तस्य तु किं बाह्ययोगैः ॥ ७३ ॥**

**टीका**—घोटकव्युत्सर्गसमानस्यांतः कुथितस्य बाह्येन बकस्येव निभृतकरचरणस्य तस्येत्थंभूतस्य मूलगुणरहितस्य किं बाह्यैर्वृक्षमूलादिभिर्योगैर्न किंचिदपीत्यर्थस्तस्माच्चारित्रे यत्नः कार्य इति ॥ ७३ ॥

---

१ आत्मन उपनयति ख-ग-पुस्तके ।

बहुकालश्रमणोऽहमिति च मा गर्वं कृथा यतः;—

**मा होह वासगणणा ण तत्थ वासाणि परिगणिज्जंति ।**
**बहवो तिरत्तवुत्था सिद्धा धीरा विरग्गपरा समणा ७४**

**मा भवतु वर्षगणना न तत्र वर्षाणि परिगण्यंते ।**
**बहवः त्रिरात्रोत्थाः सिद्धा धीरा वैराग्यपराः श्रमणाः॥ ७४ ॥**

**टीका**—मा भवतु वर्षगणना मम प्रव्रजितस्य बहूनि वर्षाणि यतोऽयं लघुरद्य प्रव्रजित इत्येवं गर्वं मा कुर्द्ध, यतो न तत्र मुक्तिकारणे वर्षाणि गण्यंते । बहुकालश्रामण्येन मुक्तिर्भवति नैवं परिज्ञायते यस्माद्बहवस्त्रिरात्रिमात्रोषितचारित्रा अन्तर्मुहूर्तवृत्तचरित्राश्च वैराग्यपरा धीराः सम्यग्दर्शनादौ निष्कंपाः श्रमणाः सिद्धा निर्मूलिताशेषकर्माण इति ॥ ७४ ॥

बंधं बंधकारणं च प्रतिपादयन्नाह;—

**जोगणिमित्तं गहणं जोगो मणवयणकायसंभूदो ।**
**भावणिमित्तो बंधो भावो रदिरागदोसमोहजुदो ॥७५॥**

**योगनिमित्तं ग्रहणं योगो मनोवचनकायसंभूतः ।**
**भावनिमित्तो बंधो भावो रतिरागद्वेषमोहयुतः ॥ ७५ ॥**

**टीका**—कर्मणो ग्रहणं योगानिमित्तं योगहेतुकं, योगः प्रकृतिबंधं प्रदेशबंधं च करोतीति । अथ को योग इत्याशंकायामाह;—योगश्च मनोवचनकायेभ्यः संभूतो मनःप्रदेशपरिस्पंदो वाक्प्रदेशपरिस्पंदः कायप्रदेशपरिस्पंदः "मनोवाक्कायकर्म योग" इति वचनात् । भावनिमित्तो भावहेतुको बंधः संश्लेषः स्थित्यनुभागरूपः "स्थित्यनुभागौ कषायत" इति वचनात् । अथ को भाव इति प्रश्ने भावो रतिरागद्वेषमोहयुक्तो मिथ्यात्वासंयमकषाया इत्यर्थ इति ॥ ७५ ॥

कर्मणः परिणामो न तु जीवस्येति प्रतिपादयन्नाह;—

**जीवपरिणामहेदू कम्मत्तण पोग्गला परिणमंति ।**
**ण दु णाणपरिणदो पुण जीवो कम्मं समादियदि ॥७६॥**

**जीवपरिणामहेतवः कर्मत्वेन पुद्गलाः परिणमंति ।**
**न तु ज्ञानपरिणतः पुनः जीवः कर्म समादत्ते ॥ ७६ ॥**

**टीका**—जीवस्य परिणामहेतवो बालवृद्धयुवत्वभावेन नरकतिर्यङ्मनुष्यदेवत्वभावेन च कर्मत्वेन कर्मस्वरूपेण पुद्गला रूपरसगंधस्पर्शवंतः परमाणवः परिणमंति पर्यायं गृह्णंति । जीवः पुनर्ज्ञानपरिणतो नैव कर्म समादत्ते नैव कर्मभावेन पुद्गलान् गृह्णातीति । यतोऽतश्चारित्रं ज्ञानदर्शनपूर्वकं भावनीयमिति ॥ ७६ ॥

यस्मात्,—

**णाणविण्णाणसंपण्णो झाणज्झणतवेजुदो ।**
**कसायगारवुम्मुक्को संसारं तरदे लहुं ॥ ७७ ॥**

**ज्ञानविज्ञानसंपन्नो ध्यानाध्ययनतपोयुतः ।**
**कषायगौरवोन्मुक्तः संसारं तरति लघु ॥ ७७ ॥**

**टीका**—ज्ञानं यथावस्थितवस्तुपरिच्छेदकं विज्ञानं चारित्रं ताभ्यां ज्ञानविशेषेण वा संपन्नः परिणतः ध्यानेनैकाग्रचिंतानिरोधेनाध्ययनेन वाचनाप्रच्छनादिक्रियया तपसा च द्वादशप्रकारेण युक्तः परिणतः कषायगौरवोन्मुक्तश्च लघु शीघ्रं संसारं भवसमुद्रं तरति समुल्लघंयतीति ततो रत्नत्रयं सारभूतमिति ॥ ७७ ॥

ननु स्वाध्यायभावनया कथं संसारस्तीर्यत इत्याशंकायामाह;—

**सज्झायं कुव्वंत्तो पंचिंदियसंपुडो तिगुत्तो य ।**
**हवदि य एयग्गमणो विणएण समाहिओ भिक्खू ॥७८॥**

**स्वाध्यायं कुर्वन् पंचेंद्रियसंवृतः त्रिगुप्तश्च ।**
**भवति च एकाग्रमना विनयेन समाहितो भिक्षुः ॥ ७८ ॥**

**टीका**—यतः स्वाध्यायं शोभनशास्त्राभ्यासवाचनादिकं कुर्वन् पंचेंद्रियसंवृतस्त्रिगुप्तश्च भवति, एकाग्रमना ध्यानपरश्च भवति, विनयेन समाहितश्च दर्शनादिविनयोपेतश्च भिक्षुर्भवत्यतः प्रधानं चारित्रं स्वाध्यायस्ततश्च मुक्तिरिति ॥ ७८ ॥

पुनरपि स्वाध्यायस्य माहात्म्यं तपस्यंतर्भावं च प्रतिपादयन्नाह;—

**बारसविधह्मि य तवे सब्भंतरबाहिरे कुसलदिट्ठे ।**
**ण वि अत्थि ण वि य होहदि सज्झायसमं तवोकम्मं ॥७९॥**

**द्वादशविधे च तपसि साभ्यंतरबाह्ये कुशलदृष्टे ।**
**नापि अस्ति नापि च भविष्यति स्वाध्यायसमं तपःकर्म ॥७९॥**

**टीका**—द्वादशविधे तपसि साभ्यंतरबाह्ये कुशलदृष्टे तीर्थकरगणधरादिप्रदर्शिते कृते च नैवास्ति न चापि भविष्यति स्वाध्यायसमं स्वाध्यायसदृशं अन्यत्तपःकर्मातः स्वाध्यायः परमं तप इति कृत्वा निरंतरं भावनीय इति ॥७९॥

स्वाध्यायभावनया श्रुतभावना स्यात्तस्याश्च भावनायाः फलं प्रदर्शयन्नाह;—

**सूई जहा ससुत्ता ण णस्सदि दु पमाददोसेण ।**
**एवं ससुत्तपुरिसो ण णस्सदि तहा पमाददोसेण ॥८०॥**

**सूची यथा ससूत्रा न नश्यति तु प्रमाददोषेण ।**
**एवं ससूत्रपुरुषो न नश्यति तथा प्रमाददोषेण ॥ ८० ॥**

**टीका**—यथा सूची लोहमयी शलाका सूक्ष्मापि ससूत्रा सूत्रमयरज्जुसमन्विता न नश्यति न चक्षुर्गोचरतामतिक्रामति प्रमाददोषेणापि अपस्कारादिमध्ये विस्मृतापि । तथैवं पुरुषोऽपि साधुरिति ससूत्रः श्रुतज्ञानसमन्वितो न नश्यति नैव संसारगर्त्ते पतति प्रमाददोषेणापि यद्यपि परमं तपः कर्त्तुं न

समर्थस्तथापि शाठ्यरहितः स्वाध्यायं यदि निरंतरं करोति तथापि कर्मक्षयं करोतीति भावः ॥ ८० ॥

चारित्रस्य प्रधानमंगं ध्यानं तदुपकारभूतं निद्राजयमाह;—

**णिद्दं जिणेहि णिच्चं णिद्दा खलु णरमचेदणं कुणदि।**
**वट्टेज्ज हू पसुत्तो समणो सव्वेसु दोसेसु ॥ ८१ ॥**

**निद्रां जय नित्यं निद्रा खलु नरमचेतनं करोति।**
**वर्तेत हि प्रसुप्तः श्रमणः सर्वेषु दोषेषु ॥ ८१ ॥**

**टीका**—निद्रां दर्शनावरणकर्मोदयमोहभावं जय तस्या वशं मा गच्छ यतः सा निद्रा नरं खलु स्फुटमचेतनं पूर्वापरविवेकहीनं करोति यतश्च प्रसुप्तः श्रमणो वर्त्तेत सर्वेषु दोषेषु यस्मान्निद्रयाक्रांतचित्तः सर्वैरपि प्रमादैः सहितो भवति संयतोऽप्यतो निद्राजयं कुर्वीत ॥ ८१ ॥

निद्रां जित्वैकाग्रचिंतानिरोध कुर्वीतेति प्रतिपादयन्नाह;—

**जह उसुगारो उसुमुज्जु वरई संपिंडियेहिं णयणेहिं।**
**तह साहू भावेज्जो चित्तं एयग्गभावेण ॥ ८२ ॥**

**यथा इषुकार इषुं ऋजु करोति संपिंडिताभ्यां नयनाभ्यां।**
**तथा साधुः भावयेत् चित्तं एकाग्रभावेन ॥ ८२ ॥**

**टीका**—यथेषुकारः कांडकार इषुं कांडं, उज्जु वरई–ऋजुं करोति प्रगुणं करोति सम्यक्पिंडिताभ्यां संमीलिताभ्यां नयनाभ्यां निरुद्धचक्षुरादिप्रसरेण तथा साधुः शुभध्यानार्थं स्वचित्तं मनोव्यापारमेकाग्रभावेन मनोवाक्कायस्थैर्यवृत्त्या पंचेंद्रियनिरोधेन च भावयेदभिरमयेदिति ॥ ८२ ॥

ध्यानं प्रपंचयन्नाह;—

**कम्मस्स बंधमोक्खो जीवाजीवे य दव्वपज्जाए।**
**संसारसरीराणि य भोगविरत्तो सया झाहि ॥ ८३ ॥**

कर्मणो बंधमोक्षौ जीवाजीवौ च द्रव्यपर्यायान्।
संसारशरीराणि च भोगविरक्तः सदा ध्याय ॥ ८३ ॥

**टीका**—कर्मणो ज्ञानावरणादेर्बंधं जीवकर्मप्रदेशसंश्लेषं तथा मोक्षं सर्वथा कर्मापायं तथा जीवान् द्रव्यभावप्राणधारणसमर्थानजीवान् पुद्गलधर्माधर्माकाशकालान् द्रव्याणि सामान्यरूपाणि पर्यायान् विशेषरूपान् संसारं चतुर्गतिभ्रमणं शरीराणि चौदारिकवैक्रियिकाहारकतैजसकार्मणानि च भोगविरक्तो रागकारणेभ्यो विरक्तः सन् सदा सर्वकालं ध्याय सम्यग्भावयेति ॥८३॥

संसारविकल्पं भावयन्नाह;—

**दव्वे खेत्ते काले भावे य भवे य होंति पंचेव।**
**परिवट्टणाणि बहूसो अणादिकाले य चिंतेज्जो ॥ ८४ ॥**

द्रव्यं क्षेत्रं कालो भावश्च भवश्च भवंति पंचैव।
परिवर्तनानि बहुशः अनादिकाले च चिंतयेत् ॥ ८४ ॥

**टीका**—द्रव्यपरिवर्त्तनानि कर्मनोकर्मतत्स्वरूपग्रहणपरित्यजनानि, क्षेत्रपरिवर्त्तनानि सर्वप्रदेशेषूत्पत्तिमरणानि, कालपरिवर्त्तनानि उत्सर्पिण्यवसर्पिणीसमयेषूत्पत्तिमरणानि, भावपरिवर्त्तनानि जघन्यमध्यमोत्कृष्टबंधस्थितिबंधरूपाणि, भवपरिवर्त्तनानि सर्वायुर्विकल्पेषूत्पत्तिमरणानि, एवं पंचपरिवर्त्तनानि अनादिकालेऽतीतकाले परिवर्त्तितानि बहुशोऽनेकवारमनेन जीवेनेत्थं चिंतयेत् ध्यायेदिति ॥ ८४ ॥

तथैतदपि ध्यायेदित्याह;—

**मोहग्गिणा महंतेण दज्झमाणे महाजगे धीरा।**
**समणा विसयविरत्ता झायंति अणंतसंसारं ॥ ८५ ॥**

मोहाग्निना महता दह्यमानं महाजगत् धीराः।
श्रमणा विषयविरक्ता ध्यायंति अनंतसंसारं ॥ ८५ ॥

**टीका**—मोहाग्निना महता दह्यमानं महाजगत् सर्वलोकं धीरा विषयाविरक्ता ध्यायंत्यनंतसंसारं चतुर्गतिभ्रमणोपेतमिति ॥ ८५ ॥

ध्यानं नाम तपस्तदारंभं न सहत इति प्रतिपादयन्नाह;—

**आरंभं च कसायं च ण सहदि तवो तहा लोए ।**
**अच्छी लवणसमुद्दो य कयारं खलु जहा दिट्ठं ॥ ८६ ॥**

**आरंभं च कषायान् च न सहते तपस्तथा लोके ।**
**अक्षि लवणसमुद्रश्च कचारं खलु यथा दृष्टम् ॥ ८६ ॥**

**टीका**—यथाऽक्षि चक्षुर्लवणसमुद्रश्च कचारं तृणादिकमंतस्थं पतितं न सहते स्फुटं तटस्थं करोतीति दृष्टं तथा तपश्चारित्रमारंभं परिग्रहोपार्जनं कषायाँश्च न सहते न क्षमते बहिष्करोतीति ॥ ८६ ॥

पंच परिवर्त्तनानि जीवेन किं तेनैवाहोस्विदन्येन तेनैव नान्येन कथमित्याशंकायामाह;—

**जह कोइ सट्ठिवरिसो तीसदिवरिसे णराहिवो जाओ ।**
**उभयत्थ जम्मसद्दो वासविभागं विसेसेइ ॥ ८७ ॥**

**यथा कश्चित् षष्टिवर्षः त्रिंशद्वर्षे नराधिपो जातः ।**
**उभयत्र जन्मशब्दो वर्षविभागं विशेषयति ॥ ८७ ॥**

**टीका**—यथा कश्चित्पुरुषः षष्टिवर्षः षष्टिसंवत्सरप्रमाणायुस्त्रिंशद्भिर्वर्षैस्तैर्नराधिपः संजातोः राजाऽभूदत उभयत्र पर्याये राज्यपर्याये तदभावे च जन्मशब्दो वर्षविभागं संवत्सरक्रमं विशेषयति राज्यपर्याये तदभावपर्याये च वर्त्तते न तत्र सर्वथा भेदं करोति सामान्यविशेषात्मकत्वात्सर्वपदार्थानां यतः सर्वथा नित्यक्षणिके चार्थक्रियाया अभावादर्थक्रियायाश्चाभावे सर्वेषामभावः स्यादभावस्य च न [1]ग्राहकः प्रमाणाभावादिति ॥ ८७ ॥

---

१ च ग्राहकप्रमाणाभावात् ख—ग पुस्तके ।

दृष्टांतं दार्ष्टांतेन योजयन्नाह;—

**एवं तु जीवदव्वं अणाइणिहणं विसेसियं णियमा ।**
**रायसरिसो दु केवलपज्जाओ तस्स दु विसेसो ॥ ८८ ॥**

**एवं तु जीवद्रव्यं अनादिनिधनं विशेष्यं नियमात् ।**
**राजसदृशस्तु केवलं पर्यायस्तस्य तु विशेषः ॥ ८८ ॥**

**टीका**—यथा जन्मशब्दो राज्ययुक्तकाले राज्याभावकाले च, एवमेव जीवद्रव्यमनादिनिधनं सर्वकालमवस्थितं विशेष्यमनेकप्रकाराधारतया निर्दिष्टं केवलं तु तस्य पर्यायो नारकादिमनुष्यादिरूपो राज्यपर्यायः स दृष्टो विशेषो विशेषणं न सर्वथा भेदं करोति सर्वास्ववस्थासु यत इति ॥ ८८ ॥

द्रव्यार्थिकनयापेक्षयैकत्वं प्रतिपाद्य पर्यायार्थिकनयापेक्षया भेदं प्रतिपादयन्नाह;—

**जीवो अणाइणिहणो जीवोत्ति य णियमदो ण वत्तव्वो ।**
**जं पुरिसाउगजीवो देवाउगजीविदविसिट्ठो ॥ ८९ ॥**

**जीवः अनादिनिधनो जीव इति च नियमतो न वक्तव्यः ।**
**यत् पुरुषायुष्कजीवो देवायुष्कजीवितविशिष्टः ॥ ८९ ॥**

**टीका**—जीवोऽनादिनिधन आदिवर्जितो निधनवर्जितश्च जीव इति च निश्चयेन सर्वथा गुणादिरूपेणापि नियमतो न वक्तव्यो न वाच्यो यतः पुरुषायुष्को जीवो देवायुष्काद्विशिष्टो न हि य एव देवः स एव मनुष्यः, यश्च मनुष्यो नासौ तिर्यक्, यश्च तिर्यक् नासौ नारकः पर्यायभेदेन भेदादिति ॥ ८९ ॥

जीवपर्यायान् प्रतिपादयन्नाह,—

**संखेज्जमसंखेज्जमणंतकप्पं च केवलं णाणं।**
**तह रायदोसमोहा अण्णे वि य जीवपज्जाया ॥९०॥**

**संख्येयमसंख्येयमनंतकल्पं च केवलं ज्ञानं।**
**तथा रागद्वेषमोहा अन्येपि च जीवपर्यायाः ॥ ९० ॥**

**टीका**—संख्यातविषयत्वात्संख्यातं मतिज्ञानं श्रुतज्ञानं च तथाऽसंख्यातविषयत्वादसंख्यातमवधिज्ञानं मनःपर्ययज्ञानं चानंतविषयत्वादनंतकल्पं केवलज्ञानमथवा संख्यातासंख्यातानंतवस्तुपरिच्छेदकत्वात्संख्यातासंख्यातानंतकल्पं केवलज्ञानमनंताविकल्पं चैते सर्वे पर्यायास्तथा रागद्वेषमोहपर्यायास्तथाऽन्येपि जीवस्य पर्याया नारकत्वादयो बालयुवस्थविरत्वादयश्चेति ॥ ९० ॥

तथैवाह,—

**अकसायं तु चरित्तं कसायवसिओ असंजदो होदि।**
**उवसमदि जह्मि काले तक्काले संजदो होदि ॥ ९१ ॥**

**अकषायं तु चरित्रं कषायवशगः असंयतो भवति।**
**उपशाम्यति यस्मिन् काले तत्काले संयतो भवति ॥ ९१ ॥**

**टीका**—चारित्रं नामाकषायत्वं यतः कषायवशगोऽसंयतः, मिथ्यात्वकषायादियुक्तो न संयतः स्यात् यस्मिन् काले उपशाम्यति व्रतस्थः सन् कषायान्न करोति तस्मिन् काले संयतश्चारित्रस्थो भवति। यस्मात्स एव पुरुषो मिथ्यात्वादियुक्तो मिथ्यादृष्टिरसंयतः सम्यक्त्वादियुक्तः सन् स एव पुनः सम्यग्दृष्टिः संयतश्च । पुरुषत्वसामान्येन पुनरभेदस्तस्मात्सर्वोऽपि भेदाभेदात्मक इति ॥ ९१ ॥

यतः कषायवशगोऽसंयतो भवतीति ततः;—

**वरं गणपवेसादो विवाहस्स पवेसणं।**
**विवाहे रागउप्पत्ति गणो दोसाणमागरो ॥ ९२ ॥**

**वरं गणप्रवेशात् विवाहस्य प्रवेशनं ।**
**विवाहे रागोत्पत्तिः गणो दोषाणामाकरः ॥ ९२ ॥**

**टीका**—यतेरंतकाले गणप्रवेशाच्छिष्यादिमोहनिबंधनकुलमोहकारणात्पंचपार्श्वस्थसंपर्काद्वरं श्रेष्ठं विवाहे प्रवेशनं वरं गृहप्रवेशो यतो विवाहे दारादिग्रहणे रागोत्पत्तिर्गणः पुनः सर्वदोषाणामाकरः सर्वेऽपि मिथ्यात्वासंयमकषायरागद्वेषादयो भवंतीति ॥ ९२ ॥

कारणाभावेन दोषाणामभाव इति प्रतिपादयन्नाह;—

**पच्चयभूदा दोसा पच्चयभावेण णत्थि उप्पत्ती।**
**पच्चयभावे दोसा णस्संति णिरासया जहा बीयं ॥ ९३ ॥**

**प्रत्ययभूता दोषा :प्रत्ययाभावेन नास्ति उत्पत्तिः ।**
**प्रत्ययाभावात् दोषा नश्यंति निराश्रया यथा बीजं ॥ ९३ ॥**

**टीका**—प्रत्ययात्कर्मबंधात् शिष्यादिमोहनिबंधनकुलमोहकारणाद्भूताः संजाता दोषा रागद्वेषादयः कलुषजीवपरिणामाः, प्रत्ययाभावाच्च रागद्वेषादिकारणभूतकर्माभावाच्च नास्त्युत्पत्तिर्नैव प्रादुर्भावस्तेषां दोषाणां यतश्चोत्पत्तिर्नास्ति ततः प्रत्ययाभावात्कारणाभावाद्दोषा मिथ्यात्वासंयमकषाययोगनिर्वर्त्तितजीवपरिणामा नश्यंति निर्मूलं क्षयमुपव्रजंति निराश्रयाः संतः स्वकीयप्रादुर्भावकारणमंतरेण, यथा प्रत्ययाभावाद्बीजमंकुरं न जनयति बीजस्यांकुरोत्पत्तिनिमित्तं क्षितिजलपवनादित्यरश्मयस्तेषामभावे विपरीते पतितं बीजं यथा नश्यति । येषां कारणानां सद्भावे ये दोषा

भावात्स्वकारणाभावाद्बीजस्यानुत्पत्तिरंकुरत्वेन तत उत्पत्त्यभावान्निराश्रया रागद्वेषादयो दोषा नश्यंति यथा बीजमुत्पत्तिमंतरेण पश्चान्नश्यतीति ॥ ९३ ॥

तथा;—

**हेदू पच्चयभूदा हेदुविणासे विणासमुवयंति ।**
**तह्मा हेदुविणासो कायव्वो सव्वसाहूहिं ॥ ९४ ॥**

**हेतवः प्रत्ययभूता हेतुविनाशे विनाशमुपयांति ।**
**तस्मात् हेतुविनाशः कर्तव्यः सर्वसाधुभिः ॥ ९४ ॥**

**टीका**—ततः क्रोधमानमायालोभाः प्रत्ययभूताः परिग्रहादयो लोभादिषु सत्सु जायंते ततस्तेषां लोभादीनां हेतूनां विनाशे प्रध्वंसे विनाशमुपयांति परिग्रहादयो यत एवं ततो हेतुविनाशः कर्तव्यः सर्वसाधुभिः प्रमत्तादिक्षीणकषायांतैर्लोभादीनामभावे परिग्रहेच्छा न जायते मूर्च्छादिपरिग्रहस्तदभावे प्रयत्न. कार्यः । पूर्वकारिकया कारणाभावे कार्यस्याभावः प्रतिपादितोऽनया पुनः कार्यस्याभावो निगदितः । अथवा पूर्वगाथोपसंहारार्थेयं गाथा तत एवमभिसंबंधः कार्यः, हेतवः कारणानि प्रत्ययभूतानि कार्याणि हेतुविनाशे तेषां सर्वेषा विनाशो यतः कारणाभावे कार्यस्य चाभावस्ततो. हेतुविनाशे यत्नः कार्य इति ॥ ९४ ॥

दृष्टांतं दार्ष्टांतेन योजयन्नाह:—

**जं जं जे जे जीवा पज्जायं परिणमंति संसारे ।**
**रायस्स य दोसस्स य मोहस्स वसा मुणेयव्वा ॥ ९५ ॥**

**यं यं ये ये जीवाः पर्यायं परिणमंति संसारे ।**
**रागस्य च दोषस्य च मोहस्य वशा ज्ञातव्याः ॥ ९५ ॥**

**टीका**—यं यं पर्यायविशेषं नारकत्वादिस्वरूपं परिणमंति गृह्णंति जीवाः संसारे ते पर्यायास्ते च जीवा रागस्य द्वेषस्य मोहस्य च वशास्तदायत्ताः परिणमंतीति ज्ञातव्याः कर्मायत्तत्वात्सर्वसांसारिकपर्यायाणामिति ॥ ९५ ॥

रागद्वेषफलं प्रतिपादयन्नाह;—

**अत्थस्स जीवियस्स य जिब्भोवत्थाण कारणं जीवो।**
**मरदि य मारावेदि य अणंतसो सव्वकालं तु ॥ ९६ ॥**

**अर्थस्य जीवितस्य च जिह्वोपस्थयोः कारणं जीवः।**
**म्रियते च मारयति च अनंतशः सर्वकालं ॥ ९६ ॥**

**टीका**—अर्थस्य कारणं गृहपशुवस्त्रादिनिमित्तं. जीवितस्य च कारणं आत्मरक्षार्थं जिह्वायाः कारणं आहारस्य हेतोरुपस्थस्य कारणं कामनिमित्तं जीवो म्रियते स्वयं प्राणत्यागं करोति मारयति चान्यांश्च हिनस्ति प्राणविघातं च कारयति अनंतशोऽनंतवारान् सर्वकालमेवेति ॥ ९६ ॥

तथा;—

**जिब्भोवत्थणिमित्तं जीवो दुक्खं अणादिसंसारे।**
**पत्तो अणंतसो तो जिब्भोवत्थे जयह दाणिं ॥ ९७ ॥**

**जिव्होपस्थानिमित्तं जीवो दुःखं अनादिसंसारे।**
**प्राप्तः अनंतशः ततः जिव्होपस्थं जय इदानीं ॥ ९७ ॥**

**टीका**—रसनेन्द्रियनिमित्तं स्पर्शनेन्द्रियानिमित्तं चानादिसंसारे जीवो दुःखं प्राप्तोऽनंतशोऽनंतवारान् यतोऽतो जिह्वामुपस्थं च जय सर्वथा त्यजेदानीं सांप्रतमिति ॥ ९७ ॥

**चदुरंगुला च जिब्भा असुहा चदुरंगुलो उवत्थो वि।**
**अट्ठंगुलदोसेण दु जीवो दुक्खं खु पप्पोदि ॥ ९८ ॥**

चतुरंगुला च जिह्वा अशुभा चतुरंगुल उपस्थोपि ।
अष्टांगुलदोषेण तु जीवो दुःखं खलु प्राप्नोति ॥ ९८ ॥

टीका—चतुरंगुलप्रमाणा जिह्वा अशुभा चतुरंगुलप्रमाणं चोपस्थं मैथुनक्रियानिमित्तं एतदष्टांगुलदोषेणैव जीवो दुःखं प्राप्नोति स्फुटं यतस्ततो जिह्वामुपस्थं च त्यज जयेति ॥ ९८ ॥

स्पर्शनजयकारणमाह;—

**बीहेदव्वं णिच्चं कट्ठत्थस्स वि तहित्थिरूवस्स ।**
**हवदि य चित्तक्खोभो पच्चयभावेण जीवस्स ॥ ९९ ॥**

भेतव्यं नित्यं काष्ठस्थादपि तथा स्त्रीरूपात् ।
भवति च चित्तक्षोभः प्रत्ययभावेन जीवस्य ॥ ९९ ॥

टीका—भेतव्यं नित्यं सर्वकालं त्रासः कर्त्तव्यः काष्ठस्थादपि स्त्रीरूपात् काष्ठलेपचित्रादिकर्मणोऽपि स्त्रीरूपादुद्वेगः कर्त्तव्यो यतो भवति च्चित्तक्षोभः मनसश्चलनं प्रत्ययभावेन विश्वासात्कारणवशाज्जीवस्येति॥९९॥

तथा;—

**घिदभरिदघडसरित्थो पुरिसो इत्थी बलंतअग्गिसमा ।**
**तो महिलेयं ढुक्का णट्ठा पुरिसा सिवं गया इयरे॥१००॥**

घृतभृतघटसदृशः पुरुषः स्त्रीज्वलदग्निसमा ।
तां महिलामंतं ढौकिता नष्टाः पुरुषाः शिवं गता इतरे ॥१००॥

टीका—पुरुषो घृतभृतकुंभसदृशः स्त्री पुनर्ज्वलदनलसदृशी यथा प्रज्वलदग्निसमीपे स्त्यान [1] घृतपूर्णघटः शीघ्रं प्रक्षिराति तथा स्त्रीसमीपे मनुष्या यत एवं ततो महिलायाः समीपमुपस्थिता- जल्पहासादिवशं गताः पुरुषा नष्टा ये च न तत्र संगतास्ते शिवं गताः शिवंगतिं [2] प्राप्ता इति ॥ १०० ॥

१ अस्य स्थाने ' स्थितः ' इत्यनेन पाठेन भाव्यं । २ शिवा गतिं प्रेस–पुस्तके ।

तथा;—

**मायाए वहिणीए धूआए मूइ वुड्ढ इत्थीए ।**
**बीहेदव्वं णिच्चं इत्थीरूवं णिरावेक्खं ॥ १०१ ॥**

**मातुः भगिन्या दुहितुः मूकाया वृद्धायाः स्त्रियाः ।**
**भेतव्यं नित्यं स्त्रीरूपं निरपेक्षं ॥ १०१ ॥**

**टीका**—मातुः स्त्रीरूपाद्भगिन्याश्च स्त्रीरूपात् दुहितुश्च स्त्रीरूपात् मूकाया वृद्धायाश्च स्त्रीरूपात् भेतव्यं नित्यं निरपेक्षं यतः स्त्री तु पावक-रूपमिव सर्वत्र दहतीति ॥ १०१ ॥

तथा;—

**हत्थपादपरिच्छिण्णं कण्णणासवियप्पियं ।**
**अविवास सदिं णारिं दूरदो परिवज्जए ॥ १०२ ॥**

**हस्तपादपरिच्छिन्नां कर्णनासाविकल्पितां ।**
**अविवासस्सं सतीं नारीं दूरतः परिवर्जयेत् ॥ १०२ ॥**

**टीका**—हस्तच्छिन्ना पादच्छिन्ना च कर्णहीना नासिकाविहीना च सुष्ठु विरूपा यद्यपि भवति तथापि अविवस्त्रां सती नग्नामित्यर्थः, नारीं दूरतः परिवर्जयेत् यतः काममलिनस्तां वांछेदिति ॥ १०२ ॥

ब्रह्मचर्यभेदं प्रतिपादयन्नाह;—

**मण बंभचेर वचि बंभचेर तह काय बंभचेरं च ।**
**अहवा हु बंभचेरं दव्वं भावं ति दुवियप्पं ॥ १०३ ॥**

**मनसि ब्रह्मचर्यं वचसि ब्रह्मचर्यं तथा काये ब्रह्मचर्यं च ।**
**अथवा हि ब्रह्मचर्यं द्रव्यं भावमिति द्विविकल्पं ॥ १०३ ॥**

**टीका**—मनसि ब्रह्मचर्यं वचसि ब्रह्मचर्यं काये ब्रह्मचर्यमिति त्रिप्र-

कारं ब्रह्मचर्यमथवा स्फुटं ब्रह्मचर्यं, द्रव्यभावभेदेन द्विविधं तत्र भावब्रह्मचर्यं प्रधानमिति ॥ १०३ ॥

यतः;—

**भावविरदो दु विरदो ण दव्वविरदस्स सुग्गई होई।**
**विसयवणरमणलोलो धरियव्वो तेण मणहत्थी ॥१०४॥**

**भावविरतस्तु विरतो न द्रव्यविरतस्य सुगतिः भवति।**
**विषयवनरमणलोलो धारयितव्यः तेन मनोहस्ती ॥ १०४ ॥**

**टीका**—भावेन विरक्तोंऽतरंगेण च यो विरक्तः स एव विरतः संयतो न द्रव्येणाब्रह्मवृत्या विरतस्य तस्य सुगतिः शोभना गतिर्भवति यतोऽतो विषया रूपाद्यस्त एव वनमारामस्तस्मिन् रमणलोलः क्रीडालंपटो धारयितव्यो नियमितव्यस्तेन मनोहस्ती चित्तकुंजर इति ॥ १०४ ॥

अब्रह्मकारणं द्रव्यमाह,—

**पढमं विउलाहारं विदियं कायसोहणं।**
**तदियं गंधमल्लाइं चउत्थं गीयवाइयं ॥ १०५ ॥**

**प्रथमं विपुलाहारः द्वितीयं कायशोधनं।**
**तृतीयं गंधमाल्यानि चतुर्थं गीतवादित्रं ॥ १०५ ॥**

**टीका**—प्रथममब्रह्मचर्यं विपुलाहारः प्रचुरगृह्यान्नग्रहणं, द्वितीयमब्रह्म कायशोधनं स्नानाभ्यंगनोद्वर्त्तनादिभी रागकारणैः शरीरस्य संस्करणं, तृतीयमब्रह्म गंधमाल्यानि यक्षकर्दमार्द्रमहिषीधूपादिना सुगंधग्रहणं, चतुर्थमब्रह्म गीतवादित्रादि सप्तस्वरपंचातोद्यवंशवीणातंत्रीप्रभृतिकमिति ॥१०५॥

तथा;—

**तह सयणसोधणं पि य इत्थिसंसग्गं पि अत्थसंगहणं।**
**पुव्वरदिसरणमिंदियविसयरदी पणिदरससेवा ॥ १०६ ॥**

**तथा शयनशोधनमपि च स्त्रीसंसर्गोपि अर्थसंग्रहणं ।**
**पूर्वरतिस्मरणं इंद्रियविषयरतिः प्रणीतरससेवा ॥ १०६ ॥**

**टीका**—तथा शयनं तूलिकापर्यंकादिकं शोधनं क्रीडागृहं चित्रशाशादिकं रहस्यस्थानं कामोद्रेककारणं पंचममब्रह्म । तथापि च स्त्रीसंसर्गे रागोत्कटवनिताभिः कटाक्षनिरीक्षणपराभिरुपप्लवशीलाभिः संपर्कः क्रीडनं षष्ठमब्रह्म । तथार्थस्य सुवर्णादिकस्याभरणवस्त्रादिकस्य च ग्रहणं सप्तममब्रह्म । तथा पूर्वरतिस्मरणं पूर्वस्मिन् काले यत् क्रीडितं तस्यानुस्मरणं चिंतनमष्टममब्रह्म । तथेंद्रियविषयेषु रूपरसगंधशब्दस्पर्शेषु कामांगेषु रतिः समीहा नवममब्रह्म । तथा प्रणीतरससेवा इष्टरसानामुपसेवनं दशममब्रह्म । अब्रह्मकारणत्वादब्रह्मेति ॥ १०६ ॥

तस्य दशप्रकारस्यापि परिहारमाह;—

**दसविहमब्बंभमिणं संसारमहादुहाणमावाहं ।**
**परिहरइ जो महप्पा सो दढबंभव्वदो होदि ॥ १०७ ॥**

**दशविधमब्रह्म इदं संसारमहादुःखानामावाहं ।**
**परिहरति यो महात्मा स दृढब्रह्मव्रतो भवति ॥ १०७ ॥**

**टीका**—एवं दशप्रकारमप्यब्रह्मेदं संसारकारणानां महद्दुःखानामावाहमवस्थानं प्रधानहेतुभूतं परिहरति यो महात्मा संयतः स दृढब्रह्मव्रतो भवति । भावाब्रह्मकारणं द्रव्याब्रह्मकारणं च यः परित्यजति तस्योभयथापि ब्रह्मचर्यं सम्यक् तिष्ठतीति स च चारित्रवानिति ॥ १०७ ॥

परिग्रहपरित्यागे फलमाह;—

**कोहमदमायलोहेहिं परिग्गहे लयइ संसजइ जीवो ।**
**तेणुभयसंगचाओ कायव्वो सव्वसाहूहिं ॥ १०८ ॥**

**क्रोधमदमायालोभैः परिग्रहे लगति संसजति जीवः।**
**तेनोभयसंगत्यागः कर्तव्यः सर्वसाधुभिः ॥ १०८॥**

**टीका**—यतः क्रोधमदमायालोभैः परिग्रहे लगति संसजति परिग्रहत्वात् गृह्णाति जीवस्तेन कारणेनोभयसंगत्यागः कर्त्तव्यो बाह्याभ्यंतरपरिग्रहपरिहारः कार्यः। उभयाब्रह्म च परिहरणीयं येन सह क्रोधमानमायालोभाश्च यत्नतस्त्याज्याः सर्वसाधुभिरिति ॥ १०८॥

ततः;—

**णिस्संगो णिरारंभो भिक्खाचरियाए सुद्धभावो य।**
**एगागी झाणरदो सव्वगुणड्ढो हवे समणो॥ १०९ ॥**

**निःसंगो निरारंभो भिक्षाचर्यायां शुद्धभावश्च।**
**एकाकी ध्यानरतः सर्वगुणाढ्यो भवेत् श्रमणः॥ १०९॥**

**टीका**—उभयपरिग्रहाभावैर्निःसंगो मूर्च्छारहितस्ततश्च निरारंभः पापक्रियादिभ्यो निवृत्तस्ततश्च भिक्षाचर्यायां शुद्धभावो भवति ततश्चैकाकी ध्यानरतः संजायते ततश्च सर्वगुणाढ्यः सर्वगुणसंपन्नो भवेत् ॥ १०९॥

श्रमणविकल्पमाह;—

**णामेण जहा समणो ठावणिए तह य दव्वभावेण।**
**णिक्खेवो वीह तहा चदुव्विहो होइ णायव्वो॥ ११०॥**

**नाम्ना यथा श्रमणः स्थापनया तथा च द्रव्यभावाभ्यां।**
**निक्षेपोपि इह तथा चतुर्विधो भवति ज्ञातव्यः॥ ११०॥**

**टीका**—श्रमणगोचरं निक्षेपमाह,—नाम्ना यथा श्रमणः स्थापनया तथैव तत्र द्रव्येण भावेन च तथैव द्रष्टव्यः। नामश्रमणमात्रं नामश्रमणः तदाकृतिर्लेपादिषु स्थापनाश्रमणो गुणरहितलिंगग्रहणं द्रव्यश्रमणो मूलगु-

णोत्तरगुणानुष्ठानप्रवणभावो भावश्रमणः । एवमिह निक्षेपस्तथैवागमप्रतिपादितक्रमेण चतुर्विधो भवति ज्ञातव्य इति ॥ ११० ॥

तेषां मध्ये भावश्रमणं प्रतिपादयन्नाह;—

**भावसमणा हु समणा ण सेससमणाण सुग्गई जम्हा ।**
**जहिऊण दुविहमुवहिं भावेण सुसंजदो होह ॥ १११ ॥**

**भावश्रमणा हि श्रमणा न शेषश्रमणानां सुगतिर्यस्मात् ।**
**हित्वा द्विविधमुपधिं भावने सुसंयतो भव ॥ १११ ॥**

**टीका**—भावश्रमणा एव श्रमणा यतः शेषश्रमणानां नामस्थापनाद्रव्याणां न सुगतिर्यस्मात्तस्माद्विविधमुपधिं द्रव्यभावरूपं परित्यज्य भावेन सुसंयतो भवेति ॥ १११ ॥

भिक्षाशुद्धिं च कुर्वित्याह;—

**वदसीलगुणा जम्हा भिक्खाचरिया विसुद्धिए ठंति ।**
**तम्हा भिक्खाचरियं सोहिय साहू सदा विहारिज्ज ॥ ११२ ॥**

**व्रतशीलगुणा यस्मात् भिक्षाचर्याया विशुद्ध्यां तिष्ठंति ।**
**तस्मात् भिक्षाचर्यां शोधयित्वा साधुः सदा विहरेत् ॥ ११२ ॥**

**टीका**—व्रतानि शीलानि गुणाश्च यस्माद्भिक्षाचर्याया विशुद्ध्यां सत्यां तिष्ठंति तस्माद्भिक्षाचर्यां संशोध्य साधुः सदा विहरेत् । भिक्षाचर्याशुद्धिश्च प्रधानं चारित्रं सर्वशास्त्रसारभूतामिति ॥ ११२ ॥

तथैतदपि विशोध्याचरेदित्याह,—

**भिक्खं वक्कं हिययं सोधिय जो चरदि णिच्च सो साहू ।**
**एसो सुट्ठिद साहू भणिओ जिणसासणे भयवं ॥ ११३ ॥**

**भिक्षां वाक्यं हृदयं शोधयित्वा यः चरति नित्यं स साधुः ।**
**एष सुस्थितः साधुर्भणितो जिनशासने भगवान् ॥ ११३ ॥**

टीका—भिक्षां गोचरशुद्धिं वाक्यं वचनशुद्धिं हृदयं मनःशुद्धिं विशोध्य यश्चरति चारित्रोद्योगं करोति साधुर्नित्यं स एष सुस्थितः सर्वगुणोपेतः साधुर्भणितो भगवान्, क्व? जिनशासने सर्वज्ञागमे इति ॥११३॥

तथैतदपि सुष्ठु ज्ञात्वा चरत्वित्याह;—

**दव्वं खेत्तं कालं भावं सत्तिं च सुट्ठु णाऊण ।**
**झाणज्झयणं च तहा साहू चरणं समाचरऊ ॥ ११४ ॥**

**द्रव्यं क्षेत्रं कालं भावं शक्तिं च सुष्ठु ज्ञात्वा ।**
**ध्यानाध्ययनं च तथा साधुश्चरणं समाचरतु ॥ ११४ ॥**

टीका—द्रव्यमाहारशरीरादिकं क्षेत्रं जांगलरूपादिकं कालं सुषमासुषमादिकं शीतोष्णादिकं भावं परिणामं च सुष्ठु ज्ञात्वा ध्यानमध्ययनं तथा ज्ञात्वा साधुश्चरणं समाचरतु । एवं कथितप्रकारेण चारित्रशुद्धिर्भवतीति ॥ ११४ ॥

तथोभयत्यागफलमाह,—

**चाओ य होइ दुविहो संगच्चाओ कलत्तचाओ य ।**
**उभयच्चायं किच्चा साहू सिद्धिं लहू लहदि ॥ ११५ ॥**

**त्यागश्च भवति द्विविधः संगत्यागः कलत्रत्यागश्च ।**
**उभयत्यागं कृत्वा साधुः सिद्धिं लघु लभते ॥ ११५ ॥**

टीका—त्यागश्च भवति द्विविधः संगत्यागः कलत्रत्यागश्च तत उभयत्यागं कृत्वा साधुर्लघु शीघ्रं सिद्धिं लभते न तत्र संदेह इति ॥ ११५ ॥

चारित्रशुद्धिमसंयमप्रत्ययकषायप्रत्यययोगप्रत्ययस्वरूपशुद्धिं च प्रतिपाद्य दर्शनशुद्धिं मिथ्यात्वप्रत्ययशुद्धिं च प्रतिपादयन्नाह,—

**पुढवीकायिगजीवा पुढवीए चावि अस्सिदा संति ।**
**तम्हा पुढवीए आरंभे णिच्चं विराहणा तेसिं ॥ ११६ ॥**

**पृथिवीकायिकजीवाः पृथिव्याः चापि आश्रिताः संति ।**
**तस्मात् पृथिव्या आरंभे नित्यं विराधना तेषां ॥ ११६ ॥**

**टीका**—पृथिवीकायिकजीवास्तद्वर्णगंधरसाः सूक्ष्माः स्थूलाश्च तदाश्रिताश्चान्ये जीवास्त्रसाः शेषकायाश्च संति तस्मात्तस्याः पृथिव्या विराधनादिके खननदहनादिके आरंभे आरंभसमारंभसंरंभादिके च कृते निश्चयेन तेषां जीवानां तदाश्रितानां प्राणव्यपरोपणं स्यादिति । एवमप्कायिकतेजःकायिकवायुकायिकवनस्पतिकायिकत्रसकायिकानां तदाश्रितानां च समारंभे ध्रुवं विराधनादिकं भवतीति निश्चेतव्यम् ॥ ११६ ॥

**तम्हा पुढविसमारंभो दुविहो तिविहेण वि ।**
**जिणमग्गाणुचारीणं जावज्जीवं ण कप्पई ॥ ११७ ॥**

**तस्मात् पृथिवीसमारंभो द्विविधः त्रिविधेनापि ।**
**जिनमार्गानुचारिणां यावज्जीवं न कल्प्यते ॥ ११७ ॥**

**टीकाः**—यतः पृथिवीकायिकादीनां तदाश्रितानां च समारंभे ध्रुवा हिंसा तस्मात्पृथिवीसमारंभः खननादिको द्विविधो द्विप्रकारो पृथिवीकायिकतदाश्रितोभयरूपोऽपि त्रिविधेन मनोवाक्कायरूपेण जिनमार्गानुचारिणां यावज्जीवं न कल्प्यते न युज्यत इति । एवमप्तेजोवायुवनस्पतित्रसानां द्विप्रकारेऽपि समारंभेऽवगाहनसेचनज्वालनतापनवीजनमुखवातकरणच्छेदनतक्षणादिकं न कल्प्यते जिनमार्गानुचारिण इति ॥ ११७ ॥

असंयमप्रत्ययं तद्विशुद्धिं च प्रतिपाद्य मिथ्यात्वप्रत्ययं तद्विशुद्धिं प्रतिपादयन्नाह;—

**जो पुढविकाइजीवे ण वि सद्दहदि जिणेहिं णिद्दिट्ठे ।**
**दूरत्थो जिणवयणे तस्स उवट्ठावणा णत्थि ॥ ११८ ॥**

**यः पृथिवीकायिकजीवान् नापि श्रद्दधाति जिनैः निर्दिष्टान्।**
**दूरस्थो जिनवचनात् तस्य उपस्थापना नास्ति॥ ११८॥**

**टीका**—यः पृथिवीकायिकान् जीवान् न श्रद्दधाति नाभ्युपगच्छति जिनैः प्रज्ञप्तान् प्रतिपादितान् स जिनवचनात् दूरं स्थितो न तस्योपस्थापनाऽस्ति न तस्य सम्यग्दर्शनादिषु संस्थितिर्विद्यते मिथ्यात्वादिति। एवमप्कायिकान् वनस्पतिकायिकान् त्रसकायिकाँश्च तदाश्रिताँश्च यो नाभ्युपगच्छति तस्याप्युपस्थापना नास्ति सोऽपि मिथ्यादृष्टिरेव न कदाचिदपि मुक्तिमार्गे तस्य स्थितिर्यतो दर्शनाभावेन चारित्रस्य ज्ञानस्य चाभाव एव दर्शनाविनाभावित्वात्तयोरिति॥ ११८॥

यः पुनः श्रद्दधाति स सद्दृष्टिरिति प्रतिपादयन्नाह,—

**जो पुढविकायजीवे अइसद्दहदे जिणेहिं पण्णत्ते।**
**उवलद्धपुण्णपावस्स तस्सुवट्ठावणा अत्थि॥ ११९॥**

**यः पृथिवी कायिकजीवान् अतिश्रद्दधाति जिनैः प्रज्ञप्तान्।**
**उपलब्धपुण्यपापस्य तस्योपस्थापना अस्ति॥ ११९॥**

**टीका**—यः पृथिवीकायिकजीवाँस्तदाश्रिताँश्चातिशयेन श्रद्दधाति मन्यते जिनैः प्रज्ञप्तान् तस्योपलब्धपुण्यपापस्योपस्थापना विद्यते मोक्षमार्गे तस्य संस्थितिरवश्यंभाविनीति। एवमप्कायिकतेजःकायिकवायुकायिकवनस्पतिकायिकत्रसकायिकाँस्तदाश्रिताँश्च यः श्रद्दधाति मन्यतेऽभ्युपगच्छति तस्योपलब्धपुण्यपापस्योपस्थापना विद्यत इति॥ ११९॥

न पुनः श्रद्दधाति तस्य फलमाह,—

**ण सद्दहदि जो एदे जीवे पुढविदं गदे।**
**स गच्छे दिग्घमद्धाणं लिंगत्थो वि हु दुम्मदी॥१२०॥**

**न श्रद्दधाति य एतान् जीवान् पृथिवीत्वं गतान्।**
**स गच्छेत् दीर्घमध्वानं लिंगस्थोपि हि दुर्मतिः॥ १२०॥**

**टीका**—न श्रद्दधाति नाभ्युपगच्छति य एतान् जीवान् पृथिवीत्वं गतान् पृथिवीकायिकान् तदाश्रितांश्च स गच्छेद्दीर्घमध्वानं दीर्घसंसारं लिंगस्थोऽपि नाग्न्यादिलिंगसहितोऽपि दुर्मतिर्यत इति । एवमप्कायिकतेजःकायिकवायुकायिकवनस्पतिकायिकत्रसकायिकान् तदाश्रितांश्च यो न श्रद्दधाति नाभ्युपगच्छति स लिंगस्थोऽपि दुर्मतिर्दीर्घसंसारं गच्छेदिति॥१२०॥

एवंभूतान् जीवान् पातुकामः श्रीगणधरदेवस्तीर्थंकरपरमदेवं पृष्टवानिति, तत्प्रश्नस्वरूपमाह;——

**कधं चरे कधं चिट्ठे कधमासे कधं सये ।**
**कधं भुंजेज्ज भासिज्ज कधं पावं ण वज्झदि ॥ १२१ ॥**

**कथं चरेत् कथं तिष्ठेत् कथमासीत कथं शयीत ।**
**कथं भुंजीत भाषेत कथं पापं न बध्यते ॥ १२१ ॥**

**टीका**—एवं प्रतिपादितक्रमेण जीवनिकायकुले जगति साधुः कथं केन प्रकारेण चरेद्गच्छेदनुष्ठानं वा कुर्यात् कथं तिष्ठेत् कथमासीत कथं वा शयीत कथं भुंजीत कथं भाषेत कथं वदेत् कथं पापं न बध्यते केन प्रकारेण पापागमो न स्यादिति ॥ १२१ ॥

प्रश्नमालाया उत्तरमाह;——

**जदं चरे जदं चिट्ठे जदमासे जदं सये ।**
**जदं भुंजेज्ज भासेज्ज एवं पावं ण बज्झइ ॥ १२२ ॥**

**यत्नेन चरेत् यत्नेन तिष्ठेत् यत्नेनासीत यत्नेन शयीत ।**
**यत्नेन भुंजीत भाषेत एवं पापं न बध्यते ॥ १२२ ॥**

**टीका**—यत्नेनेर्यापथसमितिशुद्ध्या चरेत् यत्नेन तिष्ठेत् महाव्रतादिसंपन्नो यत्नेनासीत प्रतिलिख्य जीवानविराधयन् पर्यंकादिना यत्नेन शयीत प्रतिलिख्योद्वर्त्तनपरावर्त्तनादिकर्म कुर्वन् संकुचितात्मा रात्रौ शयनं कुर्यात् यत्नेन भुंजीत षट्चत्वारिंशद्दोषवर्जितां भिक्षां गृह्णीयाद्यत्नेन भाषेत भाषासमितिक्रमेण सत्यव्रतोपपन्नः, एवमनेन प्रकारेण पापं च न बध्यते कर्मास्रवो न भवतीति ॥ १२२ ॥

यत्नेन चरतः फलमाह,—

**जदं तु चरमाणस्स दयापेहुस्स भिक्खुणो ।**
**णवं ण बज्झदे कम्मं पोराणं च विधूयदि ॥ १२३ ॥**

**यत्नेन तु चरतः दयाप्रेक्षकस्य भिक्षोः ।**
**नवं न बध्यते कर्म पुराणं च विधूयते ॥ १२३ ॥**

**टीका**—यत्नेनाचरतो भिक्षोर्दयाप्रेक्षकस्य दयाप्रेक्षिणो नवं न बध्यते कर्म चिरंतनं च विधूयते निराक्रियते । एवं यत्[illegible]ानस्तिष्ठता यत्नेनासीनेन यत्नेन शयनेन यत्नेन भुंजानेन यत्नेन भा[illegible] [illegible]नं कर्म न बध्यते चिरंतनं च क्षीयते ततः सर्वथा यत्नाचारेण भ[illegible] [illegible]२३॥

समयसारस्योपसंहारगाथेयं,—

**एवं विधाणचरियं जाणित्ता आचरिज्ज जो भिक्खू ।**
**णासेऊण दु कम्मं दुविहं पि य लहु लहइ सिद्धिं ॥१२४॥**

**एव विधानचरितं ज्ञात्वा आचरेत् यो भिक्षुः ।**
**नाशयित्वा तु कर्म द्विविधमपि च लघु लभते सिद्धिं॥१२४ ॥**

**टीका**—एवमनेन प्रकारेण विधानचरितं क्रियानुष्ठानं ज्ञात्वा आचरति यो भिक्षुः स साधुर्नाशयित्वा कर्म द्विप्रकारमपि शुभाशुभरूपमपि द्रव्यरूपं भावरूपं वा शीघ्रं लभते सिद्धिं यत एवं चारित्रान्मोक्षो भवति सर्वस्य सारभूतं चारित्रं तत इति दशमस्य समयसारसंज्ञकस्याचारस्य ॥ १२४ ॥

इति श्रीमद्वट्टकेर्याचार्यवर्यप्रणीते मूलाचारे श्रीवसु-
नंद्याचार्यप्रणीताचारवृत्त्याख्यटीकासहिते
दशमः समयसाराधिकारः ॥ *

---

* ख-ग-पुस्तकेऽस्य स्थानेऽयं पाठः—
इति वसुनन्दिविरचितायामाचारवृत्तौ दशमः परिच्छेदः ।

# शीलगुणाधिकारः ।

**सीलगुणालयभूदे कल्लाणविसेसपाडिहेरजुदे।**
**वंदित्ता अरहंते सीलगुणे कित्तइस्सामि ॥ १ ॥**

**शीलगुणालयभूतान् कल्याणविशेषप्रातिहार्ययुक्तान् ।**
**वंदित्वा अर्हतः शीलगुणान् कीर्तयिष्यामि ॥ १ ॥**

**टीका**—शील—शीलं व्रतपरिरक्षणं शुभयोगवृत्तिरशुभयोगवृत्तिपरिहार आहारभयमैथुनपरिग्रहसंज्ञाविरतिः पंचेंद्रियनिरोधः कायसंयमविषयोद्भव-दोषाभावः क्षांत्यादियोगश्च, गुणा—गुणाः संयमविकल्पाः पंचमहाव्रतादयः कषायाद्यभावोऽतिक्रमाद्यभावः षट्कायसविकल्पसंयमदशप्रकाराब्रह्माभाव आकं-पितादिदोषविमुक्तिरालोचनादिप्रायश्चित्तकरणं, शीलानि च गुणाश्च शील-गुणास्तेषामालयभूताः सम्यगवस्थानं संजाताः शीलगुणालयभूतास्तान् शीलगुणालयभूतान् व्रतानां व्रतपरिरक्षणानां चाधारान् । कल्लाण—कल्याणानि स्वर्गावतरणजन्मनिष्क्रमणकेवलज्ञानोत्पत्तिनिर्वाणगमनानि, विसेस—विशेषा अतिशयविशेषाश्चतुस्त्रिंशत्, स्वाभाविका दश निःस्वेदत्वादिकाः, घातिकर्म-क्षयजा दश गव्यूतिशतचतुष्टयसुभिक्षत्वादिका, देवोपनीताश्चतुर्दश सर्वार्द्ध-मागधिकभाषादयः, पाडिहेर—प्रातिहार्याण्यष्टौ सिंहासनादीनि, जुदे—युक्तान् सहितान्, कल्याणानि चातिशयविशेषाश्च प्रातिहार्याणि च कल्याणविशेष-प्रातिहार्याणि तैर्युक्तास्तान् कल्याणविशेषप्रातिहार्ययुक्तान् सर्वान् सर्वज्ञत्व-चिन्होपेतान् त्रिषष्टिकर्मक्षयजगुणसंयुक्तान्, वंदित्ता—वंदित्वा प्रणम्य, अरहंत—अर्हतः सर्वज्ञनाथान्, शीलगुणे—शीलगुणान् शीलानि गुणांश्च, कित्तइस्सामि-कीर्त्तयिष्यामि सम्यगनुवर्त्तयिष्यामि । अर्हतः शीलगुणालयभूतान् कल्याण-विशेषप्रातिहार्ययुक्तान् वंदित्वा शीलगुणान् कीर्त्तयिष्यामीति संबंधः ॥१॥

शीलानां तावदुत्पत्तिक्रममाह,—

**जोए करणे सण्णा इंदिय भोम्मादि समणधम्मे य।**
**अण्णोण्णेहिं अभत्था अट्ठारहसीलसहस्साइं ॥ २ ॥**

**योगाः करणानि संज्ञा इंद्रियाणि भ्वादयः श्रमणधर्माश्च।**
**अन्योन्यैः अभ्यस्ता अष्टादशशीलसहस्राणि ॥ २ ॥**

**टीका**—जोए–योग आत्मप्रदेशपरिस्पदः स निमित्तभेदात् त्रिधा भिद्यते काययोगो मनोयोगो वाग्योग इति। तद्यथा। वीर्यान्तरायक्षयोपशमसद्भावे सत्यौदारिकादिसप्तकायवर्गणान्यतमालंबनापेक्ष आत्मप्रदेशपरिस्पंदः काययोगः, शरीरनामकर्मोदयापादितवाग्वर्णनालंबने सति वीर्यांतरायमत्यक्षराद्यावरणक्षयोपशमादिनाभ्यंतरवाग्लब्धिसान्निध्ये वाक्परिणामाभिमुखस्यात्मनः प्रदेशपरिस्पंदो वाग्योगः, अभ्यंतरवीर्यांतरायनोइंद्रियावरणक्षयोपशमात्मकमनोलब्धिसान्निधाने बाह्यनिमित्तमनोवर्गणालंबने सति मनःपरिणामाभिमुखस्यात्मनः प्रदेशपरिस्पंदो मनोयोगः, कायवाङ्मनसां शुभक्रिया इत्यर्थः। करणे–करणानि कायवाङ्मनसामशुभक्रियाः सावद्यकर्मादाननिमित्ताः। सण्णा–संज्ञा आहारभयमैथुनपरिग्रहाभिलाषाः। इंदिय–इंद्रियाणि। भोम्मादि–भूः पृथिवी आदिर्येषां ते भ्वादयः पृथिवीकायादयः। समणधम्मे य–श्रमणधर्माश्च संयताचरणविशेषाश्च। अण्णोण्णेहिं अन्योनैन्योन्यं परस्परं। अब्भत्था—अभ्यस्ताः समाहताः। त एते योगादयः श्रमणधर्मपर्यताः परस्परं गुणिताः, अट्ठारह–अष्टादशशीलसहस्राणि। योगैः करणानि गुणितानि नव भवंति, पुनराहारादिसंज्ञाभिश्चतसृभिर्नव गुणितानि षट्त्रिंशद्भवंति शीलानि, पुनरिन्द्रियैः पंचभिर्गुणितानि षट्त्रिंशत् अशीत्याधिकं शतं, पुनः पृथिव्यादिभिर्दशभिः कायैरशीतिशतं गुणितं अष्टादशशतानि भवंति, पुनः श्रमणधर्मैर्दशभिरष्टादशशतानि गुणितानि अष्टादशशलिसहस्राणि भवंतीति ॥ २ ॥

योगादीनां भेदपूर्वकं स्वरूपमाह;—

**तिण्हं सुहसंजोगो जोगो करणं च असुहसंजोगो।**
**आहारादी सण्णा फासादिय इंदिया णेया॥ ३॥**

त्रयाणां शुभसंयोगो योगः करणं च अशुभसंयोगः।
आहारादयः संज्ञाः स्पर्शनादीनि इंद्रियाणि ज्ञेयानि॥ ३॥

टीका—तिण्हं—त्रयाणां मनोवाक्कायानां, सुहसंजोगो—शुभेन संयोगः शुभसंयोगः पापक्रियापरित्यागपूर्वकशुभकर्मादाननिमित्तव्यापारः सर्वकर्मक्षयनिमित्तत्रिगुप्तियोग इत्युच्यते। करणं च—करणं क्रिया परिणामो वा तेषां मनोवाक्कायानां योऽयमशुभेन संयोगस्तत्करणं पापक्रियापरिणामः पापादाननिमित्तव्यापारव्यापारं च करणमित्युच्यते। आहारादी—आहारादय आहारभयमैथुनपरिग्रहाः, सण्णा-संज्ञा अभिलाषाः, चतुर्विधाशनपानखाद्यस्वाद्यान्याहारः, भयकर्मोदयाच्छरीरचाङ्मनःसंबंधिजीवप्रदेशानामाकुलता भयं, स्त्रीपुंसयोश्चारित्रमोहोदये सति रागपरिणामाविष्टयोः परस्परं स्पर्शनं प्रतीच्छा मैथुनं, गोमहिषीमणिमौक्तिकादीनां चेतनाचेतनानां बाह्यानां आभ्यंतराणां च रागादीनामुपधीनां संरक्षणार्जनसंस्कारादिलक्षणा व्यापृतिः परिग्रहः, आहारसंज्ञा भयसंज्ञा मैथुनसंज्ञा परिग्रहसंज्ञा चेति। फासादिय—स्पर्शनादीनींद्रियाणि ज्ञेयानि स्पर्शनरसनघ्राणचक्षुःश्रोत्राणीन्द्रियाणि ज्ञातव्यानीति॥ ३॥

पृथिव्यादीनां भेदं स्वरूपं च प्रतिपादयन्नाह;—

**पुढविदगागणिमारुदपत्तेयअणंतकायिया चेव।**
**विगतिगचदुपंचेंदिय भोम्मादि हवंति दस एदे॥ ४॥**

पृथिव्युदकाग्निमारुतप्रत्येकानंतकायिकाश्चैव।
द्वित्रिचतुःपंचेंद्रिया भ्वादयो भवंति दशैते॥ ४॥

टीका—पुढवि—पृथिवी । दग—आपो जलं । अगणि—अग्निः । मारुद—मारुतः वातः । पत्तेय—प्रत्येक एकं जीवं प्रति कारणं शरीरहेतु-पुद्गलप्रचयः प्रत्येकमसाधारणं । अणंत—अनंतः साधारणं । काथिया चेव—कायिकाश्चैव । पृथिवी कायो विद्यते येषां ते पृथिवीकायिकाः, आपः कायो विद्यते येषां ते अप्कायिकाः, तेजः कायो विद्यते येषां ते तेजः-कायिकाः, मारुतः कायो विद्यते येषां ते मारुतकायिकाः, प्रत्येकः कायो विद्यते येषां ते प्रत्येककायिकाः पूगफलनालिकेरादयः, अनंतः कायो विद्यते येषां तेऽनंतकायिका गुडूचीमूलकादयः, चशब्द उक्तसमुच्चयार्थः, एवकारोऽ-वधारणार्थः । पृथिवीकायिकादयः स्वभेदभिन्ना बादराः सूक्ष्माः पर्याप्ता अपर्याप्ताश्चैवेति । विगतिगचदुपंचेंदिय—इन्द्रियशब्दः प्रत्येकमभिसंबध्यते द्वीन्द्रियाः कृम्यादयः, त्रीन्द्रिया मत्कुणादयः, चतुरिंद्रिया भ्रमरादयः, पंचेंद्रिया मंडूकादयः । भोम्मादि—भूम्यादयः । हवंति—भवंति । दस—दश । एदे—एते पृथिवीकायिकादयः पंचेंद्रियपर्यंता दशैव भवंति नान्य इति ॥४॥

श्रमणधर्मस्य भेदं स्वरूपं च प्रतिपादयन्नाह,—

**खंती मद्दव अज्जव लाघव तव संजमो अंकिचणदा ।**
**तह होदि बंभचेरं सच्चं चागो य दस धम्मा ॥ ५ ॥**

**क्षांतिः मार्दवमार्जवं लाघवं तपः संयमः अकिंचनता ।**
**तथा भवति ब्रह्मचर्यं सत्यं त्यागश्च दश धर्माः ॥ ५ ॥**

टीका:—खंती—उत्तमक्षमा शरीरस्थितिहेतुमार्गणार्थं परकुलान्युपयत-स्तीर्थयात्राद्यर्थं वा पर्यटतो यतेर्दुष्टजनाक्रोशोत्प्रहसनावज्ञाताडनभर्त्सन-शरीरव्यापादनादीनां सन्निधाने स्वांते[1] कालुष्यानुत्पत्तिः क्षांतिः । मद्दव—मृदो-र्भावो मार्दवं जात्यादिमदावेशादभिमानाभावः । अज्जव—ऋजोर्भाव आर्जवं मनोवाक्कायानामवक्रता । लाघव—लघोर्भावो लाघवं अनतिचारत्वं शौचं

१ स्वान्तः ग ।

प्रकर्षप्राप्तौ लोभनिवृत्तिः । तव—तपः कर्मक्षयार्थं तप्यंते शरीरेन्द्रियाणि तपस्तद्द्वादशविधं पूर्वोक्तमवसेयं । संजमो—संयमो धर्मोपबृंहणार्थं समितिषु वर्तमानस्य प्राणीन्द्रियदयाकषायनिग्रहलक्षणः । अकिंचणदा—नास्य किंचनास्त्याकिंचनोऽकिंचनस्य भाव आकिंचन्यमकिंचनता उपात्तेष्वपि शरीरादिषु संस्कारापोहाय ममेदमित्यभिसंबंधनिवृत्तिः । तह होदि—तथा भवति तथा तेनैव प्रकारणे दशाब्रह्मपरिहारेण , बंभचेरं—ब्रह्मचर्यं अनुज्ञातांगनास्मरणकथाश्रवणस्त्रीसंसक्तशयनादिवर्जनं स्वतंत्रवृत्तिनिवृत्यर्थो वा गुरुकुलवासो ब्रह्मचर्यं । सच्चं—सत्यं परोपतापादिपरिवर्जितं कर्मादानकारणान्निवृत्तं साधुवचनं सत्यं। चागो—त्यागः संयतस्य योग्यज्ञानादिदानं त्यागः चशब्दः समुच्चयार्थः । दस धम्मा—दशैते धर्मा दशप्रकारोऽयं श्रमणधर्मो व्याख्यात इति ॥ ५ ॥

शीलानामुत्पत्तिनिमित्तमक्षसंक्रमेणोच्चारणक्रममाह;—

**मणगुत्ते मुणिवसहे मणकरणोम्मुक्कसुद्धभावजुदे ।**
**आहारसण्णविरदे फासिंदियसंपुडे चेव ॥ ६ ॥**
**पुढवीसंजमजुत्ते खंतिगुणसंजुदे पढमसीलं ।**
**अचलं ठादि विसुद्धे तहेव सेसाणि णेयाणि ॥ ७ ॥**

**मनोगुप्तस्य मुनिवृषभस्य मनःकरणोन्मुक्तशुद्धभावयुक्तस्य ।**
**आहारसञ्ज्ञाविरतस्य स्पर्शनेंद्रियसंवृतस्य चैव ॥ ६ ॥**
**पृथिवीसंयमयुक्तस्य क्षांतिगुणसंयुक्तस्य प्रथमशीलं ।**
**अचलं तिष्ठति विशुद्धस्य तथैव शेषाणि ज्ञेयानि ॥ ७ ॥**

**टीका**—मणगुत्ते—मनसा गुप्तो मनोगुप्तस्तस्य तस्मिन्वा मनोगुप्तस्य मनोगुप्ते । मुणिवसहे—मुनिवृषभस्य मुनिवृषभे वा, मणकरणोम्मुक्कसुद्धभावजुदे—मनःकरणोन्मुक्तशुद्धभावयुतः, मनःकरणोन्मुक्तश्चासौ शुद्धभावश्च तेन युतः मनःकरणोन्मुक्तशुद्धभावयुतस्तस्य मनःकरणोन्मुक्तशुद्धभा-

वयुतस्य मनःकरणोन्मुक्तशुद्धभावयुते वा। आहारसण्णविरदे—आहारसंज्ञया विरत आहारसंज्ञाविरतस्तस्य आहारसंज्ञाविरतस्य आहारसंज्ञाविरते वा। फासिंदियसंपुडे—स्पर्शनेन्द्रियं संवृतं यस्यासौ स्पर्शनेन्द्रियसंवृतस्तस्य स्पर्शनेंद्रियसंवृतस्य स्पर्शनेन्द्रियसंवृते वा। चेव—निश्चयेन। पुढवीसंजमजुत्ते—पृथिवीसंयमेन युक्तः पृथिवीसंयमयुक्तस्तस्य पृथिवीसंयमयुक्तस्य पृथिवीसंयमयुक्ते वा। खंतिगुणसंजुदे—क्षांतिगुणेन संयुक्तः क्षांतिगुणसंयुक्तस्तस्य क्षांतिगुणसंयुक्तस्य क्षांतिगुणसंयुक्ते वा। पढमसीलं—प्रथमं शीलं तस्येत्थंभूतस्य मुनिवृषभस्येत्थंभूते वा मुनिवृषभे प्रथमं शीलमचलं स्थिररूपं तिष्ठति। शुद्धे चारित्राढ्ये मुनौ शुद्धस्य चारित्राढ्यस्य मुनेर्वेति संबंधः। यतो गुप्तिभिर्गुप्तोऽशुभपरिणामैर्विमुक्तः संज्ञादिभिश्च रहितः संयमादिसहितोऽत एव शुद्धः। तहेव—तथैव तेनैव प्रकारेण अनेन वा प्रकारेण। सेसाणि—शेषाण्यपि द्वितीयादीनि शीलानि। णेयाणि—ज्ञातव्यानि। अथवा विशुद्धेषु भंगेषु यावदचलं तिष्ठत्यक्षः, तथा वाग्गुप्ते मुनिवृषभे मनःकरणोन्मुक्तशुद्धभावयुक्ते आहारसंज्ञाविरते स्पर्शनेन्द्रियसंवृते पृथिवीसंयमयुक्ते क्षांतिगुणसंयुक्ते च शुद्धे मुनौ द्वितीयं शीलं तिष्ठति। तथा कायगुप्ते मुनिवृषभे एवं शेषाण्युच्चारणविधानान्युच्चार्य तृतीयं शीलं व्रतपरिरक्षणमचलं तिष्ठति। विशुद्धे तत आदिं गते अक्षे एवमुच्चारणा कर्त्तव्या। मनोगुप्ते मुनिवृषभे वाक्करणोन्मुक्तशुद्धभावयुते आहारसंज्ञाविरते स्पर्शनेन्द्रियसंवृते पृथिवीसंयमयुक्ते क्षांतिगुणसंयुक्ते च मुनिवृषभे चतुर्थशीलं। तथा वाग्गुप्ते मुनिवृषभे वाक्करणोन्मुक्तशुद्धभावयुक्ते आहारसंज्ञाविरते स्पर्शनेन्द्रियसंवृते पृथिवीसंयमयुक्ते क्षांतिगुणसंयुक्ते च मुनिवृषभे पंचमं शीलं। तथा कायगुप्ते वाक्करणोन्मुक्ते शेषाण्यप्युच्चार्य षष्ठं शीलं ब्रूयात्। तिस्रो गुप्तीः पंक्त्याकारेण व्यवस्थाप्य तत ऊर्द्ध्वं त्रीणि करणानि पंक्तयाकारेण स्थापनीयानि तत ऊर्द्ध्वं आहारादिसंज्ञाः संस्थाप्य ततः पंचेंद्रियाणि ततः पृथिव्यादयः कायास्ततश्च श्रमणधर्माः स्थाप्याः। एवं संस्थाप्य पूर्वोक्तक्रमेण शेषाणि

शीलानि वक्तव्यानि यावत्सर्वेऽक्षा अचलं स्थित्वा विशुद्धा भवंति तावद-ष्टादशशीलसहस्राण्यागच्छंतीति । अथवा मनोगुप्ते मुनिवृषभे इत्यादि तावदुच्चार्यं यावद्दशप्रकारश्रमणधर्मातेऽक्षस्तिष्ठति तदाऽचलं स्थित्वा विशुद्धेऽक्षे ततः शेषा अप्यक्षा अनेन क्रमेण तं प्राप्य स्थापयितव्या यावन्मनो गुप्त्यक्षः कायगुप्तौ निश्चलः स्थितस्ततोऽष्टादशशीलसहस्राणि मुनिवृषभस्य पूर्णानि भवंतीति । अथवा मनोगुप्तिं ध्रुवां व्यवस्थाप्य मनःकरणादिना सह षट्सहस्राणि शीलान्युत्पाद्य ततः शेषेषु भंगेष्वचलं स्थित्वा विशुद्धेषु मनोगुप्तिर्विशुद्धा भवति ततः पुनर्वाग्गुप्तिं ध्रुवां कृत्वा षट्सहस्राणि शीला-नामुत्पादनीयानि ततः सर्वे भंगा अचलं तिष्ठंति ततो वाग्गुप्तिर्विशुद्धा भवति ततः कायगुप्तिं ध्रुवां कृत्वा षट्सहस्राणि शीलानामुत्पादनीयानि ततः सर्वे भंगा अचलं तिष्ठंति कायगुप्तिश्च विशुद्धा भवति शीलानां चाष्टा-दशसहस्राणि संपूर्णानि भवंति । एवमेकैकं स्थिरं कृत्वा भंगानामुत्पादन-क्रमो वेदितव्य इति ॥ ६-७ ॥

इदानीं गुणानामुत्पत्तिकारणक्रमं प्रतिपादयन्नाह;—

**इगिवीस चतुर सदिया दस दस दसगा य आणुपुव्वीय ।**
**हिंसादिक्कमकायाविराहणालोयणासोही ॥ ८ ॥**

**एकविंशतिश्चत्वारः शतं दश दश दश च आनुपूर्व्या ।**
**हिंसातिक्रमकायविराधनाऽऽलोचनाशुद्धयः ॥ ८ ॥**

**टीका**—इगिवीस—एकेनाधिका विंशतिरेकविंशतिः । चदुर—चत्वारः । सदिया—शतं । दश दश दश त्रयो दशानां भेदाः । आणुपुव्वीय—आनु-पूर्व्या । हिंसा—प्रमादेतः[1] प्राणव्यपरोपणं हिंसा, अत्रादिशब्दो द्रष्टव्यस्तेन हिंसाद्य एकविंशतिसंख्या भवंति । अदिक्कम—अतिक्रमोः विषयाणामु-परि समीहा, अत्रापि आदिशब्दो द्रष्टव्योऽतिक्रमाद्य उपलक्षणत्वादिति ।

---

१ प्रमादवतः ख-ग-पुस्तके ।

काया-सर्वजीवसमासाः। विराहणा-विराधना अब्रह्मकारणानि। आलो-यणा-आलोचना अत्र दोषशब्दो द्रष्टव्य आलोचनादोषाः साहचर्यात्। सोही-शुद्धयः प्रायश्चित्तानि। यथानुक्रमेण हिंसादय एकविंशतिरतिक्रम-णादयश्चत्वारः कायाः शतभेदा विराधना दश आलोचनादोषा दश शुद्धयो दशेति संबंध इति॥ ८॥

के ते हिंसादय इत्याशंकायामाह,—

**पाणिवह मुसावादं अदत्त मेहुण परिग्गहं चेव।**
**कोहमदमायलोहा भय अरदि रदी दुगुंछा य॥ ९॥**

**मणवयणकायमंगुल मिच्छादंसण पमादो य।**
**पिसुणत्तणमण्णाणं अणिग्गहो इंदियाणं च॥ १०॥**

**प्राणिवधः मृषावादोऽदत्तं मैथुनं परिग्रहश्चैव।**
**क्रोधमदमायालोभाः भयमरतिरतीः जुगुप्सा च॥ ९॥**

**मनोवचनकायमंगुलं मिथ्यादर्शनं प्रमादश्च।**
**पिशुनत्वमज्ञानं अनिग्रह इंद्रियाणां च॥ १०॥**

टीका—पाणिवह-प्राणिवधः प्रमादवतो जीवहिंसनं। मुसावादं-मृषा-वादोऽनालोच्य विरुद्धवचनं। अदत्त-अदत्तं परकीयस्याननुमतस्य ग्रह-णाभिलाषः। मेहुण-मैथुनं वनितासेवाभिगृद्धिः। परिग्गहं-परिग्रहः पापा-दानोपकरणकांक्षा। चेव-चैव तावंत्येव महाव्रतानीति। कोह-क्रोधश्चंडता। मद-मदो जात्याद्यवलेपः। माय-माया कौटिल्यं। लोह-लोभो वस्तुप्राप्तौ गृद्धिः। भय-भयं त्रस्तता। अरदि-अरतिरुद्वेगः अशुभपरिणामः। रदी-रती रागः कुत्सिताभिलाषः। दुगुंछा जुगुप्सा परगुणासहनं। मणवयण-कायमंगुल-मंगुलं पापादानक्रिया तत्प्रत्येकमभिसंबध्यते मनोमंगुलं वाङ्मं-ङ्गुलं कायमंगुलं मनोवाक्कायानां पापक्रियाः। मिच्छादंसण—मिथ्याद-

र्शनं जिनेन्द्रमतस्याश्रद्धानं । पमादो—प्रमादश्चायत्नाचरणं विकथादि-स्वरूपं । पिसुणत्तणं—पैशून्यं परस्यादोषस्य वा सदोषस्य वा दोषोद्भावनं पृष्ठमांसभक्षित्वं। अण्णाणं—अज्ञानं यथावस्थितस्य वस्तुनो विपरीतावबोधः । अणिग्गहो—अनिग्रहः स्वेच्छया प्रवृत्तिः, इंदियाण—इंद्रियाणां चक्षुरादीना-मनिग्रहश्चेत्येते एकविंशतिभेदा हिंसादयो द्रष्टव्या इति ॥ ९–१० ॥

अतिक्रमणादीनां स्वरूपं प्रतिपादयन्नाह;—

**अदिक्कमणं वदिक्कमणं अदिचारो तहेव अणाचारो ।**
**एदेहिं चदूहि पुणो सावज्जो होइ गुणियव्वो ॥ ११ ॥**

**अतिक्रमणं व्यतिक्रमणमतीचारस्तथैवनाचारः ।**
**एतैश्चतुर्भि पुनः सावद्यो भवति गुणितव्यः ॥ ११ ॥**

**टीका**—अदिकमणं—अतिक्रमणं संयतस्य संयतसमूहमध्यस्थस्य विषयाभिकांक्षा । वदिकमणं—व्यातिक्रमणं संयतस्य संयतसमूहं[1] त्यक्त्वा विषयोपकरणार्जनं । अदिचारो—अतिचारः व्रतशैथिल्यं ईषदसंयमसेवनं च । तहेव—तथैव । अणाचारो—अनाचारो व्रतभंगः सर्वथा स्वेच्छया[2] प्रव-र्तनं । एदेहिं—एतैरतिक्रमणादिभिः । चदूहिं—चतुर्भिः । पुणो—पुनः । सावज्जो—सावद्यो हिंसाद्येकविंशतिः । होइ—भवति । गुणियव्वो—गुणितव्यः संगुणनीयः । ततश्चतुर्भिरेकविंशतिर्गुणिता चतुरशीतिर्भवतीति ॥ ११ ॥

कायभेदानां स्वरूपं प्रतिपादयन्नाह;—

**पुढविदगागणिमारुयपत्तेयअणंतकाइया चेव ।**
**वियतियचदुपंचिंदिय अण्णोण्णवधाय दस गुणिदा १२**

**पृथिव्यबग्निमारुतप्रत्येकानंतकायिकाश्चैव ।**
**द्विकात्रिकचतुःपंचेंद्रिया अन्योन्यव्यथिता दशगुणिताः ॥१२॥**

१ संयतशब्दो ख–ग–पुस्तके नास्ति । २ स्वेच्छाप्रवर्तनं ख–ग–पुस्तके ।

टीका—कायशब्दः प्रत्येकमभिसंबध्यते। पृथिवीकायिका अप्कायिका अग्निकायिका मारुतकायिकाः प्रत्येककायिका अनन्तकायिकाश्चैव। अत्रापि इन्द्रियशब्दः प्रत्येकमभिसंबध्यते। द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाः पंचेन्द्रियाश्चेति। अण्णोण्णवधाय—अन्योन्यव्यथिता दशैते पृथिवीकायिकादयः परस्परेणाहताः सन्तः पूर्वोक्तैश्चतुरशीतिविकल्पैर्गुणिताश्चतुरशीतिशतभेदा भवन्ति। चतुरशीतिः शतेन गुणिता यत एतावन्त एव विकल्पा भवन्तीति ॥ १२ ॥

अब्रम्हकारणविकल्पान् प्रतिपादयन्नाह,—

**इत्थीससंग्गी पणिदरसभोयण गंधमल्लसंठप्पं।**
**सयणासणभूसणयं छट्ठं पुण गीयवाइयं चेव ॥ १३ ॥**
**अत्थस्स संपओगो कुसीलसंसग्गि रायसेवा य।**
**रत्ती वि य संयरणं दस सीलविराहणा भणिया ॥१४॥**

**स्त्रीसंसर्गः प्रणीतरसभोजनं गंधमाल्यसंस्पर्शः।**
**शयनासनभूषणानि षष्ठं पुनर्गीतवादित्रं चैव ॥ १३ ॥**
**अर्थस्य संप्रयोगः कुशीलसंसर्गः राजसेवा च।**
**रात्रावपि च संचरणं दश शीलविराधना भणिताः ॥ १४ ॥**

टीका—इत्थीसंसग्गी—स्त्रीसंसर्गः वनिताभिः सहातीव प्रणयः रागाहतस्यं। पणिदरसभोयण—प्रणीतरसभोजनं अतीव गृद्ध्या पंचेंद्रियदर्पकराहारग्रहणं। गंधमल्लसंठप्पं—गंध आर्द्रमहिषीयक्षकर्दमादिको माल्यं मालतीचंपकादिकुसुमादिकं ताभ्यां संस्पर्शो गन्धमाल्यसंस्पर्शः सुगंधद्रव्यैः सुगंधपुष्पैश्च शरीरसंस्करणं। सयणासणं—शयनं तूलिकादिपर्यंकस्पर्शः आसनं मृदुलोहासनादिकं शयनं चासन च शयनासने मृदुशय्यामृद्वासनगृद्धिः।

१ रागाहतिश्च प्रेस-पुस्तके।

भूसणयं—भूषणानि शरीरमंडनादीनि मुकुटकटकादीनि शरीरशोभा विषयाकांक्षा वा पंचैतानि । छट्ठं पुण—षष्ठं पुनः । गीयवाइयं—गीतं षड्जादिकं वादित्रं ततविततघनसुषिरादिकं करवादनं च, गीतं च वादित्रं च गीतवादित्रं रागादिकांक्षया नृत्तगेयाभिलाषकरणं । अत्थस्स संपओगो—अर्थस्य संप्रयोगः सुवर्णादिद्रव्यसंपर्कः । कुसीलसंसग्गि—कुत्सितं शीलं येषां ते कुशीलास्तैः संसर्गः संवासः कुशीलसंसर्गो रागाविष्टजनसंपर्कः । रायसेवा य—राजसेवा च विषयार्थिनो राज्ञामुपश्लोकादिकरणं । रत्ती वि य संयरणं—रात्रावपि संचरणं कार्यांतरेण निशायां पर्यटनं । दस—दश । सीलविराहणा—शीलविराधनाः । भणिदा—भणिताः प्रतिपादिताः । एते स्त्रीसंसर्गादयो दश शीलविराधनाः परमागमे समुक्ताः । एतैर्दशविकल्पैः पूर्वोक्तानि चतुरशीतिशतानि गुणितानि चतुरशीतिसहस्राणि भवंतीति ॥१३–१४

आलोचनादोषान् प्रतिपादयन्नाह;—

**आकंपिय अणुमाणिय जं दिट्ठं वादरं च सुहुमं च ।**
**छण्णं सद्दाकुलियं वहुजणमव्वत्त तस्सेवी ॥ १५ ॥**

**आकंपितमनुमानितं यद् दृष्टं बादरं च सूक्ष्मं च ।**
**छन्नं शब्दाकुलितं बहुजनमव्यक्तं तत्सेवी ॥ १५ ॥**

**टीका**—आकंपिय—आकंपितदोषो भक्तपानोपकरणादिनाऽऽचार्यमाकंप्यात्मीयं कृत्वा यो दोषमालोचयति तस्याकंपितदोषो भवति । अणुमाणिय—अनुमानितं शरीराहारतुच्छबलदर्शनेन दीनवचनेनाचार्यमनुमान्यात्मनि करुणापरमाचार्यं कृत्वा यो दोषमात्मीयं निवेदयति तस्य द्वितीयोऽनुमानितदोषः । जं दिट्ठं—यद् दृष्टं अन्यैर्यदवलोकितं दोषजातं तदालोचयत्यदृष्टमवगूहयति यस्तस्य तृतीयो दृष्टनामाऽऽलोचनादोषः । बादरं च—स्थूलं च व्रतेष्वहिंसादिकेषु य उत्पद्यते दोषस्तमालोचयति सूक्ष्मं नालोच-

यति यस्तस्य चतुर्थो बादरनामालोचनादोषः स्यात् । सुहुमं च—सूक्ष्मं च सार्द्रहस्तपरामर्शादिकं सूक्ष्मदोषं प्रतिपादयति महाव्रतादिभंगं स्थूलं तु नाचष्टे यस्तस्य पंचमं सूक्ष्मं नामालोचनदोषजातं भवेत् । छण्णं—प्रच्छन्नं व्याजेन दोषकथनं कृत्वा स्वतः प्रायश्चित्तं यः करोति तस्य षष्ठं प्रच्छन्नं नामालोचनदोषजातं भवति । सद्दाकुलियं—शब्दाकुलितं पाक्षिकचातुर्मासिकसांवत्सरिकादिप्रतिक्रमणकाले बहुजनशब्दसमाकुले आत्मीयापराधं निवेदयति तस्य सप्तमं शब्दाकुलं नामालोचनादोषजातं । बहुजणं—बहुजनं एकस्मै आचार्यायात्मदोषनिवेदनं कृत्वा प्रायश्चित्तं प्रगृह्य पुनरश्रद्दधानोऽपरस्मै आचार्याय निवेदयति यस्तस्य बहुजनं नामाष्टममालोचनादोषजातं स्यात् । अव्वत्त—अव्यक्तः प्रायश्चित्ताद्यकुशलो यस्तस्यात्मीयं दोषं कथयति यो लघुप्रायश्चित्तनिमित्तं तस्याव्यक्तनाम नवममालोचनादोषजातं भवेत् । तस्सेवी—तत्सेवी य आत्मना दोषैः संपूर्णस्तस्य यो महाप्रायश्चित्तभयादात्मीयं दोषं प्रकटयति तस्य तत्सेवी नामा दशम आलोचनादोषो भवेत् । एवमेतैर्दशभिश्चतुरशीतिसहस्राणि गुणितान्यष्टलक्षाभ्यधिकानि चत्वारिंशत्सहस्राणि भवंतीति ॥ १५ ॥

आलोचनादिप्रायश्चित्तानां स्वरूपं प्रतिपादयन्नाह,—

**आलोयण पडिकमणं उभय विवेगो तधा विउस्सग्गो ।**
**तव छेदो मूलं पि य परिहारो चेव सद्दहणा ॥ १६ ॥**

**आलोचनं प्रतिक्रमणमुभयं विवेकस्तथा व्युत्सर्गः ।**
**तपश्छेदो मूलमपि च परिहारश्चैव श्रद्धानम् ॥ १६ ॥**

**टीका**—आलोयण—आलोचनं दशदोषविवर्जितं गुरवे प्रमादनिवेदनमालोचनं । पडिकमणं—प्रतिक्रमणं व्रतातीचारनिर्हरणं । उभय—उभयं आलोचनप्रतिक्रमणे संसर्गदोषे सति विशोधनात्तदुभयं । विवेगो—विवेकः संसक्तान्नपानोपकरणादिविभजनं विवेकः । तधा—तथा । विउस्सग्गो—

व्युत्सर्गः कायोत्सर्गादिकरणं । तव—तपः अनशनावमौदर्यादिलक्षणं । छेदो—छेदः दिवसमासादिना प्रव्रज्याहापनं । मूलं—पुनर्दीक्षाप्रापणं । पि य—अपि च । परिहारो चेव—परिहारश्चैव पक्षमासादिविभागेन दूरतः परिवर्जनं परिहारः । सद्दहणा—श्रद्धानं सावद्यगतस्य मनसः मिथ्यादुष्कृताभिव्यक्तिनिवर्त्तनं, एते दश विकल्पा विपरीतदोषा भवंति । एतैः पूर्वोक्तानि अष्टलक्षाभ्याधिकचत्वारिंशत्सहस्राणि गुणितानि चतुरशीतिलक्षसावद्यविकल्पा भवंति तद्विपरीतास्तावंत एव गुणा भवंतीति ॥ १६ ॥

गुणोत्पादनक्रममाह;—

**पाणादिवादविरदे अदिकमणदोसकरणउम्मुक्के ।**
**पुढवीए पुढवीपुणरारंभसुसंजदे धीरे ॥ १७ ॥**
**इत्थीसंसग्गविजुदे आकंपियदोसकरणउम्मुक्के ।**
**आलोयणसोधिजुदे आदिगुणो सेसया णेया ॥ १८ ॥**

**प्राणातिपातविरतस्य अतिक्रमणदोषकरणोन्मुक्तस्य ।**
**पृथिव्या पृथिवीपुनरारंभसुसंयतस्य धीरस्य ॥ १७ ॥**
**स्त्रिसंसर्गवियुतस्य आकंपितदोषकरणोन्मुक्तस्य ।**
**आलोचनशुद्धियुतस्य आदिगुणः शेषा ज्ञेयाः ॥ १८ ॥**

**टीका**—पाणादिवादविरदे—प्राणातिपातो हिंसा तस्मात्प्राणातिपाताद्विरत उपरतस्तस्य तस्मिन्वा प्राणातिपातविरतस्य प्राणातिपातविरते वा । अदिक्कमणदोसकरणउम्मुक्के—अतिक्रमणमेव दोषस्तस्य करणं अतिक्रमणदोषकरणं तेनोन्मुक्तः परित्यक्तस्तस्य तस्मिन्वाऽतिक्रमणदोषकरणोन्मुक्तस्यातिक्रमणदोषकरणोन्मुक्ते वा । पुढवीए पुढवी पुण आरंभसुसंजदे धीरे—पृथिव्याः पृथिवीकायिकैः पृथिव्याः पृथिवीकायिकानां पुनरारंभो विराधनं तस्मिन् सुसंयतो यत्नपरस्तस्य तस्मिन्वा पृथिव्या पृथिवीपुनरारंभसुसंयतस्य पृथिवीकायिकैः

पृथिवीकायिकानां योऽयं पुनरारंभस्तास्मिन् सुसंयते वा धीरे धीरस्य वा साधोः। इत्थीसंसग्गविजुदे—स्त्रीसंसर्गवियुक्ते स्त्रीजनसंसर्गविमुक्तस्य वा। आकंपियदोसकरणउम्मुक्के—आकंपितदोषस्य यत्करणं तेनोन्मुक्तस्योन्मुक्ते वा। आलोयणसोधिजुदे—आलोचनशुद्धियुक्ते आलोचनशुद्धियुक्तस्य वा; आदिगुणो—आदिगुणः प्रथमो गुणः संजातः। एवं, सेसया—शेषाश्च गुणाः। णेया—ज्ञातव्या उत्पादनीया इति। हिंसाद्येकविंशतिं संस्थाप्य तत ऊर्ध्वं अतिक्रमणादयश्चत्वारः संस्थापनीयाः पुनस्तत ऊर्ध्वं पृथिव्यादिशतं स्थापनीयं तत ऊर्ध्वं दश विराधनाः स्त्रीसंसर्गादयो व्यवस्थाप्यास्तत ऊर्ध्वं आकंपितादयो दश दोषाः स्थापनीयाः पुनस्तत ऊर्ध्वं आलोचनादयो दश शुद्धयः स्थापनीयास्तत एवमुच्चारणं कर्त्तव्यं—धीरे मुनौ प्राणातिपातविरते पुनरप्यतिक्रमणदोषकरणोन्मुक्ते पुनरपि पृथिव्या पृथिवीपुनरारंभसुसंयते पुनरपि स्त्रीसंसर्गवियुक्ते पुनरप्याकंपितदोषकरणोन्मुक्ते पुनरप्यालोचनशुद्धियुक्ते आदिगुणो भवति। ततो मृषावादविरतेऽतिक्रमणदोषकरणोन्मुक्ते पुनरप्यालोचनशुद्धिसुक्ते आदिगुणो भवति? ततो मृषावादविरतेऽतिक्रमणदोषकरणोन्मुक्ते एवं शेषाणामप्युच्चार्य वाच्यो द्वितीयगुणस्ततोऽदत्तादानविरचिते, एवं शेषेष्वप्युच्चारितेषु तृतीयो गुणः, एवं तावदुच्चार्य यावच्चतुरशीतिलक्षा गुणानां संपूर्णा उत्पन्ना भवंतीति ॥ १७-१८ ॥

शीलानां गुणानां च पंच विकल्पान् प्रतिपादयन्नाह,—

**सीलगुणाणं संखा पत्थारो अक्खसंकमो चेव।**
**णट्ठं तह उद्दिट्ठं पंच वि वत्थूणि णेयाणि ॥ १९ ॥**

**शीलगुणानां संख्या प्रस्तारोः अक्षसंक्रमश्चैव।**
**नष्टं तथोद्दिष्टं पंचापि वस्तूनि ज्ञेयानि ॥ १९ ॥**

**टीका**—सीलगुणाणं—शीलगुणानां। संखा—संख्या प्रमाणं। शीलानां गुणानां च, पत्थारो—प्रस्तारः। शीलानां गुणानां च, अक्खसंकमो—अक्ष-

संक्रमश्चैव । तथा शीलानां गुणानां च, णट्ठं—नष्टता । उद्दिट्ठं—उद्दिष्टता च, उच्चारणा दृष्टा अक्षा नष्टास्तेषामक्षाणामुच्चारणावशेनोत्पादनं नष्टमित्युच्यते, अक्षा दृष्टा उच्चारणा नष्टा अक्षवशेन तासामुद्दिष्टमित्युच्यते । पंच वि वत्थूणि णेयाणि—एवं पंचापि वस्तूनि ज्ञातव्यानि भवंति । एवं शीलानां गुणानां च पंच विकल्पा ज्ञातव्या भवंतीति ॥ १९ ॥

संख्यानयनाय तावदाह;—

**सव्वेपि पुव्वभंगा उवरिमभंगेसु एक्कमेक्केसु ।**
**मेलंतेत्तिय कमसो गुणिदे उप्पज्जदे संखा ॥ २० ॥**

**सर्वानपि पूर्वभंगान् उपरि भंगेषु एकमेकं ।**
**मेलयित्वा क्रमशो गुणिते उत्पद्यते संख्या ॥ २० ॥**

**टीका**—शीलानां गुणानां च सर्वानपि पूर्वभंगान् पूर्वविकल्पानुपरि भंगेषु उपरिस्थितविकल्पेषु मेलयित्वा एकमेकं क्रमशो गुणयित्वा वा संख्या समुत्पादनीया । अथवा सर्वेषु पूर्वभंगेषु उपरिभंगेषु पृथक् पृथक् मिलितेषु संख्योत्पद्यते, अथवा सर्वेषु पूर्वभंगेषु उपरिभंगेषु च परस्परं गुणितेषु संख्योत्पद्यते । एकविंशतिश्चतुर्भिर्गुणनीया पुनः शतेन पुनरपि दशभिः पुनरपि दशभिः पुनरपि दशभिर्गुणिते च चतुरशीतिलक्षा गुणा उत्पद्यंत इति । एवं शीलानामपि द्रष्टव्यमिति ॥ २० ॥

प्रस्तारस्योत्पादनार्थमाह;—

**पढमं सीलपमाणं कमेण णिक्खिविय उवरिमाणं च ।**
**पिंडं पडि एक्केक्कं णिक्खित्ते होइ पत्थारो ॥ २१ ॥**

**प्रथमं शीलप्रमाणं क्रमेण निक्षिप्योपरिस्थितानां च ।**
**पिंडं प्रत्येकैकं निक्षिप्ते भवति प्रस्तारः ॥ २१ ॥**

- टीका—पढमं—प्रथमं मनोवाक्कायत्रिकं। सीलपमाणं—शीलप्रमाणं अष्टादशशीलसहस्रमात्रं। कमेण—क्रमेण। णिक्खिविय—निक्षिप्य प्रस्तीर्य मनोवाक्काय मनोवाक्काय इत्येवं तावदेकैकं निक्षेपणीयं यावदष्टादशसहस्राणि पूर्णानि भवंति। ततः उवरिमाणं च—उपरिस्थितानां च करणादीनामष्टादशसहस्रमात्रो निक्षेपः कर्त्तव्यस्तद्यथा—अष्टादशसहस्रमात्राणां योगानां निक्षिप्तानामुपरि मनःकरणं मनःकरणं मनःकरणं वाक्करणं वाक्करणं वाक्करणं कायकरणं कायकरणं कायकरणं एवमेकैकं त्रीन् वारान् कृत्वा तावत्प्रस्तरणीयं यावदष्टादशसहस्राणि पूर्णानि। तत उपरि आहारभयमैथुनपरिग्रहसंज्ञाः पृथक् पृथक् एकैका संज्ञा नव नववारान् कृत्वा तावत्प्रस्तरणीयं यावदष्टादशसहस्राणि पूर्णानि। तत उपरि स्पर्शनरसनघ्राणचक्षुःश्रोत्राणींद्रियाणि पंचैकैकं षट्त्रिंशद्वारान् कृत्वा तावत्प्रस्तरणीयं यावदष्टादशसहस्राणि संपूर्णानि भवंति। तत उपरि पृथिवीकायिकाप्कायिकतेजःकायिकवायुकायिकप्रत्येककायिकानंतकायिकद्वींद्रियत्रीन्द्रियचतुरिन्द्रियपंचेन्द्रिया दशैकैकमशीतिशतवारं कृत्वा तावत्प्रस्तरणीयं यावदष्टादशसहस्राणि पूर्णानि भवंति। तत उपरि क्षान्तिमार्दवार्जवलाघवतपःसंयमाकिंचन्यब्रम्हचर्यसत्यत्यागा दशैकैकं अष्टादशशतान्यष्टादशशतानि कृत्वा तावत्प्रस्तरणीयं यावदष्टादशसहस्राणि पूर्णानि। तत एवं पिंडं प्रति एकैके निक्षिप्ते समः प्रस्तारो भवति, मनोवाक्काय एकः पिंडः त्रीणि करणान्यपरः पिंडस्त्रिकभावेन तथा संज्ञा नव नव भूत्वा परः पिंडः तथेन्द्रियाणि षट्त्रिंशद्भूत्वा परः पिंडस्तथा पृथिव्यादयो दश अशीतिशतानि कृत्वा परः पिंडस्तथा क्षांत्यादयो दशाष्टशतान्यष्टादशशतानि भूत्वा परः पिंडः एवं पिंडं प्रति पिंडं प्रति एकैके नीक्षिप्ते समप्रस्तारो भवति इति। तथा प्राणातिपाताद्येकविंशतिः पुनः पुनस्तावत् स्थाप्या यावच्चतुरशीतिलक्षप्रमाणं पूर्णं भवति, तत उपर्यतिक्रमव्यतिक्रमातीचारानाचाराः प्रत्येकमेकविंशतिप्रमाणं कृत्वा तावत्प्रस्तरणीयं यावच्चतुरशीतिलक्षप्रमाणं संपूर्णं स्यात्, तत उपरि पृथिव्यादिविराधनाविकल्पः

शतमात्रः प्रत्येकं चतुरशीतिप्रमाणं कृत्वा तावत् स्थाप्यो यावच्चतुरशीतिलक्षमात्रं, तत उपरि स्त्रीसंसर्गादिविराधना दश प्रत्येकं चतुरशीतिशतानि चतुरशीतिशतानि कृत्वा तावत्प्रस्तरणीयं यावच्चतुरशीतिलक्षप्रमाणं संपूर्णं, तत उपरि आकंपितादयो दोषा दश प्रत्येकं चतुरशीतिसहस्राणि कृत्वा तावत्प्रस्तरणीयं यावच्चतुरशीतिलक्षमात्रं स्यात्तत उपरि अलोचनादिशुद्धयो दश प्रत्येकमष्टलक्षाधिकचत्वारिंशत्सहस्राणि अष्टलक्षाभ्यधिकचत्वारिंशत्सहस्राणि कृत्वा तावत्प्रस्तरणीयं यावच्चतुरशीतिलक्षमात्रं संपूर्णः स्यात्ततश्चतुरशीतिलक्षगुणगमननिमित्तः समः प्रस्तारः स्यादिति ॥ २१ ॥

एवं समप्रस्तारं निरूप्य विषमप्रस्तारस्य स्वरूपं निरूपयन्नाह;—

**णिक्खित्तु विदियमेत्तं पढमं तस्सुवरि विदियमेक्केक्कं ।**
**पिंडं पडि णिक्खित्ते तहेव सेसावि कादव्वा ॥ २२ ॥**

**निक्षिप्य द्वितीयमात्रं प्रथमं तस्योपरि द्वितीयमेकैकं ।**
**पिंडं प्रति निक्षिप्ते तथैव शेषा अपि कर्तव्याः ॥ २२ ॥**

**टीका**—णिक्खित्तु–निक्षिप्य प्रस्तीर्य, विदियमेत्तं–द्वितीयमात्रं, पढमं–प्रथमं मनोवाक्कायत्रिकं द्वितियं त्रिकमात्रं त्रीन् वारान् संस्थाप्य ततस्तस्योपरि तस्मादूर्ध्वं, विदियं–द्वितीयं करणत्रिकं एकैकं प्रत्येकं द्वितीयप्रमाणं त्रीन् वारान् कृत्वा तावत् स्थाप्यं यावत्प्रथमप्रस्तारप्रमाणं भवति तत एतत्सर्वं प्रथमं भवति, संज्ञाचतुष्कं द्वितीयं भवति संज्ञामात्रं प्रथमं संस्थाप्य मनोवचनकायपिंडं नवप्रमाणं चतुःसंख्यामात्रं संस्थाप्य तस्योपरि एकैका संज्ञा नवनववारान् संस्थाप्य तत एतत्सर्वं प्रथमपिंडो भवति, पंचेंद्रियाणि द्वितियपिंडो भवति, एवं प्रथमपिंडं षट्त्रिंशत्प्रमाणं पंचवारान् संस्थाप्य तस्योपर्येकैकमिंद्रियं षट्त्रिंशत् षट्त्रिंशत्प्रमाणं स्थापनीयं तत एतत्सर्वं

प्रथमः पिंडः स्यात् । भूम्यादयो दश द्वितीयः पिंडः प्रथमपिंडं अशीतिशतप्रमाणं दशवारान् संस्थाप्य तस्योपरि पृथिव्यादिकमेकैकं अशीतिशतवारं अशीतिशतवारं संस्थापनीयं तत एतत्सर्व प्रथमः पिंडः, क्षांत्यादयो दश द्वितीयः पिंडः, एवं प्रथमपिंडं अष्टादश शतमात्रं दशसु स्थानेषु संस्थाप्य तस्योपरि क्षांत्यादिकमेकैकं अष्टादशशतवारं अष्टादशशतवारं कृत्वा संस्थापनीयं ततो विषमः प्रस्तारः संपूर्णः स्यात्पिंडं प्रति निक्षिप्ते सत्येवं तथैव विशेषा अपि विकल्पाः कर्त्तव्याः । गुणप्रस्तारोऽपि विषमोऽनेनैव प्रकारेण साध्यत इति ॥ २२ ॥

अक्षसंक्रमस्वरूपेण शीलगुणान् प्रतिपादयन्नाह;—

**पढमक्खे अंदगदे आदिगदे संकमेदि विदियक्खो ।**
**दोण्णवि गंतूणंतं आदिगदे संकमेदि तदियक्खो ॥२३॥**

**प्रथमाक्षेंऽतगतं आदिगते संक्रामति द्वितीयोक्षः ।**
**द्वावपि गत्वांतं आदिगते संक्रामति तृतीयाक्षः ॥ २३ ॥**

**टीका**—गुप्तिकरणसंज्ञेंद्रियकायधर्मानुपर्युपरि संस्थाप्य ततः पूर्वोच्चारणक्रमेणाक्षसंक्रमः कार्यः । प्रथमाक्षेंऽतमवसानं गते प्राप्ते ततोंऽतं प्राप्यादिगतेऽक्षे संक्रामति द्वितीयोऽक्षः करणस्थस्ततो द्वावक्षावंतं गत्वा आदिं प्राप्तयोः संक्रामति तृतीयोऽक्षस्तेषु त्रिष्वक्षेषु अंतं प्राप्यादिं गतेषु संक्रामति तृतीयोऽक्षस्तेष्वंतं प्राप्यादिगतेषु संक्रामति चतुर्थोऽक्षस्ततस्तेषु चतुर्ष्वक्षेष्वंतं प्राप्यादिंगतेषु संक्रामति पंचमोऽक्षस्ततस्तेषु पंचस्वक्षेष्वंतं प्राप्यादिं गतेषु संक्रामति षष्ठोक्षः एवं तावत्संक्रमणं कर्त्तव्यं यावत्सर्वेऽक्षा अंते व्यवस्थिताः स्युस्ततोऽष्टादशशीलसहस्राणि संपूर्णान्यागच्छंतीत्येवं गुणागमननिमित्तमप्यक्षसंक्रमः कार्योऽन्याक्षिप्तचेतसेति ॥ २३ ॥

उच्चारणारूपाणि दृष्टानि अक्षा नष्टास्तत उच्चारणारूपद्वारेणाक्षान् साधयन्नाह;—

**सगमाणेहिं विहत्ते सेसं लक्खित्तु संखिवे रूवं।**
**लक्खिज्जंतं सुद्धे एवं सव्वत्थ कायव्वं ॥ २४ ॥**

**स्वकमानैः विभक्ते शेषं लक्षयित्वा संक्षिपेत् रूपं।**
**लक्षणमंते शुद्धे एवं सर्वत्र कर्तव्यं ॥ २४ ॥**

**टीका**—सगमाणेहिं—स्वकीयप्रमाणैर्योगादिभिर्यत्राक्षे निरूप्यते तानि स्वकप्रमाणानि तैः विहत्ते—विभक्ते विभागे हृते सति, सेसं—शेषं लक्खित्तु—लक्षयित्वा, संखिवे—संक्षिपेद्रूपं क भागे हृते यल्लब्धं तस्मिन्नन्यस्याश्रुतत्वाच्छेषमात्रे चाक्षः स्थितः शेषे पुनः शुद्धे शून्ये, लक्खिज्जंतं—लक्षणं अक्षः, अन्तं अन्ते व्यवस्थितामिति, तु शब्देन सर्वत्रेष्टसमुच्चयः, एवं सर्वत्र शीलेषु च कर्तव्यमिति, यान्युच्चारणरूपाणि लब्धानि तेषु स्वकप्रमाणैस्त्रिभिर्भागे हृते यल्लब्धं तावन्मात्रं भ्रमित्वाऽक्षः यावंति शेषरूपाणि तावन्मात्रेऽक्षः स्थितः यदि पुनर्न किंचिच्छेषरूपं शून्यं तदान्तेऽक्षो द्रष्टव्य इति एवं करणैः संज्ञाभिरिन्द्रियैर्भूम्यादिभिश्च लब्धे लब्धे भागो हार्य इति द्विसहस्रे अशीत्यधिके संस्थाप्य त्रिभिर्योगैर्हृते त्रिनवत्यधिकानि षट्शतानि लब्धानि भवंति, एकं च शेषरूपं तत्र लब्धमात्रं भ्रमित्वाऽक्ष आदौ व्यवस्थितस्ततो लब्धे रूपं प्रक्षिप्य भागे हृते करणैर्द्वे शते एकत्रिंशत्यधिके संजाते रूपं च शेषभूतं तत्रैकत्रिंशदुत्तरे द्वे शते भ्रमित्वा अक्ष आदौ व्यवस्थितस्ततः संज्ञाभिश्चतसृभिः रूपाधिके लब्धे भागे हृते अष्टापंचाशल्लब्धा न किंचिच्छेषभूतं तत्राष्टापंचाशद्वारान् भ्रमित्वाऽक्षोऽन्ते व्यवस्थितस्ततो लब्धे पंचभिरिन्द्रियैर्भागे हृते एकादश रूपाणि लब्धानि शेषभूतानि च त्रीणि रूपाणि तत्रैकादशवारान् भ्रमित्वाऽक्षस्तृतीयरूपे व्यवस्थितस्ततो

लब्धे रूपाधिके दशभिः पृथिव्यादिभिर्भागे हृते रूपं लब्धं द्वे रूपे च शेषभूते तत्रैकवारं भ्रमित्वाक्षो द्वितीयरूपे व्यवस्थितस्ततो रूपे रूपं प्रक्षिप्य क्षांत्यादिभिर्भागे हृते न किंचिल्लब्धं द्वितीयरूपे चाक्षः स्थितः, एवं सर्वत्र नष्टोऽक्ष आनयितव्योऽव्यामोहेन। यथा शीलेष्वेवं गुणेष्वपि द्रष्टव्य इति ॥ २४ ॥

पुनरक्षद्वारेण रूपाणि नष्टान्यानयन्नाह;—

**संठाविऊण रूवं उवरीदो संगुणित्तु सगमाणे।**
**अवणिज्ज अणंकिदयं कुज्जा पढमंति याचेव ॥ २५ ॥**

**संस्थाप्य रूपं उपरितः संगुणय्य स्वकमानैः।**
**अपनीयं अनंकितं कुर्यात् प्रथमांतं यावच्चैव ॥ २५ ॥**

**टीका**—संठाविऊण—संस्थाप्य सम्यक् स्थापयित्वा, रूवं—रूपं, उवरीदो—उपरित आरभ्य, संगुणित्तु—संगुणय्य, सगमाणे—स्वकप्रमाणैः, अवणिज्ज—अपनीयं निराकरणीयं, अणंकिदयं—अनंकितं रूपं, कुज्जा—कुर्यात्, पढमंति याचेव—प्रथममारभ्यांतकं यावत् रूपं संस्थाप्य दशभी रूपैर्गुणनीयं। अष्टरूपाण्यनंकितानि परिहरणीयानि ततो द्वे रूपे शेषभूते ततो दशभी रूपैर्गुणयितव्ये ततो दशभी रूपैर्गुणिते विंशतिरूपाणि भवंति ततोऽष्टरूपाणि निराकरणीयानि ततो द्वादशरूपाणि पंचत्रिर्गुणितानि षष्टिरूपाणि भवंति द्वे रूपेऽनंकिते ते निराकृत्यष्टापंचाशद्रूपाणि भवंति तानि चतुर्भी रूपैर्गुणितानि द्वात्रिंशदधिके द्वे शते भवतः, अनंकितं न किंचिद्विद्यते ततस्तानि लब्धरूपाणि त्रिभिर्गुणितानि षण्णवत्यधिकानि षट्शतानि भवंति अनंकिते द्वे रूपे ते निराकृत्य चतुर्णवत्यधिकानि षट्शतानि भवंति ततस्तानि त्रिभी रूपैर्गुणितानि द्वे सहस्रे द्व्यशीत्यधिके भवतस्ततो

द्वे रूपेऽनंकिते निराकृत्य शेषाण्युच्चारणरूपाणि भवंत्येवं सर्वत्र शीलेषु गुणेषु च द्रष्टव्यमिति * ॥ २५ ॥

शीलगुणानामुपसंहारगाथामाह;—

**एवं सीलगुणाणं सुत्तत्थवियप्पदो विजाणित्ता ।**
**जो पालेदि विसुद्धो सो पावदि सव्वकल्लाणं ॥ २६ ॥**

**एवं शीलगुणान् सूत्रार्थविकल्पतो विज्ञाय ।**
**यः पालयति विशुद्धः स प्राप्नोति सर्वकल्याणं ॥ २६ ॥**

**टीका**—एवमनेन प्रकारेण पूर्वोक्तेन शीलगुणाणं—शीलगुणाननेक-भेदभिन्नान्, सुत्तत्थवियप्पदो—सूत्रार्थविकल्पतः सूत्रार्थेन च, विजाणित्ता—विज्ञाय विशेषतो ज्ञात्वा, जो पालेदि—यः पालयति, विसुद्धो—विशुद्धः

* अष्टादशशीलसहस्राणां समप्रस्तारापेक्षया यंत्रमिदम् ।

| क्षमा १ | मार्दव २ | आर्जव ३ | शौच ४ | सत्य ५ | संयम ६ | तप ७ | त्याग ८ | आकिंच ९ | ब्रह्मचर्य १० |
|---|---|---|---|---|---|---|---|---|---|
| पृथ्वी ० | अप् ० | तेज २० | वायु ३० | प्रत्येक ४० | साधारण ५० | द्वीन्द्रिय ६० | त्रीन्द्रिय ७० | चतु० ८० | पंचेन्द्रि. ९० |
| स्पर्श० ० | रसना १०० | घ्राण २०० | चक्षु ३०० | श्रो० ४०० | | | | | |
| आहार ० | भय ५०० | मैथुन १००० | परिग्रह १५०० | | | | | | |
| मनःक० ० | वाक० २००० | कायक० ४००० | | | | | | | |
| मनोगु ० | वाग्गु० ६००० | कायगु० १२००० | | | | | | | |

( अग्रतनपृष्ठे )

सर्वकर्मविनिर्मुक्तः, सो पावदि— स प्राप्नोति सव्वकल्लाणं—सर्वकल्याणं, अनंतचतुष्टयं पंचकल्याणानि वा । सूत्रार्थविकल्पतो विज्ञाय शीलगुणान् यः पालयति स विशुद्धः सन् सर्वकल्याणानि प्राप्नोतीति ॥ २६ ॥

इति श्रीमद्वट्टकेर्याचार्यवर्यप्रणीतमूलाचारे वसुनंद्याचार्यप्रणीताचारवृत्त्याख्यटीकासहिते शीलगुणव्यावर्णननामैकादशोऽधिकारः ॥

---

विषम प्रस्तारापेक्षया यंत्रमिदम् ।

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| मनगुप्तिः १ | वचनगुप्तिः २ | कायगुप्तिः ३ | | | | | | | |
| मनकरण ० | वचनकरण ३ | कायकरण ६ | | | | | | | |
| आहार ० | भय ९ | मैथुन १८ | परिग्रह २७ | | | | | | |
| स्पर्श ० | रसना ३६ | घ्राण ७२ | चक्षु १०८ | श्रोत्र १४४ | | | | | |
| पृथ्वी ० | अप् १८० | तेज ३६० | वायु ५४० | प्रत्येक ७२० | स. धारण ९०० | द्वीन्द्रिय १००० | त्रीन्द्रिय १२६० | चतुरिन्द्रिय १४४० | पंचेन्द्रिय १६२० |
| क्षमा ० | मार्दव १८०० | आर्जव ३६०० | शौच ५४०० | सत्य ७२०० | संयम ९००० | तप १०००० | त्याग १२६०० | आकिंचन्य १४४०० | ब्रह्मचर्य १६२०० |

—संशोधकः ।

१ अस्य स्थाने परिच्छेदान्तेऽयं पाठः ख-ग-पुस्तके 'इत्याचारवृत्तौ वसुनन्दिसैद्धान्तिकविरचितायां शीलगुणव्यावर्णनं नामैकादशः परिच्छेदः' ।

# पर्याप्त्यधिकारः ।



शीलगुणाधिकारं व्याख्याय सर्वसिद्धांतकरणचरणसमुच्चयस्वरूपं द्वादशाधिकारं पर्याप्त्याख्यं प्रतिपादयन् मंगलपूर्विकां प्रतिज्ञामाह;—

**काऊण णमोक्कारं सिद्धाणं कम्मचक्कमुक्काणं ।**
**पज्जत्तीसंगहणी वोच्छामि जहाणुपुव्वीयं ॥ १ ॥**

**कृत्वा नमस्कारं सिद्धेभ्यः कर्मचक्रमुक्तेभ्यः ।**
**पर्याप्तिसंग्रहिणीः वक्ष्ये यथानुपूर्वम् ॥ १ ॥**

**टीका**—काऊण—कृत्वा । णमोक्कारं—नमस्कारं शुद्धमनोवाक्कायप्रणामं । सिद्धाणं—सिद्धानां सर्वलेपविनिर्मुक्तानां अथवा सर्वसिद्धेभ्यः प्राप्ताशेषसुखेभ्यः । कम्मचक्कमुक्काणं—कर्मचक्रमुक्तानां चक्रमिव चक्रं कर्मनिमित्तं यच्चतुर्गतिपरिभ्रमणं तेन परिहीणानां कर्मचक्रविप्रमुक्तेभ्यो वा संसारान्निर्गतेभ्यः । पज्जत्ती—पर्याप्तीराहारादिकारणसंपूर्णताः : संगहणी—सर्वाणि सिद्धांतार्थप्रतिपादकानि सूत्राणि संगृह्णंतीति संग्राहिण्यस्ताः संग्रहिणीर्गृहिताशेषतत्वार्थाः । अथवा पर्याप्तिसंग्रहं पर्याप्तिसंक्षेपं पर्याप्त्यधिकारं वा सर्वनियोगमूलभूतं । वोच्छामि—वक्ष्ये विवृणोमि । जहाणुपुव्वीयं-यथानुपूर्वं यथाक्रमेण सर्वज्ञोक्तागमानुसारेण, न स्वमनीषिकया । कर्मचक्रविनिर्मुक्तेभ्यः सिद्धेभ्यः सिद्धानां वा नमस्कारं कृत्वा यथानुपूर्वं पर्याप्तीः संग्रहिणीः वक्ष्य इति ॥ १ ॥

प्रतिज्ञार्थं निर्वहन्नाचार्यः पर्याप्त्युपलक्षितयाधिकारस्य संग्रहस्तत्रैकगाथाद्वयमाह;—

**पज्जत्ती देहो वि य संठाणं कायइंदियाणं च ।**
**जोणी आउ पमाणं जोगो वेदो य लेस पविचारो ॥२॥**

---

१ विप्रमुक्तेभ्यः ख—ग । २ संग्रहसूत्रसूचकगाथा० ख—ग ।

उववादो उव्वट्टण ठाणं च कुलं च अप्पवहुलो य।
पयडिट्ठिदिअणुभागप्पदेसबंधो य सुत्तपदा ॥ ३ ॥

पर्याप्तयो देहोपि च संस्थानं कायेंद्रियाणां च।
योनय आयुः प्रमाणं योगो वेदश्च लेश्या प्रविचारः ॥ २ ॥
उपपाद उद्वर्तनं स्थानं च कुलानि च अल्पबहुत्वं च।
प्रकृतिस्थित्यनुभागप्रदेशबंधश्च सूत्रपदानि ॥ ३ ॥

टीका—पज्जत्ती–पर्याप्तय आहारादिकारणनिष्पत्तयः। देहो वि य–देहोऽपि चौदारिकवैक्रियिकाहारकवर्गणागतपुद्गलपिंडः करचरणशिरोग्रीवाद्यवयवैः परिणतो वा अपि चान्यदपि। संठाणं–संस्थानमवयवसन्निवेशविशेषः। केषामिति चेत् कायेंद्रियाणां च कायानां च पृथिवीकायादिकानां श्रोत्रादीन्द्रियाणां च कायानां संस्थानमिंद्रियाणां च। जोणी–योनयो जीवोत्पत्तिस्थानानि। आउ–आयुर्नरकादिगतिस्थितिकारणपुद्गलप्रचयः। पमाणं–प्रमाणमुत्सेधायामविस्ताराणामियत्ता, चायुषोऽन्येषां च देहादीनां वेदितव्यं। जोगो–योगः कायवाङ्मनस्कर्म। वेदो य—वेदश्च मोहनीयकर्मविशेषः स्त्रीपुरुषाद्यभिलाषहेतुः। लेस–लेश्या कषायानुरंजिता योगप्रवृत्तिः। पविचारो–प्रवीचारः स्पर्शनेंद्रियाद्यनुरागसेवा, उववादो–उपपादः अन्यस्मादागत्योत्पत्तिः। उव्वट्टण–उद्वर्तनं अस्मादन्यत्रोत्पत्तिः। ठाणं–स्थानं जीवस्थानगुणस्थानमार्गणास्थानानि। कुलं च–कुलानि जातिभेदाः। अप्पवहुगो च–अल्पबहुत्वं च। पयडि–प्रकृतिर्ज्ञानावरणादिस्वरूपेण पुद्गलपरिणामः। ठिदि–स्थितिः पुद्गलानां कर्मस्वरूपमजहतामवस्थितिकालः, अणुभाग–अनुभागः कर्मणां रसविशेषः। पदेस–प्रदेशः कर्मभावपरिणतपुद्गलस्कंधानां परमाणुपरिच्छेदेनावधारणं, बंधो–बंधः परवशीकरणं जीवपुद्गलप्रदेशानुप्रदेशेन संश्लेषशब्दःप्रत्येकमभिसंबध्यते। प्रकृतिबंधः स्थिति-

१ त. ख–ग। २ जीवपुद्गलप्रदेशानुप्रवेशानुप्रवेशेन ख–ग।

बंधोऽनुभागबंधः प्रदेशबंधश्चेति । च शब्दः समुच्चयार्थः । सुत्तपदा—सूत्रपदानि एतानि सूत्रपदानि, अथवैते सूत्रपदा एतानि विंशतिसूत्राणि षोडशसूत्राणि वा द्रष्टव्यानि भवंतीति । यदि कायसंस्थानमिन्द्रियसंस्थानं च द्वे सूत्रे प्रकृत्यादिभेदेन च बंधस्य चत्वारि सूत्राणि तदा विंशतिसूत्राणां (णि) अथ कायेन्द्रियसंस्थानमेकं सूत्रं चतुर्धा बंधोप्येकं सूत्रं तदा षोडश सूत्राणीति ॥ ३ ॥ ४ ॥

प्रथमसूत्रसूचितपर्याप्तिसंख्यानामनिर्देशेनाह;—

**आहारे य सरीरे तह इंदिय आणपाण भासाए ।**
**होंति मणो वि य कमसो पज्जत्तीओ जिणक्खादा ॥४॥**

**आहारस्य च शरीरस्य तथेंद्रियस्य आनप्राणयोर्भाषायाः ।**
**भवंति मनसोपि च क्रमशः पर्याप्तय जिनाख्याताः ॥ ४ ॥**

**टीका**—आहारे य-आहारस्याहारविषये वा कर्म नोकर्मस्वरूपेण पुद्गलानामादानमाहारस्तृप्तिकारणपुद्गलप्रचयो वा, सरीरे—शरीरस्य शरीरे वौदारिकादिस्वरूपेण पुद्गलपरिणामः शरीरं । तह—तथा । इंदिय—इंद्रियस्येंद्रियविषये वा पुद्गलस्वरूपेण परिणामः [ इन्द्रियविषये वा ], आणपाण—आनप्राणयोरानप्राणविषये वोच्छ्वासनिश्वासवायुस्वरूपेण पुद्गलप्रचय आनप्राणनामा । भासाए—भाषाया भाषाविषये वा शब्दस्वरूपेण पुद्गलपरिणामो भाषा । होंति—भवंति । मणो वि य—मनसोऽपि च मनोविषये वा चित्तोत्पत्तिनिमित्तपरमाणुनिचयो मनः । कमसो—क्रमशः क्रमेण यथानुक्रमेणागमन्यायेन वा । पज्जत्ती—पर्याप्तयः संपूर्णताहेतवः । जिणक्खादा जिनख्याताः सर्वज्ञप्रतिपादिताः । एताः पर्याप्तयः प्रत्येकमभिसंबध्यंते । आहारपर्याप्तिः, शरीरपर्याप्तिः, इन्द्रियपर्याप्तिः, आनप्राणपर्याप्तिः, भाषापर्याप्तिः, मनःपर्याप्तिरेताः षट् पर्याप्तयो जिनख्याता भवंतीति । पर्याप्तीनां संख्या षडेव नाधिका इति नामनिर्देशेनैव लक्षणं व्याख्यातं द्रष्टव्यं यतः; आहारपर्या-

प्तिरिति किमुक्तं भवति येन कारणेन च त्रिशरीरयोग्यं भुक्तमाहारं खलरस भागं कृत्वा समर्थो भवति जीवस्तस्य कारणस्य निर्वृत्तिः संपूर्णता आहार पर्याप्तिरित्युच्यते। तथा शरीरपर्याप्तिरिति किमुक्तं भवति येन कारणेन शरीरप्रायोग्यानि पुद्गलद्रव्याणि गृहीत्वौदारिकवैक्रियकाहारकशरीरस्वरूपेण परिणमय्य समर्थो भवति तस्य कारणस्य निर्वृत्तिः संपूर्णता शरीरपर्याप्ति-रित्युच्यते। तथेंद्रियपर्याप्तिरिति किमुक्तं भवति येन कारणेनैकेन्द्रियस्य द्वीन्द्रियस्य त्रयाणामिंद्रियाणां चतुर्णा पंचेंद्रियाणां प्रायोग्यानि पुद्गलद्र-व्याणि गृहीत्वात्मात्मविषये ज्ञातुं समर्थो भवति तस्य कारणस्य निर्वृत्तिः परिपूर्णता इन्द्रियपर्याप्तिरित्युच्यते। तथाऽऽनप्राणपर्याप्तिरिति किमुक्तं भवति येन कारणेनानप्राणप्रायोग्यानि पुद्गलद्रव्याण्यवलंब्यानप्राणपर्याप्त्या निः-सृत्य समर्थो भवति तस्य कारणस्य निर्वृत्तिः संपूर्णताऽऽनप्राणपर्याप्तिरि-त्युच्यते। तथा भाषापर्याप्तिरिति किमुक्तं भवति येन कारणेन सत्यमृषा असत्यमृषाया? भाषायाश्चतुर्विधायाः प्रायोग्यानि पुद्गलद्रव्याण्याश्रित्य चतु-र्विधाया भाषायाः स्वरूपेण परिणमय्य समर्थो भवति तस्य कारणस्य निर्वृत्तिः संपूर्णता भाषापर्याप्तिरित्युच्यते। तथा मनःपर्याप्तिरिति किमुक्तं भवति येन कारणेन चतुर्विधमनःप्रायोग्यानि पुद्गलद्रव्याश्रित्य चतुर्विध-मनःपर्याप्त्या परिणमय्य समर्थो भवति तस्य कारणस्य निर्वृत्तिः संपूर्णता मनःपर्याप्तिरित्युच्यते। अतो न पृथग्लक्षणसूत्रं कृतमिति ॥ ५ ॥

पर्याप्तीनां स्वामित्वं प्रतिपादयन्नाह;—

**एइंदिएसु चत्तारि होंति तह आदिदो य पंच भवे।**
**बेइंदियादियाणं पज्जत्तीओ असण्णित्ति ॥ ५ ॥**

**एकेंद्रियेषु चतस्रो भवंति तथा आदितश्च पंच भवंति।**
**द्वींद्रियादिकानां पर्याप्तयः असंज्ञीति ॥ ५ ॥**

**टीका**—एइंदिएसु–एकमिन्द्रियं येषां ते एकेंद्रियाः पृथिवीकायिकादिवनस्पतिकायिकांतास्तेष्वेकेंद्रियेषु । चत्तारि–चतस्रोऽष्टार्द्धाः । होंति–भवंति । तह–तथा तेनैव न्यायेन व्यावर्णितक्रमेण । आदिदो य–आदितश्चादौ प्रभृति प्रथमाया आरभ्य, पंच–दशार्धसंख्यापरिमिताः । भवे–भवंति विद्यंते, वेइंदियादियाणं–द्वीन्द्रियादीनां द्वीन्द्रियादिर्येषां ते द्वीन्द्रियादयस्तेषां द्वीन्द्रियादीनां, पज्जत्तीओ–पर्याप्तयः, असण्णित्ति–असंज्ञीति असंज्ञिपर्यंतानां द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियाणामाहारशरीरेन्द्रियानप्राणभाषापर्याप्तयः पंच भवंति । तथैकेंद्रियेषु चाहारशरीरेन्द्रियानप्राणपर्याप्तयश्चतस्रो भवंति, द्वीन्द्रियाद्यसंज्ञिपर्यंतानां पंच भवंतीति ॥ ५ ॥

अथ षडपि पर्याप्तयः कस्य भवंतीत्याशंकायामाह;—

**छप्पि य पज्जत्तीओ बोधव्वा होंति सण्णिकायाणं ।**
**एदाहि अणिव्वत्ता ते दु अपज्जत्तया होंति ॥ ६ ॥**

**षडपि च पर्याप्तयो बोद्धव्या भवति संज्ञिकायानां ।**
**एताभिरनिर्वृत्तास्ते त्वपर्याप्तका भवंति ॥ ६ ॥**

**टीका**—छप्पि य–षडपि च द्वादशार्द्धा अपि समस्ताः, पज्जत्तीओ–पर्याप्तय आहारशरीरेंद्रियानप्राणभाषामनःपर्याप्तयः, बोधव्वा–बोद्धव्याः सम्यगवगंतव्याः, होंति—भवंति, सण्णिकायाणं—संज्ञिकायानां ये संज्ञिनः पंचेन्द्रियास्तेषां षडपि पर्याप्तयो भवंति इत्यवगंतव्यम् । अथ केऽपर्याप्ता इत्याशंकायामाह;—एदाहिं–एताभिश्चतसृभिः पंचभिः षड्भिः पर्याप्तिभिः, अणिव्वत्ता—अनिर्वृत्ता असंपूर्णा अनिष्पन्नाः, ते दु–ते तु त एव जीवाः, अपज्जत्तया–अपर्याप्तकाः, होंति–भवंतीति ॥ ६ ॥

संख्या पर्याप्तीनां नामनिर्देशेनैव प्रतिपन्ना तदर्थं न पृथक् सूत्रं कृतं, यावता कालेन च तासां निष्पत्तिर्भवति तस्य कालस्य परिमाणार्थमाह;—

**पज्जत्तीपज्जत्ता भिण्णमुहुत्तेण होंति णायव्वा ।**
**अणुसमयं पज्जत्ती सव्वेसिं चोववादीणं ॥ ७ ॥**

**पर्याप्तिपर्याप्ता भिन्नमुहूर्तेन भवंति ज्ञातव्याः ।**
**अनुसमयं पर्याप्तयः सर्वेषां चोपपादिनां ॥ ७ ॥**

**टीका**—पज्जत्तीपज्जता—पर्याप्तिभिः पर्याप्ताः संपूर्णाः पर्याप्तिपर्याप्ताः संपूर्णाहारादिहेतवः, भिण्णमुहुत्तेण—भिन्नमुहूर्तेन समयादूनघटिकाद्वयेन, होंति—भवंति, णायव्वा—ज्ञातव्या एते तिर्यङ्मनुष्या ज्ञातव्याः, यतः अणुसमयं—अनुसमयं समयं समयं प्रतिसमयं वा लक्षणं कृत्वा, पज्जत्ती—पर्याप्तयः, सव्वेसिं—सर्वेषां, उववादीणं उपपादो विद्यते येषां त उपपादिनस्तेषामुपपादिनां देवनारकाणां । अथ स्यान्मतं कोऽयं विशेषो देवनारकाणामनुसमयं पर्याप्तिः शेषाणां भिन्नमुहूर्त्तेनेति नैष दोषः देवनारकाणां पर्याप्तिसमानकाले एव सर्वावयवानां निष्पत्तिर्भवति न शेषाणां सर्वेषां यतो यस्मिन्नेव काले देवनारकारणामाहारादिकारणस्य निष्पत्तिस्तास्मिन्नेव काले शरीरादिकार्यस्यापि, तिर्यङ्मनुष्याणां पुनर्लघुकालेनाहारादिकारणस्य निष्पत्तिः शरीरादिकार्यस्य च महतातः सर्वेषामुपपादिनामनुसमयं पर्याप्तयः तिर्यङ्मनुष्याणां भिन्नमुहूर्त्तेनेत्युक्तमिति । पर्याप्तीनां स्थितिकालस्तिर्यङ्मनुष्याणां जघन्येन क्षुद्रभवग्रहणं किंचिदून उच्छ्वासाष्टादशभाग उत्कृष्टेन त्रीणि पल्योमानि, देवनारकाणां च जघन्येन दशवर्षसहस्राण्युत्कृष्टेन त्रयस्त्रिंशत्सागरोपमाणि जीवितसमाः पर्याप्तयो यतो न पृथक् स्थितिकाल उक्त इति ॥ ७ ॥

अथ कथमेतज्ज्ञायतेऽनुसमयं पर्याप्तिरुपपादिनामिति पृष्टे पूर्वागममाह;—

**जह्मि विमाणे जादो उववादसिला महारहे सयणे ।**
**अणुसमयं पज्जत्तो देवो दिव्वेण रूवेण ॥ ८ ॥**

**यस्मिन् विमाने जात उपपादशिलायां महार्हे शयने ।**
**अनुसमयं पर्याप्तः देवः दिव्येन रूपेण ॥ ८ ॥**

**टीका**—जम्हि—यस्मिन्, विमाणे—विमाने भवनादिसर्वार्थसिद्धिविमानपर्यंते, जादो—जात उत्पन्नः, उववादसिला—उपपादशिलायां शुक्तिपुटाकारायां, महारहे—महार्हे महापूज्यार्हे, सयणे—शयने शयनीयेऽनेकमणिखचितपर्यंके सर्वालंकारविभूषिते, अणुसमयं—अनुसमयं समयं समयं प्रति, पज्जत्तो—पर्याप्तः संपूर्णयौवनः सर्वाभरणभूषितः देवो—देवः, दिव्वेण—दिव्येन सुष्ठु शोभनेन, रूवेण—रूपेण शरीराकारवर्णादिना। यस्मिन् विमाने शिलायां महार्हे शयनीये देवो जातस्तस्मिन्नेवानुसमयं पर्याप्तो दिव्येन रूपेण भवतीति ॥ ८ ॥

देहसूत्रं विवृण्वन् संबंधेनैव देवदेहं प्रतिपादयन्नाह;—

**देहस्स य णिव्वत्ती भिण्णमुहूत्तेण होइ देवाणं।**
**सव्वंगभूसणगुणं जोव्वणमवि होदि देहम्मि ॥ ९ ॥**

**देहस्य च निर्वृतिर्भिन्नमुहूर्तेन भवति देवानाम्।**
**सर्वांगभूषणगुणं यौवनमपि भवति देहे ॥ ९ ॥**

**टीका**—देहस्स—य—देहस्य च शरीरस्य, णिव्वत्ती—निर्वृत्तिर्निष्पत्तिः, भिण्णमुहुत्तेण—भिन्नमुहूर्तेन किंचिदूनघटिकाद्वयेन, होदि—भवति, देवाणं—देवानां भवनवासिकादीनां न केवलं षट्पर्याप्तयो भिन्नमुहूर्त्तेन निष्पत्तिं गच्छंति किं तु देहस्यापि च निष्पत्तिः सर्वकार्यकरणक्षमा भिन्नमुहूर्तेनैव भवतीति। तथा न केवलं देहस्योत्पत्तिर्भिन्नमुहूर्त्तेन किं तु सव्वंगभूसणगुणं—सर्वाणि च तान्यंगानि सर्वांगानि करचरणशिरोग्रीवादीनितानि भूषयति इति सर्वांगभूषणः सर्वांगभूषणो गुणविशेषो यस्य तत्सर्वांगभूषणगुणं निरवशेषशरीरावयवालंकारकरणं, जोव्वणं—यौवनं प्रथमवयः परमरमणीयावस्था सर्वालंकारसमन्विता अतिशयमतिशोभनं सर्वजननयनाह्लादकरं, होदि—भवति, देहम्मि—देहे शरीरे। देवानां यौवनमपि शोभनं सर्वांगभूषणगुणं तेनैव भिन्नमुहूर्तेन भवतीति ॥ ९ ॥

पुनरपि देवन्यावर्णनद्वारेण देहमाह;—

**कणयमिव णिरुवलेवा णिम्मलगत्ता सुयंधणीसासा ।**
**अणादिवरचारुरूवा समचतुरंसोरुसंठाणं ॥ १० ॥**

**कनकमिव निरुपलेपा निर्मलगात्राः सुगंधनिश्वासाः ।**
**अनादिपरचारुरूपाः समचतुरस्रोरुसंस्थानाः ॥ १० ॥**

**टीका**—अणादिपर-आदिर्बालत्वं परो वृद्धत्वं आदिश्च परश्चादिपरौ न विद्येते आदिपरौ बालवृद्धपर्यायौ यस्य तस्य तदनादिपरं चारु शोभनं सर्वजननयनकांतं रूपं शरीरावयवरमणीयता अनादिपरं चारुरूपं येषां ते अनादिपरचारुरूपा यावदायुःशरीरस्थिरयौवना इत्यर्थः अतिशयितस्थिर-चारुरूपा वा, समचउरंसोरु-समचतुरस्रं उरु महत् पूज्यगुणं, संठाणं-संस्थानं शरीराकारः समचतुरस्रं उरु संस्थानं येषां ते समचतुरस्रोरुसंस्थाना यथाप्रदेशमन्यूनाधिकावयवसंपूर्णप्रमाणाः, कणयमिव-कनकामिव, णिरुव-लेवा-निरुपलेपा उपलेपान्मलान्निर्गता निरुपलेपाः, णिम्मलगत्ता-निर्मलं गात्रं येषां ते निर्मलगात्राः, सुयंधणीसासा-सुगंधः सर्वघ्राणेंद्रियाल्हादनकरो निःश्वास उछ्वासो येषां ते सुगंधनिःश्वासाः । कनकमिव निर्लेपा निर्मल-गात्राः सुगंधनिःश्वासा अनादिपरचारुरूपाः समचतुरस्रोरुसंस्थाना देवा भवंतीति संबंधः ॥ १० ॥

किं देवसंस्थाने सप्त धातवो भवंतीत्यारेकायां परिहारमाह;—

**केसणहमंसुलोमा चम्मवसारुहिरमुत्तपुरिसं वा ।**
**णेवट्ठी णेव सिरा देवाण सरीरसंठाणे ॥ ११ ॥**

**केशनखश्मश्रुलोमानि चर्मवसारुधिरमूत्रपुरीषाणि वा ।**
**नैवास्थीनि नैव सिरा देवानां शरीरसंस्थाने ॥ ११ ॥**

**टीका**—केस- केशा मस्तकभ्रूनयननासिकाकर्णकक्षगुह्यादिप्रदेश-वालाः, णह-नखाः हस्तपादांगुल्यग्रोद्भवाः, मंसु-श्मश्रूणि कूर्चवालाः,

लोम—लोमानि सर्वशरीरोद्भवसूक्ष्मवालाः, चम्म—चर्म मांसादिप्रच्छादिका त्वक्,वस—वसा मांसास्थिगतस्निग्धरसः, रुहिर—रुधिरं रक्तं, मुत्तं—मूत्रं प्रस्रवणं, पुरिसं—पुरीषं, वाशब्दोऽन्येषां समुच्चयार्थः शुक्रप्रस्वेदत्वगादीनां। णेव—नैव पूर्वोक्तानि सर्वाणि नैव भवंति, अट्ठी—अस्थीनि संहननकारणानि, नैव सिरा-सिराजालानि। देवाण—देवानां शरीरसंस्थाने, केशनखश्मश्रुलोमचर्मवसारुधिरमूत्रपुरीषशुक्रप्रस्वेदानि नैव भवंति, अस्थिसिराश्च नैव भवंतीति॥ ११॥

शरीरगतपुद्गलातिशयं प्रतिपादयन् देहमाह;—

**वरवण्णगंधरसफासादिव्वबहुपोग्गलेहिं णिम्माणं।**
**गेण्हदि देवो देहं सुचरिदकम्माणुभावेण॥ १२॥**

**वरवर्णगंधरसस्पर्शदिव्यबहुपुद्गलैर्निर्मितं।**
**गृह्णाति देवो देहं स्वचरितकर्मानुभावेन॥ १२॥**

**टीका:**—वराः श्रेष्ठा वर्णरसगंधस्पर्शा येषां ते वरवर्णगंधरसस्पर्शास्ते च ते दिव्यबहुपुद्गलाश्च तैर्वरवर्णगंधरसस्पर्शदिव्यानंतपुद्गलैः सर्वगुणविशिष्टवैक्रियकशरीरवर्गणागतानंतपरमाणुभिः, णिम्माणं—निर्मितं सर्वावयवरचितं, गेण्हदि—गृह्णाति स्वीकरोति, देवो—देवः, देहं—शरीरं, सुचरिदकम्माणुभावेण—स्वेन चरितमर्जितं तच्च तत्कर्म च सुचरितकर्म तस्यानुभावो माहात्म्यं तेन स्वचरितकर्मानुभावेन पूर्वार्जितशुभकर्मप्रभावेन। देवो वरवर्णगंधरसस्पर्शदिव्यबहुपुद्गलनिर्मितं शरीरं गृह्णाति॥ १२॥

अथ देवानां त्रयाणां शरीराणां मध्ये कतमद्भवतीत्यारेकायामाह;—

**वेउव्वियं सरीरं देवाणं माणुसाण संठाणं।**
**सुहणाम पसत्थगदी सुस्सरवयणं सुरूवं च॥ १३॥**

**वैक्रियिकं शरीरं देवानां मनुष्याणां संस्थानं।**
**शुभनाम प्रशस्तगतिः सुस्वरवचनं सुरूपं च॥ १३॥**

**टीका**—वेउव्वियं—अणिमादिलक्षणा विक्रिया तस्यां भवं सैव प्रयोजनं वा वैक्रियकं सूक्ष्मादिभावेन नाना शरीरविकरणसमर्थं विविधगुणर्द्धियुक्तं वा शरीरं आत्मप्रवृत्त्युपचितपुद्गलपिंडः, देवाणं—देवानां, माणुसाण—मनुष्याणां मनुष्यजातिकर्मोदयवतां, संठाणं—संस्थानं सर्वावयवसंपूर्णता, सुहणाम—शुभं शोभनं नाम संज्ञानुभावो यस्य तच्छुभनाम प्रशस्तनामकर्मोदयवत्, पसत्थगदी प्रशस्ता शोभना गतिर्गमनं यस्य प्रशस्तगतिः मृदुमंथरविलासादिगुणसंयुक्तं, सुस्सरवयणं—शोभनः स्वरो यस्य तत् सुस्वरवचनं, सुरूवं—सुरूपं शोभनरूपं शोभनं रूपं यस्य तत् सुरूपं, चशब्देनान्यदपि गीतनृत्तादि गृह्यते यत एवं ततो यद्यपि केशनखादिरहितं तथापि न बीभत्सरूपं यतो देवानां वैक्रियकं शरीरं । संस्थानं पुनः किंविशिष्टं ? शुभनाम प्रशस्तगतिः सुस्वरवचनं सुरूपं मनुष्याणामिवास्य केशनखाद्याकारः सर्वोऽपि विद्यत एव सुवर्णशैलप्रतिमानामिवेति ॥ १३ ॥

न केवलं देवानां वैक्रियकं शरीरं किन्तु नारकाणामपि यद्येवं तदेव तावत्प्रतिपादनीयमित्याशंकायां प्रमाणपूर्वकं नारकदेहस्वरूपं प्रतिपादयन्नाह;—

**पढमाए पुढवीए णेरइयाणं तु होइ उस्सेहो ।**
**सत्तधणु तिण्णि रयणी छच्चेव य अंगुला होंति ॥ १४ ॥**

**प्रथमायां पृथिव्यां नारकाणां तु भवत्युत्सेधः ।**
**सप्तधनूंषि त्रिरत्नयः षडेव चांगुलानि भवंति ॥ १४ ॥**

**टीका**—पढमाए—प्रथमायां रत्नप्रभायां, पुढवीए—पृथिव्यां, णेरइयाणं—नारकाणां, तुशब्दः स्वविशेषग्राहकः तेनान्यदपि द्वादशप्रस्ताराणां शरीरप्रमाणं वेदितव्यं, होदि—भवति, उस्सेहो—उत्सेधः शरीरप्रमाणं, सत्तधणु—सप्तधनूंषि, तिण्णि रयणी—त्रिरत्नयो हस्तत्रयं, छच्चेव—षडेव शब्दः समुच्चयार्थः, अंगुलानि, होंति—भवंति अष्टयवनिष्पन्नमंगुलं चतुर्विंशत्यंगुलैर्हस्त-

श्चतुर्हस्तं धनुः। नारकाणां प्रथमपृथिव्यां त्रयोदशप्रस्तारे विक्रांताख्ये शरीरस्योत्सेधः सप्त धनूंषि हस्तत्रयं षडंगुलानि इति । प्रथमे पुनः सीमंतकाख्ये प्रस्तारे त्रयो हस्ता नारकशरीरस्योत्सेधो मुखं सप्त धनूंषि हस्तत्रयं षडंगुलानि भूमिः, भूमेर्मुखं विशोध्य, शुद्धशेषस्य द्वादशभिर्भागैर्हृते इच्छया गुणिते लब्धे मुखसहिते प्रथमवर्जितद्वादशप्रस्ताराणां नारकशरीरप्रमाणमागच्छतीति । तथा नरनाम्नि द्वितीयप्रस्तारे एकं धनुरेको हस्तः सार्द्धान्यष्टांगुलानि च नारकाणां शरीरोत्सेधः । तृतीयप्रस्तारे रोरुकनामधेये शरीरस्योत्सेध एकं धनुस्त्रयो हस्ताः सप्तदशैवांगुलानि । चतुर्थप्रस्तारे भ्रांतसंज्ञके नारकतनोरुत्सेधो द्वे धनुषी द्वौ हस्तौ सार्द्धमंगुलं । पंचमप्रस्तार उद्भ्रांतनाम्नि दंडत्रयं दशांगुलानि तनोरुत्सेधः । षष्ठप्रस्तारे संभ्रान्तसंज्ञके धनुषां त्रयं द्वौ हस्तावंगुलान्यष्टादश सार्द्धानि च । सप्तमप्रस्तारेऽसंभ्रांताख्ये कार्मुकचतुष्टयमेको हस्तस्त्रीण्यंगुलानि च शरीरोत्सेधः । अष्टमप्रस्तारे विभ्रांताख्ये कोदंडचतुष्टयं हस्तत्रयमेकादशांगुलानि सार्द्धानि तनोरुत्सेधः । नवमप्रस्तारे त्रस्तनामनि कार्मुकाणां पंचकमेको हस्तोऽगुलानि च विंशतिः शरीरोत्सेधः । दशमप्रस्तारे त्रसितनामके षट् धनूंषि सार्द्धांगुलचतुष्कं च शरीरप्रमाणं । एकादशप्रस्तारे वक्रांताख्ये धनुषां षट्कं हस्तद्वितयं त्रयोदशांगुलानि च । द्वादशप्रस्तारे चावक्रांताख्ये धनुषां सप्तकं सहितमेकविंशत्या सार्द्धांगुलेन च तनोः प्रमाणं । त्रयोदशप्रस्तारे विक्रांते सप्त चापा हस्तत्रयं षडंगुलानि च शरीरोत्सेधः । प्रथमे तु सीमंतके प्रस्तारे हस्तत्रयामिति शरीरं प्रथमपृथिव्यां शरीरप्रमाणमेतदिति ॥ १४ ॥

द्वितीयायां च पृथिव्यां नारकशरीरप्रमाणं प्रतिपादयन्नाह;—

**बिदियाए पुढवीए णेरइयाणं तु होइ उस्सेहो ।**
**पण्णरस दोण्णि बारस धणु रदणी अंगुला चेव ॥ १५ ॥**

**द्वितीयायां पृथिव्यां नारकाणां तु भवति उत्सेधः ।**
**पंचदश द्वौ द्वादश धनूंषि रत्नयोऽङ्गुलानि चैव ॥ १५ ॥**

**टीका**—विदियाए-द्वितीयायां द्वितीययोः पूरणी द्वितीया तस्यां, पुढवीए-पृथिव्यां शर्कराख्यायां, णेरइयाणं-नारकाणां, तुशब्दः संगृहीताशेषोत्सेधविशेषः, होदि-भवति, उस्सेहो-उत्सेधः शरीरोत्सेधप्रमाणं, पण्णरस-पंचदश, दोण्णि-द्वौ, वारस-द्वादश, धणु-धनूंषि, रदणी-रत्नयः हस्ताः, अंगुला चेव-अंगुलानि चैव, यथासंख्येन संबंधः। द्वितीयायां पृथिव्यामेकादशे प्रस्तारे नारकाणामुत्सेधः पंचदश धनूंषि द्वौ हस्तौ द्वादशांगुलानि। अत्रापि मुखभूमिविशेषं कृत्वोत्सेधे हृते इच्छागुणितं मुखसहितं च सर्वप्रस्ताराणां प्रमाणं वक्तव्यं। तद्यथा। अत्रैकादशप्रस्ताराणि भवंति—तत्र प्रथमप्रस्तारे सूरसूरकनाम्नि नारकाणामुत्सेधोऽष्टौ धनूंषि हस्तद्वयं द्वावेकादशभागावंगुलद्वयं च। द्वितीयप्रस्तारे स्तनकनाम्नि नारकोत्सेधो नव दंडा द्वाविंशत्यंगुलानि चतुरेकादशभागाः। तृतीयप्रस्तारे मनकनामधेये नव धनूंषि त्रयो हस्ता अष्टादशांगुलानि षडेकादशभागानि चोत्सेधः। चतुर्थप्रस्तारे नवकसंज्ञके नारकोत्सेधः दश दंडा द्वौ हस्तौ चतुर्दशांगुलानि साष्टैकादशभागानि। पंचमप्रस्तारे घाटनामके एकादशदंडा हस्तश्चैकादशांगुलानि दशैकादशभागाश्च शरीरोत्सेधः। षष्ठप्रस्तारे संघाटसंज्ञके नारकशरीरोत्सेधो द्वादश दंडाः सप्तांगुलानि तथैकादशभागाश्च-सप्तमप्रस्तारे जिह्वाख्ये द्वादश दंडा हस्तत्रयं त्रीण्यंगुलानि त्रय एकादशभागाश्चोत्सेधः। अष्टमप्रस्तारे जिह्विकाख्ये नारकोत्सेधस्त्रयोदश दंडा एको हस्तस्त्रयोविंशत्यंगुलानि पंचैकादश भागाश्च। नवमप्रस्तारे लोलाख्ये नारकोत्सेधश्चतुर्दश दंडा एकोनविंशतिरंगुलानां सप्तैकादशभागाश्च। दशमप्रस्तारे लोलुपाख्ये नारकोत्सेधश्चतुर्दश धनूंषि त्रयो हस्ताः पंचदशांगुलानि नवैकादश भागाश्च। एकादशप्रस्तारे स्तनलोलुपनामधेये नारकशरीरोत्सेधः पंचदश दंडा द्वौ हस्तौ द्वादशांगुलानि चेति॥ १५॥

तृतीयायां वालुकाप्रभायां नारकोत्सेधं व्याविवर्णयन्नाह;—

**तदियाए पुढवीए णेरइयाणं तु होइ उस्सेहो ।**
**एकत्तीसं च धणू एगा रदणी मुणेयव्वा ॥ १६ ॥**

**तृतीयायां पृथिव्यां नारकाणां तु भवत्युत्सेधः ।**
**एकत्रिंशच्च धनूंषि एका रत्निर्मन्तव्या ॥ १६ ॥**

**टीका**—तदियाए–तृतीयायां, पुढवीए–पृथिव्यां वालुकाख्यायां, णेर-इयाणं–नारकाणां, तु–विशेषः होइ–भवति, उस्सेहो–उत्सेधः, एकत्तीसं च–एकत्रिंशच्च एकेनाधिका त्रिंशत्, धणु–धनूंषि, एगा–एका, रदणी–रत्निर्हस्तः मुणेयव्वा–ज्ञातव्या । तृतीयायां पृथिव्यां नवमप्रस्तारे नारकाणामुत्सेधो धनुषामेकत्रिंशदेका रत्निश्च ज्ञातव्या इति । शेषं सूचितं नारकप्रमाण-मत्रापि मुखभूमिविशेषं कृत्वा नवोत्सेधभजितामिच्छया गुणितं द्वितीयपृथि-व्युत्कृष्टनारकोत्सेधमुखसाहितं च कृत्वा नेयं । तद्यथा—प्रथमप्रस्तारे तप्ताख्ये नारकोत्सेधः सप्त दंडा एको हस्तो दशांगुलानि द्वौ त्रिभागौ च । द्वितीयप्रस्तारे तापनामनि नारकोत्सेधो दंडानामेकोनविंशतिर्नवां-गुलानि त्रिभागश्च । तृतीयप्रस्तारे तपननाम्नि नारकोत्सेधो विंशतिर्दण्डास्त्रयो हस्ता अंगुलानि चाष्टौ । चतुर्थप्रस्तारे तापनाख्ये शरीरो-त्सेधो द्वाविंशतिर्धनुषां द्वौ हस्तौ षडंगुलानि द्वौ त्रिभागौ च । पंचमप्रस्तारे निदाघाख्ये चतुर्विंशतिचापाः पंचांगुलानि एको हस्तस्त्रिभागश्चैकः । षष्ठ-प्रस्तारे प्रज्वलिताख्ये नारकोत्सेधः षड्विंशतिर्धनुषां चत्वारि चांगुलानि । सप्तमेंद्रके ज्वलितसंज्ञके नारकोत्सेधः सप्तविंशतिचापास्त्रयो हस्ता द्वे अंगुले त्रिभागौ च द्वौ । अष्टमप्रस्तारे संज्वलनेंद्रके एकोनत्रिंशदुत्सेधो धनुषां हस्तद्वयमेकांगुलमेकस्त्रिभागश्च । नवमे च प्रस्तारे एकत्रिंशत्कोदंडा हस्तश्चैको नारकोत्सेध इति ॥ १६ ॥

चतुर्थ्यां च पृथिव्यां नारकशरीरप्रमाणमाह;—

**चउथीए पुढवीए णेरइयाणं तु होइ उस्सेहो।**
**बासट्ठी चेव धणू वे रदणी होंति णायव्वा ॥ १७ ॥**

**चतुर्थ्यां पृथिव्यां नारकाणां तु भवत्युत्सेधः।**
**द्वाषष्टिः चैव धनूंषि द्वे रत्नी भवतो ज्ञातव्ये ॥ १७ ॥**

**टीका**—चउथीए—चतुर्णां पूरणी चतुर्थी तस्यां चतुर्थ्यां, पुढवीए—पृथिव्यां पंकप्रभायां, नारकाणामुत्सेधो भवति द्वाभ्यामधिका षष्टिर्धनुषां द्वे च रत्नी द्वौ च हस्तौ ज्ञातव्यौ। चतुर्थपृथिव्यां सप्तमप्रस्तारेंद्रके नारकोत्सेधप्रमाणमेतत् सेंद्रका नारकोत्सेधस्तृतीयपृथिवीनारकाणामुत्कृष्टशरीरप्रमाणं मुखं कृत्वा सप्तमोत्सेधः सप्तमप्रस्तारनारकोत्सेधं भूमिं च कृत्वा तयोर्विशेषं चोत्सेधभाजितेच्छागुणितं मुखसहितं कृत्वा वाच्यस्तद्यथा—प्रथमप्रस्तारे आरसंज्ञकेंद्रके पंचत्रिंशद्धनुषां द्वौ हस्तौ विंशतिरंगुलानां सप्तभागाश्चत्वारः। द्वितीयप्रस्तारे ताराख्येंद्रके चत्वारिंशद्दंडाः सप्तदशांगुलानि सप्तभागाश्च पंच। तृतीयप्रस्तारे मारसंज्ञके चतुश्चत्वारिंशद्दंडाः द्वौ हस्तौ त्रयोदशांगुलानि सप्तभागाश्च पंच। चतुर्थप्रस्तारे वर्चस्काख्ये नारकोत्सेध एकोनपंचाशद्धनुषां दशांगुलानि द्वौ च सप्तभागौ। पंचमप्रस्तारे तमकनामधेये धनुषां त्रिपंचाशत् द्वौ च हस्तौ षडंगुलानि षट् सप्तभागाः। षष्ठप्रस्तारे षडनामधेये नारकोत्सेधो धनुषामष्टापंचाशत् त्रीण्यंगुलानि त्रयश्च सप्तभागाः। सप्तमप्रस्तारे षडषडाख्येंद्रके नारकोत्सेधश्चोक्तो द्वाषष्टिर्धनुषां हस्तौ च द्वाविति ॥ १७ ॥

पंचमपृथिव्यां नारकोत्सेधं प्रकटयन्नाह;—

**पंचमिए पुढवीए णेरइयाणं तु होइ उस्सेहो।**
**सदमेगं पणवीसं धणुप्पमाणेण णादव्वं ॥ १८ ॥**

**पंचम्यां पृथिव्यां नारकाणां तु भवत्युत्सेधः।**
**शतमेकं पंचविंशतिः धनुःप्रमाणेन ज्ञातव्यं ॥ १८ ॥**

**टीका**—पंचमायां पृथिव्यां धूमप्रभानामधेयायां नारकाणामुत्सेधो भवति, सदं—शतमेकं, पणवीसं च—पंचविंशत्यधिकं, धणुप्पमाणेण—धनुःप्रमाणेन ज्ञातव्यं । पंचमायां पृथिव्यां पंचमेंद्रके नारकाणामुत्सेधो धनुषां प्रमाणेन शतमेकं पंचविंशत्युत्तरं ज्ञातव्यमिति । अत्राप्येतद्भूमिं पूर्वोक्तं मुखं च कृत्वा विशेषं च कृत्वा विशेषं च पंचकोत्सेधभाजितमिच्छया गुणितं मुखसहितं कृत्वा शेषेंद्रकाणां नारकाणामुत्सेधो वाच्यः । तत्र प्रथमप्रस्तारे तमोनाम्नि नारकोत्सेधः पंचसप्ततिदंडाः । द्वितीयप्रस्तारे भ्रमनामके नारकोत्सेधः सप्ताशीतिदंडाद्वौ हस्तौ च । तृतीयप्रस्तारे रूपसंज्ञके चेंद्रके नारकोत्सेधो धनुषां शतमेकं । चतुर्थप्रस्तारेऽन्वयसंज्ञके नारकोत्सेधो धनुषां द्वादशोत्तरं शतं हस्तद्वयं च । पंचमप्रस्तारे तमिस्रसंज्ञके धनुषां पंचविंशत्युत्तरशतमिति ॥ १८ ॥

षष्ठ्यां पृथिव्यां नारकोत्सेधमाह;—

**छट्ठीए पुढवीए णेरइयाणं तु होइ उस्सेहो ।**
**दोण्णि सदा पण्णासा धणुप्पमाणेण विण्णेया ॥ १९ ॥**

**षष्ठ्यां पृथिव्यां नारकाणां तु भवत्युत्सेधः ।**
**द्वे शते पंचाशत् धनुः प्रमाणेन विज्ञेये ॥ १९ ॥**

**टीका**—छट्ठीए—षण्णां पूरणी षष्ठी तस्यां, पुढवीए—पृथिव्यां, णेरइयाणं तु—नारकाणां तु, होदि—भवति, उस्सेहो—उत्सेधः, दोण्णि सदा—द्वे शते धनुषां शतद्वयं, पण्णासा—पंचाशदधिकं, धणुप्पमाणेण—धनुषां प्रमाणेन, विण्णेया—विज्ञेये। षष्ठ्यां पृथिव्यां तमःप्रभायां तृतीयप्रस्तारे नारकाणामुत्सेधो धनुषां प्रमाणेन द्वे शते पंचाशदधिके विज्ञेये। अत्रापि मुखभूमिविशेषादिक्रमं कृत्वा शेषेंद्रकनारकाणामुत्सेध आनेयस्तद्यथा तमःप्रभायां प्रथमप्रस्तारे हिमनाम्नीन्द्रके नारकाणामुत्सेधः षट्षष्ट्याधिकं धनुषां शतं द्वौ हस्तौ षोडशांगुलानि च । द्वितीये प्रस्तारे वर्दलनाम्नीन्द्रके धनुषां शतद्वयमष्टाधिकं

हस्तश्चैकोऽष्टावंगुलान्यपि । तृतीयप्रस्तारे लल्लकनामेंद्रके नारकोत्सेधः सूत्रो-पात्तधनुषां शतद्वयं पंचाशदधिकं विज्ञेयमिति ॥ १९ ॥

सप्तम्यां पृथिव्यां नारकोत्सेधप्रमाणमाह;—

**सत्तमिए पुढवीए णेरइयाणं तु होइ उस्सेहो ।**
**पंचेव धणुसयाइं पमाणदो चेव बोधव्वा ॥ २० ॥**

**सप्तम्यां पृथिव्यां नारकाणां तु भवति उत्सेधः ।**
**पंचैव धनुःशतानि प्रमाणतश्चैव बोद्धव्यानि ॥ २० ॥**

**टीका**—सत्तमिए–सप्तम्यां, पुढवीए–पृथिव्यां महातमःप्रभायां, णेर-इयाणं तु–नारकाणां तु, होइ–उत्सेहो भवत्युत्सेधः, पंचेव धणुसयाइं–पंचैव धनुःशतानि, पमाणदो चेव–प्रमाणतश्चैव नान्यत्, बोधव्वा–बोद्धव्यानि । सप्तम्यां महातमप्रभायामवधिस्थानकेंद्रकनामनि नारकाणामुत्सेधः प्रमाणतः पंचैव धनुःशतानि नाधिकानीति । एवं सर्वासु पृथिवीषु स्वकीयेंद्रकप्रतिबद्धेषु श्रेणिविश्रेणिबद्धेषु पुष्पप्रकीर्णकेषु च नारकाणामुत्सेधः स्वकीयेंद्रकनारकोत्सेधसमानो वेदितव्यः । प्रथमायां पृथिव्यां प्रथमप्रस्तारे सीमंतकेंद्रकनाम्नि महादिक्षु श्रेणीबद्धनरकाण्येकोनपंचाशदेकोनपंचाशदिति । विदिक्षु चाष्टचत्वारिंशदष्टचत्वारिंशदिति । एवमष्टावष्टौ हानिं कृत्वा तावन्नेतव्यं यावदवधिस्थानस्य चत्वारि दिक्षु श्रेणिबद्धानीति । प्रथमायां पृथिव्यां त्रिंशल्लक्षाणि नारकाणां तान्येव श्रेणिबद्धेंन्द्रकरहितानि पुष्पप्रकीर्णकानि । द्वितीयायां पंचविंशतिलक्षा नारकाणां तान्येव श्रेणिबद्धेंद्रकरहितानि पुष्पप्रकीर्णकानि । तृतीयायां पंचदशलक्षा नारकाणां । चतुर्थ्यां दशलक्षा नारकाणां । पंचम्यां लक्षत्रयं नारकाणां । षष्ठ्यां पंचोनं लक्षं नारकाणां । सप्तम्यां पंचैव नारकाणि । सर्वत्र श्रेणिबद्धेंद्रकरहितपुष्पप्रकीर्णकानीति प्रमाणं व्यावर्णितं देहोऽपि व्यावर्णितस्तद्व्यतिरेकाद्गुणगुण्यभेदेन ततो न दोषो देहस्वरूपमकथित्वा प्रमाणस्य कथने ।

नारकाणां शरीरं बीभत्सं दुर्गंधि वैक्रियकं सर्वाशुभपुद्गलैर्निष्पन्नं सर्वदुःख-कारणं हुंडकसंस्थानमशुभनाम दुःस्वरवदनं कृमिकुलादिसंकीर्णमिति ॥२०॥

देवानां शरीरं व्यावर्णितं न तत्प्रमाणमतस्तदर्थमाह;—

**पणवीसं असुराणं सेसकुमाराण दस धणू चेव ।**
**विंतरजोइसियाणं दस सत्त धणू मुणेयव्वा ॥ २१ ॥**

**पंचविंशतिरसुराणां शेषकुमाराणां दश धनूंषि चैव ।**
**व्यंतरज्योतिष्काणां दश सप्त धनूंषि ज्ञातव्यानि ॥ २१ ॥**

**टीका**—भवनवासिव्यंतरज्योतिष्ककल्पवासिभेदेन देवाश्चतुर्विधा भवंति। तत्र भवनवासिनां तावत्प्रमाणं व्यावर्णयति—पणवीसं—पंचभिरधिका विंशतिः पंचविंशतिः, असुराणं—असुरकुमाराणां, सेसकुमाराण—शेषकुमाराणां नाग-विद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमाराणां, दस धणू—दश दंडाः । चशब्दः समुच्चयार्थस्तेन सामानिकत्रायस्त्रिंशत्पारिषदात्मरक्षलोकपालानी-कप्रकीर्णकाभियोग्यकिल्विषिकानामेतदेव प्रमाणं शरीरस्य वेदितव्यं । व्यंतराः किंनरकिंपुरुषगरुडगंधर्वयक्षराक्षसभूतापिशाचाः, जोदिसिया—ज्यो-तिष्काः सूर्याचन्द्रमसौ ग्रहनक्षत्रप्रकीर्णकतारकाश्च, व्यंतराश्च ज्योतिष्काश्च व्यंतरज्योतिष्कास्तेषां व्यंतरज्योतिष्काणां, दस सत्त धणू—दश सप्त धनूंषि यथासंख्येन व्यंतराणां दश धनूंषि ज्योतिष्काणां च सप्त धनूंषि सामानिक-त्रायस्त्रिंशल्लोकपालवर्जितशेषनिकायानां च शरीरस्योत्सेधो ज्ञातव्य इति । भवनवासिनो दशप्रकारा भवंति—तत्र प्रकारस्यासुरकुमारसंज्ञकस्य सामा-निकादिसहितस्य शरीरोत्सेधः पंचविंशतिर्धनुषामुत्कृष्टः, नागकुमाराणां विद्युत्कुमाराणां सुपर्णकुमाराणामग्निकुमाराणां वातकुमाराणां स्तनितकुमारा-णामुदधिकुमाराणां द्वीपकुमाराणां दिक्कुमाराणां सामानिकादिभेदभिन्नानां च दश दंडाः शरीरस्योत्सेधः । व्यंतराणामष्टप्रकाराणां स्वभेदभिन्नानां दश धनूंषि शरीरस्योत्सेधः । ज्योतिष्काणां च पंचप्रकाराणां स्वभेदभि-न्नानां सप्त दंडाः शरीरस्योत्सेधो ज्ञातव्य इति ॥ २१ ॥

एते तिर्यग्लोके व्यवस्थितातारतद्द्वारेणैव तिरश्चां च वक्ष्यमाणत्वादुल्लंघ्य प्रमाणं मनुष्याणां तावदुत्कृष्टं प्रमाणमाह;—

**छद्धणुसहस्सुस्सेधं चदु दुगमिच्छंति भोगभूमीसु।**
**पणवीसं पंचसदा बोधव्वा कम्मभूमीसु॥ २२॥**

**षट्धनुःसहस्रोत्सेधं चत्वारि द्वे इच्छंति भोगभूमिषु।**
**पंचविंशतिः पंचशतानि बोद्धव्यानि कर्मभूमिषु॥ २२॥**

**टीका**—छद्धणुसहस्स—षट् धनुषां सहस्राणि, उस्सेधं—उत्सेधं शरीरप्रमाणं, चदु—चत्वारि सहस्राणि धनुषां, दुगं—द्वे सहस्रे धनुषां, इच्छंति—अभ्युपगच्छंतिः, पूर्वाचार्या भोगभूमिषु दशप्रकारकल्पपादपोपलक्षितासु। पणवीसं—पंचविंशतिः, पंचसदा—पंचशतानि च धनुषां, बोधव्वा—बोद्धव्यानि ज्ञातव्यानि कर्मभूमिषु। पंचसु भरतैरावतविदेहेषु भोगभूमिषूत्कृष्टमध्यमजघन्यासु मनुष्याणामुत्सेधं यथासंख्येन षट् चत्वारि सहस्राणि द्वे च हस्ते (सहस्रे) धनुषामिच्छंति, कर्मभूमिषु च मनुष्याणामुत्कृष्टमुत्सेधं शतपंचकं पंचविंशत्याधिकमिच्छंतीति॥ २२॥

प्राधान्याद्देवानां कल्पवासिनां तावदुत्सेधमाह;—

**सोहम्मीसाणेसु य देवा खलु होंति सत्तरयणीओ।**
**छच्चेव य रयणीओ सणक्कुमारे हि माहिंदे॥२३॥**

**सौधर्मैशानयोश्च देवाः खलु भवंति सप्त रत्नयः।**
**षट् चैव च रत्नयः सनत्कुमारे हि माहेंद्रे॥ २३॥**

**टीका**—सोहम्मीसाणेसु य—सुधर्मा नाम्नी सभा तस्यां भवः सौधर्म इन्द्रस्तेन सहचरितं विमानं कल्पो वा, सौधर्मश्चैशानश्च सौधर्मैशानौ तयोः सौधर्मैशानयोः श्रेणिबद्धप्रकीर्णकसहितयोः, देवा—देवा इंद्रसामानिकत्रायस्त्रिंशत्पारिषदात्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकिल्विषिकाः, खलु—स्फुटं, सत्तरयणीओ—सप्त हस्ताः, छच्चेव—षडेव च, रयणीओ—

रत्नयो हस्ताः, सणक्कुमारे—सनत्कुमारे च, माहिंदे—माहेंद्रे। सौधर्मैशानयोः कल्पयोर्देवा इंद्रादयः शरीरप्रमाणेन सप्तहस्ता भवंति, सनत्कुमारमाहेंद्रयोश्च कल्पयोश्च देवा इंद्रादयः षट्रत्नयः प्रमाणेन भवंतीति ॥ २३ ॥

शेषकल्पेषु देवोत्सेधं प्रतिपादयन्नाह;—

**बंभे य लंतवे वि य कप्पे खलु होंति पंच रयणीओ ।**
**चत्तारि य रदणीओ सुक्कसहस्सारकप्पेसु ॥ २४ ॥**

**ब्रह्मे च लांतवेऽपि च कल्पे खलु भवंति पंचरत्नयः ।**
**चतस्रश्च रत्नयः शुक्रसहस्रारकल्पेषु ॥ २४ ॥**

**टीका**—बह्मे—ब्रह्मकल्पे, लंतवे वि य—लांतवकल्पे, कल्पशब्दः प्रत्येकमभिसंबध्यते । खलु—स्फुटं व्यक्तं सर्वमेतत्, होंति—भवंति—पंच रयणीओ—पंच रत्नयः । दनाद्व्यनुवर्त्ततो (?) तेन सह संबंधः सर्वत्र द्रष्टव्यः । चत्तारि य—चतस्रश्च रदणीओ—रत्नयो हस्ताः, सुक्क—शुक्रकल्पे, सहस्सार—सहस्रारकल्पे, अत्रापि कल्पशब्दः प्रत्येकमभिसंबध्यते । उपलक्षणमात्रमेतत्तेनान्येषामपि ब्रह्मोत्तरकापिष्ठमहाशुक्रशतारसहस्रारकल्पानां ग्रहणं द्रष्टव्यं । श्रेणिबद्धप्रकीर्णकानां च । बह्मब्रह्मोत्तरलांतवकापिष्ठेषु च चतुर्षु कल्पेषु देवा इंद्रादयः पंचहस्ताः प्रमाणेन भवंति, तथा शुक्रमहाशुक्रशतारसहस्रारेषु च चतुर्षु कल्पेषु देवा इंद्रसामानिकादयश्च चत्वारो हस्ताः शरीरप्रमाणेन भवंतीति ॥ २४ ॥

आनतादिदेवप्रमाणमाह;—

**आणदपाणदकप्पे अद्धुद्धाओ हवंति रयणीओ ।**
**तिण्णेव य रयणीओ बोधव्वा आरणच्चुदे चापि ॥२५॥**

**आनतप्राणतकल्पयोरर्द्धाधिका भवंति रत्नयः ।**
**तिस्र एव च रत्नयः बोद्धव्या आरणाच्युतयोश्चापि ॥ २५ ॥**

**टीका**—आणद—आनतकल्पे, पाणद—प्राणतकल्पे, कल्पशब्दः प्रत्येकमभिसंबध्यते, अद्धुद्धाओ—अर्द्धाधिकास्तिस्रो रत्नयस्त्रयो हस्ता हस्तार्द्धं च, हवंति—भवंति, रयणीओ रत्नयः । तिण्णेव—तिस्रश्च, रयणीओ—रत्नयः, बोद्धव्या ज्ञातव्याः, आरणच्चुदे चावि—आरणाच्युतयोरपि आरणकल्पेऽच्युतकल्पे च आनतप्राणतकल्पयोर्देवा इंद्रादयस्त्रयो हस्ता अर्द्धाधिकाः शरीरप्रमाणेन बोद्धव्याः, आरणाच्युतकल्पयोश्च देवा इंद्रादयस्त्रयो हस्ताः शरीरप्रमाणेन बोद्धव्या इति ॥ २५ ॥

नवग्रैवेयकदेवशरीरं प्रतिपादयन्नाह;—

**हेट्ठिमगेवज्जेसु य अड्ढाइज्जा हवंति रयणीओ ।**
**मज्झिमगेवज्जेसु य वे रयणी होंति उस्सेहो ॥ २६ ॥**

**अधस्तनग्रैवेयकेषु च सार्धद्वयं भवंति रत्नयः ।**
**मध्यमग्रैवेयकेषु च द्वे रत्नी भवतः उत्सेधः ॥ २६ ॥**

**टीका**—हेट्ठिमगेवज्जेसु य—अधोग्रैवेयकेषु अधो व्यवस्थिता वै ये त्रयो ग्रैवेयककल्पास्तेषु, अड्ढाइज्जा—अर्द्धाधिकं रत्निद्वयं तृतीयार्द्धसाहिते रत्नी वा भवतः, मज्झिमगेवज्जेसु य—मध्यमग्रैवेयकेषु च मध्यमप्रदेशस्थितेषु त्रिषु ग्रैवेयकेषु, वे रदणी—द्वे रत्नी द्वौ हस्तौ, हवंति—भवतः, उस्सेहो—उत्सेधः शरीरप्रमाणं । नव ग्रैवेयककल्पा भवंति तत्राधोध एकः कल्पः अधोमध्यमो द्वितीयः कल्पः अधउपरि तृतीयः कल्पस्तेषु कल्पेषु त्रिषु देवा अहमिंद्रा अर्द्धाधिकौ द्वौ हस्तौ प्रमाणेन भवंति, तथाऽधोमध्यमः कल्प एकः मध्यमध्यमकल्पो द्वितीयः मध्यमोपरि कल्पस्तृतीय एतेषु त्रिषु कल्पेषु देवा अहमिंद्रा द्विहस्तोत्सेधा भवंतीति ॥ २६ ॥

उपरिमग्रैवेयकदेवशरीरोत्सेधमनुत्तरदेवोत्सेधं चाह,—

**उवरिमगेवज्जेसु य दिवड्ढरयणी हवे[1] य उस्सेहो ।**
**अणुदिसणुत्तरदेवा एया रयणी सरीराणि ॥ २७ ॥**

---

१ भवेय ग—पुस्तके।

**उपरिमग्रैवेयकेषु च द्व्यर्धरत्निर्भवेत् च उत्सेधः ।**
**अनुदिशानुत्तरदेवा एकरत्निशरीराः ॥ २७ ॥**

**टीका**—उवरिमगेवज्जेसु य—उपरिमग्रैवेयकेषूपरिप्रदेशव्यवस्थितेषु त्रिषु ग्रैवेयककल्पेषु, दिवड्ढरयणी—अर्द्धाधिकरत्निः हस्तोपरं च हस्तार्द्धं, हवे य—भवेत्, उस्सेहो—उत्सेधः । उपर्यध एकः कल्पः, उपरिममध्यमो द्वितीयः कल्पः, उपर्युपरि तृतीयः कल्पः, एतेषु त्रिषु ग्रैवेयककल्पेषु देवानां शरीरोत्सेध एको हस्तो हस्तार्द्धं च । यद्यपि सविकल्पा विद्यंतेऽत आगमतस्ते ज्ञातव्या इति । अणुदिस—अनुदिशकल्पे नवसु विमानेषु, अणुत्तर-अनुत्तरकल्पे च पंचसु विमानेषु देवा अहमिंद्राः, एगा रयणी सरीराणि—एकरत्निशरीरा एकहस्तदेहप्रमाणाः, अनुदिशानुत्तरकल्पयोश्चतुर्दशविमानेषु देवा एकहस्तशरीरोत्सेधा भवंतीति ॥ २७ ॥

देवमनुष्यनारकाणां प्रमाणपूर्वकदेहस्वरूपं प्रतिपाद्य तिरश्चामेकेन्द्रियादिपंचेंद्रियपर्यन्तानां शरीरोत्सेधद्वारेण जघन्यदेहमाह;—

**भागमसंखेज्जदिमं जं देहं अंगुलस्स तं देहं ।**
**एइंदियादिपंचेंदियंतदेहं पमाणेण ॥ २८ ॥**

**भागोऽसंख्यातकः यो देहोऽगुलस्य स देहः ।**
**एकेंद्रियादिपंचेंद्रियांतदेहः प्रमाणेन ॥ २८ ॥**

**टीका**—भागं—भागः, असंखेज्जदिमं—असंख्यातः, जं देहं—य उपचयो यावत्पिंडोः यत्परिमाणोऽगुलस्य द्रव्यांगुलस्य, तं देहं—स उपचयस्तावान्पिडस्तत्परिमाणः । एइंदियादि—एकेन्द्रिय आदिर्येषां ते एकेन्द्रियादयः, पंचेदियंत—पंचेन्द्रियोंते येषां ते पंचेद्रियांताः । एकेन्द्रियादयश्च ते पंचेद्रियांताश्चैकेन्द्रियादिपंचेन्द्रियांतास्तेषां देहः शरीरमेकेन्द्रियादिपंचेंन्द्रियांतदेहः, एकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपंचेंद्रियाणां शरीरं, जहण्णेण—द्रव्यांगुलमसंख्यातखंडं कृत्वा तत्रैकखंडोपचयो यावान् देहो यन्मात्रस्तन्मात्रो देहः शरीरं जघन्येनैकेन्द्रियादिपंचेन्द्रियपर्यंतानामिति ॥ २८ ॥

तेषामेवोत्कृष्टप्रमाणं प्रतिपादयन्नाह;—

**साहियसहस्समेयं तु जोयणाणं हवेज्ज उक्कस्सं ।**
**एयंदियस्स देहं तं पुण पउमत्ति णादव्वं ॥ २९ ॥**

**साधिकसहस्रमेकं तु योजनानां भवेत् उत्कृष्टः ।**
**एकेंद्रियस्य देहः स पुनः पद्ममिति ज्ञातव्यं ॥ २९ ॥**

टीका—साहिय—सहाधिकेन वर्त्तत इति साधिकं सक्रोशद्वयं, सहस्समेयं तु—सहस्रमेकं तु एकं एकसहस्रं, जोयणाणं—योजनानां, हवेज्ज—भवेत्, उक्कस्सं—उत्कृष्टः । एइंदियस्स—एकेन्द्रियस्य, देहं—देहः शरीरं, तं पुण—स पुनः, पउमत्ति णायव्वं—पद्ममिति ज्ञातव्यं । तेन पृथिवीकायादिवायुकायांतानां त्रसानां चैतावन्मात्रस्य देहस्य निराकरणं द्रष्टव्यं । योजनानां सहस्रमेकं साधिकं च तन्मात्र एकेन्द्रियस्य देहः स पुनर्देहो वनस्पतिसंज्ञकस्य पद्मस्य ज्ञातव्यः । प्रमाणप्रमाणवतोरभेदं कृत्वा निर्देश इति ॥ २९ ॥

द्वीन्द्रियादीनामुत्कृष्टदेहप्रमाणमाह;—

**संखो पुण वारसजोयणाणि गोभी भवे तिकोसं तु ।**
**भमरो जोयणमेत्तं मच्छो पुण जोयणसहस्सं ॥ ३० ॥**

**शंखः पुनर्द्वादशयोजनानि गोभी भवेत् त्रिकोशं तु ।**
**भ्रमरो योजनमात्रः मत्स्यः पुनर्योजनसहस्रः ॥ ३० ॥**

टीका—संखो पुण—शंखः पुनर्द्वीन्द्रियः, वारसजोयणाणि—द्वादशयोजनानि द्वादशयोजनो वा, गोभी—गोपालिका खर्जूरको वा, भवे—भवेत्, तिकोसं तु—त्रिकोशं तु त्रिकोशमात्रस्त्रीन्द्रियः, भमरो—भ्रमरो मधुकरश्चतुरिन्द्रियः, जोयणमेत्तं—योजनमात्रं गव्यूतिचतुष्टयमात्रः, मच्छो—मत्स्यः, पुण-पुनः, जोयणसहस्सं—योजनसहस्रः । द्वीन्द्रियाणां मध्ये उत्कृष्टदेहः शंखः

---

१ वनस्पति कायस्य पद्मसंज्ञकस्य ग. । २ प्रमाणः ग. ।

स च द्वादशयोजनमात्रः, त्रीन्द्रियाणां मध्ये उत्कृष्टदेहो गोभी सा च क्रोशत्रयपरिमिता, चतुरिन्द्रियाणां मध्ये उत्कृष्टदेहो भ्रमरः स च योजनप्रमाणः, पंचेन्द्रियाणां मध्ये उत्कृष्टदेहो मत्स्यः स च योजनसहस्रायाम इति ॥ ३० ॥

प्रमाणमपि प्रमाणसूत्रेण गृहीतं यतोऽतो जंबूद्वीपस्यापि परिधिप्रमाणमाह;—

**जंबूदीवपरिहिओ तिण्णिव लक्खं च सोलहसहस्सं**
**बे चेव जोयणसया सत्तावीसा य होंति बोधव्वा ॥३१॥**

**तिण्णेव गाउआइं अट्ठावीसं च धणुसयं भणियं ।**
**तेरस य अंगुलाइं अद्धंगुलमेव सविसेसं ॥ ३२ ॥**

जंबूद्वीपपरिधिः त्रीण्येव लक्षाणि च षोडशसहस्राणि ।
द्वे चैव योजनशते सप्तविंशतिश्च भवंति बोद्धव्यानि ॥ ३१ ॥
त्रीण्येव गव्यूतानि अष्टाविंशतिश्च धनुःशतं भणितं ।
त्रयोदश चांगुलानि अर्धांगुलमेव सविशेषं ॥ ३२ ॥

टीका—जंबूद्वीपो योजनलक्षविष्कंभ एतावत्परिधिप्रमाणस्यान्यथानुपपत्तेस्तस्य च ग्रहणं बहुप्रमाणविकल्पसंग्रहणं जंबूद्वीपप्रमाणग्रहणं च स्वयंभूरमणद्वीपसमुद्रायामप्रमाणज्ञापनार्थं तयोश्च प्रमाणकथनमुत्कृष्टदेहप्रमाणैकेन्द्रियाद्यवस्थानज्ञापनार्थमित्यतो योजनलक्षं जंबूद्वीपविष्कंभवर्गं दशगुणं कृत्वा वर्गमूलं च गृहीत्वैव पठति;—जंबूदीवपरिहिओ—जंबूवृक्षोपलक्षितो द्वीपो जम्बूद्वीपोऽसंख्यातद्वीपसमुद्राणां मध्यनाभिरिव तदायत्तं सर्वेषां विष्कंभायामपरिधिप्रमाणं, परिहिओ—परिधिः परिक्षेपो जंबूद्वीपस्य परिधिर्जंबूद्वीपपरिधिः, तिण्णेव लक्खं—त्रीण्येव लक्षाणि, सोलहसहस्सं—षोडशसहस्राणि, वे चेव जोयणसया—द्वे चैव योजनानां शते, सत्तावीसा

१त्रयायामा ग. ।

य—सप्तविंशतिश्च योजनानां सर्वत्र संबंधः, होंति—भवंति, बोधव्वा-बोद्धव्यानि । जंबूद्वीपस्य परिधेः, प्रमाणं योजनानां त्रीणि लक्षाणि षोडशसहस्राणि, योजनानां द्वे च शते योजनानां सप्तविंशतिश्च । अथवा भेदेन निर्देशो जंबूद्वीपपरिधिः योजनानां त्रीणि लक्षाणि षोडशसहस्राणि द्वे शते सप्तविंशतिश्चेति । तथा तिण्णेव—त्रीण्येव, गाउआइं—गव्यूतानि क्रोशाः, अट्ठावीसं च—अष्टाविंशतिश्च, धणु—धनुषां, सदं—शतं, भणियं—भणितं, तेरस य—त्रयोदशानि च, अंगुलाइं—अंगुलानि च, अद्धंगुलमेव—अर्धांगुलमेव च, सविसेसं—सविशेषो यवः सातिरेकः किंचिदेव तेन विशेषेण सह वर्त्तत इति सविशेषमर्द्धांगुलेन संबंधः । त्रीणि गव्यूतानि धनुषां शतमष्टाविंशत्याधिकं त्रयोदशानि चांगुलानि सविशेषमर्द्धांगुलं चेति ॥ ३१॥३२ ॥

जंबूद्वीपमादिं कृत्वा कियतां द्वीपानां नामान्याह;—

**जंबूदीवो धादइसंडो पुक्खरवरो य तह दीवो ।**
**वारुणिवर खीरवरो य घिदवरो खोदवरदीवो ॥ ३३ ॥**

**णंदीसरो य अरुणो अरुणब्भासो य कुंडलवरो य ।**
**संखवर रुजग भुजगवर कुसवर कुंचवरदीवो ॥ ३४ ॥**

जंबूद्वीपोऽ धातकीखंडः पुष्करवरश्च तथा द्वीपः ।
वारुणीवरः क्षीरवरश्च घृतवरः क्षौद्रवरद्वीपः ॥ ३३ ॥
नंदीश्वरश्चारुणोऽरुणभासश्च कुंडलवरश्च ।
शंखवरो रुचको भुजगवरो कुशवरो क्रौंचवरद्वीपः ॥ ३४ ॥

टीका—जंबूदीवो—जंबूद्वीपः प्रथमो द्वीपः, धादइसंडो—धातकीखंडो द्वितीयो द्वीपः, पुक्खरवरो—पुष्करवरस्तृतीयो द्वीपः, तह—तथा, दीवो द्वीपः, वारुणिवर—वारुणीवरश्चतुर्थो द्वीपः, खीरवरो—क्षीरवरः पंचमो

द्वीपः, घिदवरो—घृतवरः षष्ठो द्वीपः, खोदवरो—क्षौद्रवरः सप्तमो द्वीपः, नंदीसरो य—नंदीश्वरश्चाष्टमो द्वीपः, अरुणो—अरुणाख्यो नवमो द्वीपः, अरुणभासो य—अरुणभासश्च दशमो द्वीपः, कुंडलवरो य—कुंडलवरश्चैकादशो द्वीपः, संखवर—शंखवरो द्वादशो द्वीपः, रुजग—रुचकस्त्रयोदशो द्वीपः, भुजगवरो—भुजगवरश्चतुर्दशो द्वीपः, कुसवरो—कुशवरः पंचदशो द्वीपः, कुंचवरदीवो—क्रौंचवरद्वीपश्च षोडश इति ॥ ३३॥३४ ॥

एवं नामानि गृहीत्वा विष्कंभप्रमाणमाह;—

**एवं दीवसमुद्दा दुगुणदुगुणवित्थडा असंखेज्जा ।**
**एदे दु तिरियलोए सयंभुरमणोदहिं जाव ॥ ३५ ॥**

**एवं द्वीपसमुद्रा द्विगुणद्विगुणविस्तारा असंख्याताः ।**
**एते तु तिर्यग्लोके स्वयंभूरमणोदधिर्यावत् ॥ ३५ ॥**

**टीका**—एवं अनेन प्रकारेण, दीवसमुद्दा—द्वीपसमुद्राः, दुगुणदुगुणवित्थडा—द्विगुणो द्विगुणो विस्तारो येषां ते द्विगुणद्विगुणविस्ताराः, कियंतः? असंखेज्जा—असंख्याताः संख्य[1]प्रमितिक्रांताः । जंबूद्वीपविष्कंभाल्लवणसमुद्रो द्विगुणविष्कंभो लवणसमुद्राच्च धातकीखंडद्वीपो द्विगुणविष्कंभः । अनेन प्रकारेण द्वीपात्समुद्रो द्विगुणविस्तारः समुद्राच्च द्वीपः । अतः सर्वे द्वीपसमुद्रा द्विगुणाद्विगुणविस्तारा असंख्याता भवंति । ननु समुद्रग्रहणं कुतो लब्धं? द्वीपग्रहणात्, तदपि कुतः? साहचर्यात्पर्वतनारदवत् । क्व व्यस्थिता इत्याशंकायामाह;—एते दु तिरियलोए—एते तु द्वीपसमुद्रास्तिर्यग्लोके रज्जुमात्रायामे, कियद्दूरं? सयंभुरमणोदहिं जाव—यावत्स्वयंभूरमणोदधिः । स्वयंभूरमणसमुद्रपर्यंता असंख्याता द्वीपसमुद्रा द्विगुणाद्विगुणविस्तारा द्रष्टव्या इति ॥ ३५ ॥

---

१ संख्यातप्रमाणमतिक्रान्ताः ग ।

असंख्याता इति तु न ज्ञायंते, कियंत इत्त्यतस्तन्निर्णयमाह;—

**जावदिया उद्धारा अड्ढाइज्जाण सागरुवमाणं।**
**तावदिया खलु रोमा हवंति दीवा समुद्दा य ॥ ३६ ॥**

**यावंत्युद्धाराणि अर्धतृतीययोः सागरोपमयोः।**
**तावंति खलु रोमाणि भवंति द्वीपाः समुद्राश्च ॥ ३६ ॥**

**टीका**—जावदिया–यावंति यन्मात्राणि, उद्धारा–उद्धाराणि उद्धारपल्योपमानि तेषु यावंति रोमाणि, अड्ढाइज्जाण–अर्द्धतृतीययोर्द्वयोरर्धाधिकयोः, सागरुवमाण—सागरोपमयोः, तावदिया—तावंतस्तन्मात्राः, खलु—स्फुटं, रोमा–उद्धारेषु रोमाणि सुकुमारोरणरोमाग्राणि, हवंति—भवंति, दीवा—द्वीपाः, समुद्दा य—समुद्राश्च। प्रमाणयोजनावगाहविष्कंभायामं कूपं कृत्वा सप्तरात्रजातमात्रोरणरोमाग्रभागैः पूर्णं च कृत्वा तत्र यावन्मात्राणि रोमाग्राणि तावन्मात्राणि वर्षशतानि गृहीत्वा तत्र यावन्मात्राः समया व्यवहारपल्योपमं नाम। व्यवहारपल्योपमे चैकैकं रोम असंख्यातवर्षकोटीसमयमात्रान् भागान् कृत्वा वर्षशतसमयैश्चैकैकं खंडं प्रगुण्य तत्र यावन्मात्राः समयाः तावन्मात्रमुद्धारपल्योपमं भवति। उद्धारपल्योपमानि च दशकोटीकोटीमात्राणि गृहीत्वैकं उद्धारसागरोपमं भवति। तावन्मात्रयोर्द्वयोः सार्द्धयोः सागरोपमयोर्यावन्मात्राण्युद्धारपल्योपमानि तत्र च यावन्मात्राणि रोमाणि तावन्मात्राः स्फुटं द्वीपसमुद्रा भवंतीति ॥ ३६ ॥

ननु द्वीपग्रहणेन च समुद्राणां ग्रहणं संजातं तत्र न ज्ञायंते किमभिधानास्त इत्याशंकायामाह;—

**जंबूदीवे लवणो धादइसंडे य कालउदधी य।**
**सेसाणं दीवाणं दीवसरिसणामया उदधी ॥ ३७ ॥**

**जंबूद्वीपे लवणः धातकीखंडे च कालोदधिश्च।**
**शेषाणां द्वीपानां द्वीपसदृशनामान उदधयः ॥ ३७ ॥**

**टीका**—जंबूदीवे—जंबूद्वीपे, लवणो—लवणसमुद्रः, धादइसंडे य—धातकीखंडे च, कालउदधी य—कालोदधिसमुद्रः, सेसाणं—शेषेषु जंबूद्वीपधातकीखंडवर्जितेषु, दीवाणं—द्वीपेषु द्विर्गता आपो येषां ते द्वीपा जलरहितमध्यप्रदेशास्तेषु द्वीपेषु, दीवसरिसणामया—द्वीपैः सदृशानि समानानि नामानि येषां ते द्वीपसदृशनामानः, उदधी—उदकानि धीयंते येषु त उदधयः समुद्राः । जंबूद्वीपे लवणसमुद्रः, धातकीखंडे च कालोदधिसमुद्रः, शेषेषु पुनर्द्वीपेषु ये समुद्रास्ते स्वकीयस्वकीयद्वीपनामसंज्ञका भवंतीति ॥ ३७ ॥

एते समुद्रा लवणोदादयः किं समानरसा[1] इत्याशंकायामाह;—

**पत्तेयरसा चत्तारि सायरा तिण्णि होंति उदयरसा ।**
**अवसेसा य समुद्दा खोद्दरसा होंति णायव्वा ॥ ३८ ।**

**प्रत्येकरसाश्चत्वारः सागरास्त्रयो भवंत्युदकरसाः ।**
**अवशेषाश्च समुद्राः क्षौद्ररसा भवंति ज्ञातव्याः ॥ ३८ ॥**

**टीका**—पत्तेयरसा—प्रत्येकः पृथक् पृथक् रसः स्वादो येषां ते प्रत्येकरसा भिन्नस्वादाः, चत्तारि—चत्वारः, सायरा—सागराः समुद्राः, तिण्णि—त्रयः, होंति—भवंति, उदयरसा—उदकरसा उदकं रसो येषां ते उदकरसाः पानीयरसपूर्णाः । अवसेसा य—अवशेषाश्चैतेभ्यो येऽन्ये, समुद्दा—समुद्राः, खोद्रसा क्षौद्ररसाः इक्षो रस इव रसो येषां त इक्षुरसा मधुररसस्वादुपानीयाः, होंति—भवंति, णायव्वा—ज्ञातव्याः । *चत्वारः समुद्राः प्रत्येकरसाः, त्रय उदकरसाः समुद्राः, शेषाः पुनः क्षौद्ररसा ज्ञातव्या भवन्तीति* ॥ ३८ ॥

के प्रत्येकरसाः के चोदकरसा इत्याशंकायामाह;—

**वारुणिवर खीरवरो घदवर लवणो य होंति पत्तेया ।**
**कालो पुक्खर उदधी सयंभुरमणो य उदयरसा ॥ ३९ ॥**

---

1 किं समानरसा नेत्याह ख, ग । *पुष्प मध्यगतः पाठः ख-ग-पुस्तकेऽधिकः ।

**वारुणीवरः क्षीरवरः घृतवरो लवणश्च भवंति प्रत्येकाः ।**
**कालः पुष्कर उदधिः स्वयंभूरमणश्चोदकरसाः ॥ ३९ ॥**

**टीका**—वारुणिवर—वारुणीवरः समुद्रो वारुणी मद्यविशेषस्तस्या रस इव रसो यस्य स वारुणीरसो वारुणीवरः, खीरवरो—क्षीरवरः क्षीरस्य रस इव रसो यस्य स क्षीररसः क्षीरवरः, घदवर—घृतवरः घृतस्य रस इव रसो यस्य स घृतरसः, लवणो य—लवणश्च लवणस्य रस इव रसो यस्य स लवणरसः लवणसमुद्रः, होंति—भवंति, पत्तेया—प्रत्येकरसाः, एते चत्वारो वारुणीवरादयः समुद्रा भिन्नरसा भवंतीति । कालो—कालः, पुक्खर—पुष्करवरः, उदधी—समुद्रौ, सयंभुरमणो य—स्वयंभूरमणश्च, उदयरसा—उदकरसा उदकं रसो येषां त उदकरसाः, कालोदधिपुष्करोदधी समुद्रौ स्वयंभूरमणश्चैते उदकरसाः । एतेभ्यः पुनरन्ये क्षौद्ररसाः समुद्रा इति ॥ ३९ ॥

अथ केषु समुद्रेषु जलचराः संति केषु च न संतीत्याशंकायामाह;—

**लवणे कालसमुद्दे सयंभुरमणे य होंति मच्छा दु ।**
**अवसेसेसु समुद्देसु णत्थि मच्छा य मयरा वा ॥ ४० ॥**

**लवणे कालसमुद्रे स्वयंभूरमणे च भवंति मत्स्यास्तु ।**
**अवशेषेषु समुद्रेषु न संति मत्स्याश्च मकरा वा ॥ ४० ॥**

**टीका**—लवणे—लवणसमुद्रे, कालसमुद्दे—कालसमुद्रे, सयंभुरमणे य—स्वयंभूरमणसमुद्रे च, होंति मच्छा—भवंति मत्स्याः, तुशब्दादन्ये जलचरा मत्स्यशब्दस्य चोपलक्षणत्वात् उत्तरत्र मकरप्रतिषेधाच्च । अवसेसेषु—अवशेषेषु एतेभ्योऽन्येषु, समुद्देसु—समुद्रेषु, णत्थि—न संति न विद्यंते, मच्छा य—मत्स्याश्च, मयरा वा—मकरा वा चशब्दादन्येऽपि जलचरा न संत्युपलक्षणमात्रत्वाद्वा प्रतिषेधस्य । लवणसमुद्रे कालोदधौ स्वयंभूरमणसमुद्रे च मत्स्या मकरा अन्ये च जलचरा द्वीन्द्रिया-

द्यः पंचेन्द्रियपर्यंताः संति, एतेभ्योऽन्येषु समुद्रेषु मत्स्या मकरा अन्ये च द्वीन्द्रियादिपंचेन्द्रियपर्यंता जलचरा न संतीति ॥ ४० ॥

अथ किंप्रमाणा जलचरा एतेष्वित्याशंकायामाह;—

**अट्ठारसजोयणिया लवणे णवजोयणा णदिमुहेसु ।**
**छत्तीसगा य कालोदहिम्मि अट्ठार णदिमुहेसु ॥ ४१ ॥**

**अष्टादशयोजना लवणे नवयोजना नदीमुखेषु ।**
**षट्त्रिंशत्काश्च कालोदधौ अष्टादश नदीमुखेषु ॥ ४१ ॥**

**टीका**—अट्ठारसजोयणिया—अष्टादशयोजनानि प्रमाणं येषां तेऽष्टादशयोजनाः, लवणे—लवणसमुद्रे, णवजोयणा—नवयोजनानि प्रमाणं येषां ते नवयोजनाः, णदिमुहेसु—नदीनां मुखानि नदीमुखानि तेषु नदीमुखेषु प्रदेशेषु गंगासिंध्वादीनां समुद्रेषु प्रवेशो नदीमुखं । छत्तीसगा य—षड्भिरधिकानि त्रिंशत् प्रमाणं येषां ते षट्त्रिंशत्काः षट्त्रिंशद्योजनप्रमाणाः, कालोदहिम्मि—कालोदधौ, अट्ठारस—अष्टादशयोजनप्रमाणा यद्यप्यत्र योजनशब्दो न श्रूयते पूर्वोक्तसमासांतर्भूतस्तथापि द्रष्टव्योऽन्यस्याश्रुतत्वात् लुप्तनिर्दिष्टो वा, णदिमुहेसु—नदीमुखेषु । लवणसमुद्रेऽष्टादशयोजनप्रमाणा मत्स्यास्तत्र च नदीमुखेषु च नवयोजनप्रमाणा मत्स्याः कालोदधौ पुनर्मत्स्याः षट्त्रिंशद्योजनप्रमाणास्तत्र च नदीमुखेषु अष्टादशयोजनप्रमाणाः । मत्स्यानामुपलक्षणमेतत् अन्येषामपि प्रमाणं द्रष्टव्यमिति ॥ ४१

स्वयंभूरमणे मत्स्यानामुत्कृष्टदेहप्रमाणं जघन्यदेहप्रमाणं च प्रतिपादयन्नुत्तरसूत्रमाह;—

**साहस्सिया दु मच्छा सयंभुरमणह्मि पंचसदिया दु ।**
**देहस्स सव्वहस्सं कुंथुपमाणं जलचरेसु ॥ ४२ ॥**

---

१ नदीमुखमिति पाठः ख—ग—पुस्तके नास्ति ।

**साहस्त्रिकास्तु मत्स्याः स्वयंभूरमणे पंचशतिकास्तु ।**
**देहस्य सर्वह्रस्वं कुंथुप्रमाणं जलचरेषु ॥ ४२ ॥**

**टीका**---साहस्सिया दु---साहस्त्रिकास्तु सहस्रं योजनानां प्रमाणं येषां ते साहस्त्रिकाः, अत्रापि योजनशब्दो द्रष्टव्यः, मच्छा---मत्स्याः सयंभुरमणह्मि---स्वयंभूरमणसमुद्रे, पंचसदिया---पंचशतिकाः पंच शतानि प्रमाणं येषां योजनानां पंचशतिका नदीमुखेष्विति द्रष्टव्यमधिकारात् । उत्कृष्टेन स्वयंभूरमण[1]समुद्रे मत्स्याः सहस्रयोजनप्रमाणा नदीमुखेषु पंचशतयोजनप्रमाणाः । देहस्स---देहस्य शरीरस्य, सव्वहस्सं---सर्वह्रस्वं सुष्ठु अल्पत्वं, कुंथुपमाणं---कुंथुप्रमाणं, जलचरेसु---जलचरेषु । सर्वजलचराणां मध्ये मत्स्यस्य देहप्रमाणं सर्वोत्कृष्टं योजनसहस्रं सर्वजघन्यश्च कुंथुप्रमाणः केषांचिज्जलचराणां देह इति ॥ ४२ ॥

पर्याप्तापर्याप्तत्वमाश्रित्य जलचरस्थलचरखचराणां दे[2]हप्रमाणमाह,---

**जलथलखगसम्मुच्छिमतिरिय अपज्जत्तया विहत्थीदु ।**
**जलसम्मुच्छिमपज्जत्तयाण तह जोयणसहस्सं ॥ ४३ ।**

**जलस्थलखगसम्मूर्छिमतिर्यंच अपर्याप्तका वितस्तिस्तु ।**
**जलसंमूर्छिमपर्याप्तकानां तथा योजनसहस्रं ॥ ४३ ॥**

**टीका**---जलथलखग---जलं च स्थलं च खं च जलस्थलखानि तेषु गच्छंतीति जलस्थलखगा जलचरस्थलचरखचराः, सम्मुच्छिम---सम्मूर्च्छिमा गर्भोपपादजन्मै[3]नान्ययोन्युत्पन्नाः, तिरिय---तिर्यंचो देवमनुष्यनारकाणामन्ये जीवाः, अपज्जत्तया---अपर्याप्तका असंपूर्णाश्चाषट्पर्याप्तयः, विहत्थी दु---वितास्तिका द्वादशांगुलप्रमाणाः, अथवा जलस्थलखगसम्मू-

---

१ समुद्रे इति शब्दः ख-ग-पुस्तके नास्ति । २ देहप्रमाणयोत्तरसूत्रमाह-ख-ग. । ३ जन्मनोऽन्यथानुत्पन्ना ख-ग-पुस्तके पाठः ।

-र्च्छिमतिर्यग्पर्याप्तानां देहप्रमाणं वितस्तिः । जलसम्मुच्छिमपज्जत्तयाण—जलसम्मूर्च्छिमास्ते च ते पर्याप्तकाश्च जलसम्मूर्च्छिमपर्याप्तकास्तेषां जलसम्मूर्च्छिमपर्याप्तकानां च अथवा जलग्रहणेन जलचरा गृह्यंते—प्रस्तूयंते, प्रस्तुतत्वात्, जोयणसहस्सं—योजनानां सहस्रं, जलचरसंम्मूच्छिमपर्याप्तकानामुत्कृष्टं देहप्रमाणं योजनसहस्रमिति ॥ ४३ ॥

पुनरपि तदेवाश्रित्य गर्भजत्वं चाश्रित्योत्कृष्टदेहप्रमाणमाह;—

**जलथलगब्भअपज्जत्त खगथलसंमुच्छिमा य पज्जत्ता ।**
**खगगब्भजा य उभये उक्कस्सेण धणुपुहत्तं ॥ ४४ ॥**

**जलस्थलगर्भापर्याप्ताः खगस्थलसंमूर्छिमाश्च पर्याप्ताः ।**
**खगगर्भजाश्चोभये उत्कृष्टेन धनुःपृथक्त्वं ॥ ४४ ॥**

**टीका**—जलथलगब्भअपज्जत्त—जलमुदकं, स्थलं ग्रामनगराटवीपर्वतादि, गर्भः स्त्रिया उदरे वस्तिपटलाच्छादितप्रदेशः, जलचरजीवा जलाः स्थलस्था जीवाः स्थला गर्भे जाता जीवा गर्भजा इत्युच्यंते तात्स्थ्यात्साहचर्याद्वा यथा मंचाः क्रोशंतीति धनुर्धावतीति, न पर्याप्ता अपर्याप्ता अनिष्पन्नाहारादिषट्पर्याप्तयो जलाश्च स्थलाश्च ते गर्भाश्च जलस्थलगर्भास्ते च तेऽपर्याप्ताश्च जलस्थलगर्भापर्याप्ता जलचराः स्थलचरा गर्भजाश्च येऽपर्याप्तास्त इत्यर्थः । खगथलसम्मुच्छिमा य—खे आकाशे गच्छंतीति खगाः स्थलस्थाः स्थलाः खगाश्च स्थलाश्च खगस्थलाः पक्षिमृगादयस्ते च ते सम्मूर्च्छिमाश्च खगस्थलसम्मूर्च्छिमाः, पज्जत्ता—पर्याप्ताः । खगगब्भजा य—खगे जाता खगजा गर्भे जाता गर्भजाः खगजाश्च ते गर्भजाश्च खगगर्भजाः, उभये—पर्याप्ता अपर्याप्ताश्च, उक्कस्सेण—उत्कर्षेण उत्कृष्टशरीरप्रमाणेन धणुपुहत्तं धनुःपृथक्त्वं "त्रयाणामुपरि नवानामधो या संख्या सा पृथक्त्वमित्युच्यते" धनुषां पृथक्त्वं धनुःपृथक्त्वं त्रयाणां धनुषामुपरि नवानामधश्चतुः-

१ क्रियापदमिदं ख–ग–पुस्तके नास्ति । नाप्यनेन भवितव्यं ।

पंचषट्सप्ताष्टधनूंषि । जलचरस्थलचरा ये गर्भजा अपर्याप्ता खगस्थलचराश्च संमूर्च्छिमाः पर्याप्ता ये खगगर्भजाश्च ये पर्याप्तापर्याप्ताः सर्वे ते उत्कृष्टेन शरीरप्रमाणेन धनुःपृथक्त्वं भवंति । अथवा देहस्येत्यनुवर्त्तते तेनैतेषां देह उत्कर्षेण धनुःपृथक्त्वं भवतीति ॥ ४४ ॥

जलस्थलगर्भजपर्याप्तानामुत्कृष्टं देहप्रमाणमाह;—

**जलगब्भजपज्जत्ता उक्कस्सं पंचजोयणसयाणि ।**
**थलगब्भजपज्जत्ता तिगाउदोक्कस्समायामो ॥ ४५ ॥**

**जलगर्भजपर्याप्ताः उत्कृष्टं पंच योजनशतानि ।**
**स्थलगर्भजपर्याप्तास्त्रिगव्यूतानि उत्कृष्टमायामः ॥ ४५ ॥**

**टीका**—जलगब्भजपज्जत्ता—जलगर्भजपर्याप्ताः, उक्कस्सं—उत्कृष्टमुत्कर्षेण वा, पंचजोयणसयाणि—पंचयोजनशतानि देहप्रमाणेनेत्यर्थः, अथवा जलगर्भजपर्याप्तानामायामः पंचयोजनशतानि* उत्तरगाथार्धे आयामस्य ग्रहणं यतः । अथवा एतेषां देह उत्कृष्टः पंचयोजनशतानि* थलगब्भजपज्जता—स्थलगर्भजपर्याप्तानां, तिगाउद—त्रिगव्यूतानि षट्दंडसहस्राणि उक्कस्स—उत्कृष्टः, आयामो—आयामः शरीरप्रमाणं । स्थलगर्भजपर्याप्तानां भोगभूमितिरश्चां देहस्योत्कृष्ट आयामस्त्रीणि गव्यूतानि । अथवा स्थलगर्भजपर्याप्ता उत्कृष्टदेहस्यायामेन त्रिगव्यूतानि भवंतीति ॥ ४५ ॥

पृथिवीकायिकाप्कायिकतेजस्कायिकवायुकायिकानां मनुष्याणां चोत्कृष्टं देहप्रमाणं प्रतिपादयन्नाह;—

**अंगुलअसंखभागं बादरसुहुमा य सेसया काया ।**
**उक्कस्सेण दु णियमा मणुगा य तिगाउ उव्विद्धा ॥४६॥**

**अंगुलासंख्यभागो बादरसूक्ष्माश्च शेषाः कायाः ।**
**उत्कृष्टेन तु नियमात् मनुष्याश्च त्रिगव्यूतानि उद्वृद्धाः ॥४६॥**

* पुष्पमध्यगतः पाठः ख-ग-पुस्तकेऽधिकः ।

**टीका**—अंगुलं-द्रव्यांगुलमष्टयवनिष्पन्नांगुलेन येऽवष्टब्धा नभःप्रदेशास्तेषां मध्येऽनेकस्याः प्रदेशपंक्तेर्यावदायामस्तावन्मात्रं द्रव्यांगुलं तस्यांगुलस्य असंखभागं-असंख्यातभागः अंगुलमसंख्यातखंडं कृत्वा तत्रैकखंडमंगुलासंख्यातभागः, बादरसुहुमा य-बादरनामकर्मोदयाद्बादराः सूक्ष्मनामकर्मोदयात्सूक्ष्मा बादराश्च सूक्ष्माश्च बादरसूक्ष्माः पृथिवीकायादयः, सेसया-शेषा उक्तानां परिशेषाः कायाः पृथिवीकायाप्कायतेजःकायवायुकायाः, उक्कस्सेण-उत्कृष्टेन सुष्ठु महत्त्वेन, तुर्विशेषे; णियमा-नियमान्निश्चयात्, मणुया-मनुष्या भोगभूमिजाः, तिगाउ-त्रिगव्यूतानि, उव्विद्धा-उद्वृद्धाः परमोत्सेधाः । सर्वेऽपि बादरकायाः ( सूक्ष्माश्च ) पृथिवीकायिकादिवायुकायिकांता द्रव्यांगुलासंख्यभागशरीरोत्सेधा मनुष्याश्च पर्याप्तास्त्रिगव्यूतशरीरोत्सेधा । उत्कृष्टप्रमाणे न। नात्र पौनरुक्त्यं पर्याप्तिमनाश्रित्य सामान्येन कथनादिति ॥ ४६ ॥

पुनरपि सर्वजघन्यं सर्वोत्कृष्टं शरीरप्रमाणमाह,—

**सुहुमणिगोदअपज्जत्तयस्स जादस्स तदियसमयह्मि ।**
**हवदि दु सव्वजहण्णं सव्वुक्कस्सं जलचराणं ॥ ४७ ॥**

**सूक्ष्मनिगोदापर्याप्तस्य जातस्य तृतीयसमये ।**
**भवति तु सर्वजघन्यं सर्वोत्कृष्टं जलचराणां ॥ ४७ ॥**

**टीका**—सुहुमणिगोद—सूक्ष्मनिगोदस्य, अपज्जत्तयस्स-अपर्याप्तकस्य, जादस्स—जातस्योत्पन्नस्य, तदियसमयह्मि—तृतीयसमये प्रथमद्वितीयसमययोः प्रदेशविस्फूर्जनसद्भावात्पूर्वदेहसामीप्याद्वा महच्छरीरं भवति तृतीयसमये पुनः प्रदेशानां निचयानुसारेणावस्थानाच्च सर्वजघन्यं भवति शरीरं, हवदि दु-भवत्येव, सव्वजहण्णं-सर्वजघन्यं, सव्वुक्कस्सं-सर्वोत्कृष्टं, जलचराणां-मत्स्यानां पद्मानां वा । सूक्ष्मनिगोदस्यापर्याप्तस्य तृतीयसमये

---

१ ये चाष्टधा प्रेस-पुस्तके ।

जातमात्रस्य सर्वजघन्यशरीरोत्सेधः, जलचराणां चै पद्मानां सर्वोत्कृष्टः शरीरायाम इति । अत्रापि लोकस्य सप्तैकं पंचैकं रज्जुप्रमाणं द्रष्टव्यं तथा मेरुकुलपर्वतविजयार्द्धेष्वाकारकांचनगिरिमनुष्योत्तरकुंडलवरांजनदधिमुखर-तकरस्वयंभूनगवरेंद्रदंष्ट्रागिरिभवनविमानतोरणजिनगृहपृथिव्यष्टकेन्द्रकप्र-कीर्णकश्रेणिबद्धनरकक्षेत्रवेदिकाजंबूशाल्मलीधातकीपुष्करचैत्यवृक्षकूटह्रद-नदीकुंडायतनवापीसिंहासनादीनामुत्सेधायामप्रमाणं द्रष्टव्यं लोकनियोगत इति ॥ ४७ ॥

देहसूत्रं व्याख्याय संस्थानसूत्रं प्रपंचयन्नाह,—

**मसुरिय कुसग्गविंदू सूइकलावा पडाय संठाणा ।**
**कायाणं संठाणं हरिदतसा णेगसंठाणा ॥ ४८ ॥**

**मसूरिका कुशाग्रविंदुः सूचीकलापः पताका संस्थानानि ।**
**कायानां संस्थानानि हरितत्रसा अनेकसंस्थानाः ॥ ४८ ॥**

**टीका**—मसुरिय–मसूरिका वृंताकारा, कुसग्गविंदू–कुशस्याग्रं कुशाग्रं तस्मिन् विंदुरुदककणः कुशाग्रविंदुर्वर्तुलाकारमुदकं, सूइकलावा-सूचीकलापः सूचीसमुदायः, पडाय–पताका, संठाणं–संस्थानान्याकाराः, कायाणं–कायानां पृथिवीकायिकादिवायुकायांतानां, संठाणं–संस्थानानि शरीराकाराः । मसूरिका इव संस्थानं यस्य तन्मसूरिकासंस्थानं, कुशाग्रविंदुरिव संस्थानं यस्य तत्कुशाग्रविंदुसंस्थानं, सूचीकलाप इव संस्थानं यस्य तत्सूचीकलाप-संस्थानं, पताका इव संस्थानं यस्य तत्पताकासंस्थानं यथासंख्येन संबंधः, पृथिवीकायस्य संस्थानं मसूरिकासंस्थानं, अप्कायस्य संस्थानं कुशाग्र-विंदुसंस्थानं, तेजःकायस्य संस्थानं सूचीकलापसंस्थानं, वायुकायस्य

1 च पद्मानामिति पाठः ख–ग–पुस्तके नास्ति ।

संस्थानं पताकासंस्थानं । मसूरिकाद्याकार इव पृथिवीकायिकादयः[1]
हरिदतसा–हरितत्रसाः प्रत्येकसाधारणबादरसूक्ष्मवनस्पतिद्वीन्द्रियत्रीन्द्रिय-
चतुरिन्द्रियाः, णेगसंठाणा–अनेकसंस्थाना नैकमनेकमनेकं संस्थानं येषां
तेऽनेकसंस्थाना अनेकहुंडसंस्थानविकल्पा अनेकशरीराकाराः । त्रसशब्देन
द्वीन्द्रियादिचतुरिंद्रियपर्यंता गृह्यंते पंचेंद्रियाणां संस्थानस्योत्तरत्र प्रतिपा-
दनादिति ॥ ४८ ॥

पंचेन्द्रियसंस्थानप्रतिपादनार्थमाह;—

**समचउरसणग्गोहासादियखुज्जायवामणाहुंडा ।**
**पंचेंदियतिरियणरा देवा चउरस्स णारया हुंडा ॥४९॥**

**समचतुरस्रन्यग्रोधस्वातिककुब्जकवामनहुंडाः ।**
**पंचेंद्रियतिर्यङ्नरा देवाश्चतुरस्रा नारका हुंडाः ॥ ४९ ॥**

**टीका**—संस्थानमित्यनुवर्तते । समचउरस–समचतुरस्रं संस्थानं यथा
प्रदेशावयवं परमाणूनामन्यूनाधिकत्ता। णग्गोह–न्यग्रोध संस्थानं शरीरस्यो-
र्ध्वभागेऽवयवपरमाणुबहुत्वं । *सादि–स्वातिसंस्थानं शरीरस्य नाभेरधः
कटिजंघापादाद्यवयवपरमाणूनामधिकोपचयः । खुज्जा—कुब्जसंस्थानं
शरीरस्य पृष्ठावयवपरमाण्वधिकोपचयः । वामणा–वामनसंस्थानं शरीर-
मध्यावयवपरमाणुबहुत्वं हस्तपादानां च ह्रस्वत्वं । हुंडा–*हुंडसंस्थानं सर्वश-
रीरावयवानां बीभत्सता परमाणूनां न्यूनाधिकता सर्वलक्षणासंपूर्णता च
पंचेंदियतिरियणरा–पंचेन्द्रियतिर्यङ्नराणां समचतुरस्रन्यग्रोधस्वातिकुब्ज-
वामनहुंडसंस्थानानि षडपि पंचेन्द्रियाणां मनुष्याणां तिरश्चां च भवंति,

---

१ अस्मादग्रे कायाः काया इत्यर्थः इत्यशुद्धपाठः ख–ग–पुस्तके किन्तु इत्यर्थ इत्यनेन केवलेन भाव्यं । * पुष्पमध्यगतपाठस्थानेऽयं पाठः प्रेस–पुस्तके सादि–स्वातिसंस्थानं वल्मीकतुल्याकारं शरीरमध्यावयवपरमाणुबहुत्वं कुब्जसंस्थानं हस्तपादानां च ह्रस्वत्वं वामनसंस्थानं ।

अथवा अभेदात्तल्लिगं ताच्छब्द्यं च पंचेंद्रियतिर्यङ्नराः समचतुरस्रन्यग्रोधस्वातिकुब्जवामनहुंडाश्च भवंति सामान्येन। देवा चउरसा–देवाश्चतुरस्राः, णारया–नारकाः, हुंडा–हुंडाः। देवाः समचतुरस्रसंस्थाना एव, नारकाश्च हुंडकसंस्थाना एव न तेषामन्यत्संस्थानान्तरं विद्यत इति ॥ ४९ ॥

**जवणालिया मसूरी अतिमुत्तय चंदए खुरप्पे च।**
**इंदियसंठाणा खलु फासस्स अणेयसंठाणं ॥ ५० ॥**

**यवनालिका मसूरिका अतिमुक्तकं चंद्रकं क्षुरप्रं च।**
**इंद्रियसंस्थानानि खलु स्पर्शस्य अनेकसंस्थानं ॥ ५० ॥**

**टीका**—जवणालिया–यवस्य[1] नालिका यवनालिका, मसूरी–मसूरिका वृन्ताकारा, अदिमुत्तयं–अतिमुक्तकं पुष्पविशेषः, चंदए–अर्द्धचन्द्रः, खुरप्पे य–क्षुरप्रं च, इंदिय–इंद्रियाणां इन्द्रियशब्देन श्रोत्रचक्षुर्घ्राणजिह्वेन्द्रियाणां ग्रहणं स्पर्शनेन्द्रियस्य पृथग्ग्रहणात्, संठाणा–संस्थानानि आकारा यथासंख्येन संबंधः। श्रोत्रेन्द्रियं यवनालिकासंस्थानं, चक्षुरिन्द्रियं मसूरिकासंस्थानं, घ्राणेन्द्रियमातिमुक्तकपुष्पसंस्थानं, जिह्वेन्द्रियमर्धचन्द्रसंस्थानं क्षुरप्रसंस्थानं च खलु स्फुटं। फासस्स–स्पर्शस्य स्पर्शनेन्द्रियस्य, अणेयसंठाणं–अनेकसंस्थानं अनेकप्रकार आकारः। स्पर्शनेन्द्रियस्यानेकं संस्थानं समचतुरस्रादिभेदेन व्यक्तं सर्वत्र क्षयोपशम[2]भेदात्। अंगुलासंख्यातभाग[3]प्रमितं भावेंद्रियं, द्रव्येंद्रियं पुनरंगुलासंख्यातभागप्रमितमपि भवति। इन्द्रियं द्विविधं द्रव्येन्द्रियं भावेंद्रियं च द्रव्येंद्रियं द्विविधं निर्वृत्युपकरणभेदेन, भावेन्द्रियमपि द्विविधं लब्ध्युपयोगभेदेन, तत्र द्रव्येंद्रियस्य निर्वृत्तेर्भावेन्द्रियस्य च लब्धेः संस्थानमेतत्, उपयोगो भावेन्द्रियं तस्याकारो विषयपरिच्छित्तिरेव ॥ ५० ॥

---

१ यवनालिका यवस्य नालं ख–ग। २ क्षयोपशमप्रदेशा प्रेस—पुस्तके। ३ प्रमिताः पुस्तके पाठः।

यद्येवं स एव विषयः कियानिति प्रतिपाद्यतामित्युक्तेऽत आह;—

**चत्तारि धणुसदाइं चउसट्ठी धणुसयं च फस्सरसे ।**
**गंधे य दुगुणदुगुणा असण्णिपंचिंदिया जाव ॥ ५१ ॥**

**चत्वारि धनुःशतानि चतुःषष्टि धनुःशतं च स्पर्शरसयोः ।**
**गंधस्य च द्विगुणद्विगुणानि असंज्ञिपंचेंद्रियं यावत् ॥ ५१ ॥**

**टीका**—चत्तारि—चत्वारि, धणुसदाइं—धनुःशतानि, चउसट्ठी—चतुःषष्टिर्धनुषामिति संबंधः धनुषां चतुर्भिरधिका षष्टिः, धणुसयं च—धनुःशतं च, फस्सरसे, स्पर्शरसयोः स्पर्शनेन्द्रियस्य रसनेंद्रियस्य, गंधे य—गंधस्य च घ्राणेन्द्रियस्य च, दुगुणदुगुणा—द्विगुणद्विगुणाः, असण्णिपंचेंदिया जाव—असंज्ञिपंचेन्द्रियं यावत् । एकेंद्रियमारभ्य यावदसंज्ञिपंचेंद्रियः—स्पर्शविषय उत्तरत्र कथ्यते तेन सह संबंधः । एकेन्द्रियस्य स्पर्शनेन्द्रियाविषयश्चत्वारि धनुःशतानि, एतावताध्वना स्थितं स्पर्शं गृह्णन्ति पृथिवीकायिकाप्कायिकतेजःकायिकवायुकायिका उत्कृष्टशक्तियुक्तस्पर्शनेन्द्रियेण । तथा द्वीन्द्रियस्य रसनेन्द्रियविषयश्चतुःषष्टिर्धनुषां एतावताऽध्वना स्थितं रसं गृण्हाति रसनेन्द्रियेण द्वीन्द्रियस्तथा तस्यैव द्वीन्द्रियस्य स्पर्शनेन्द्रियविषयोऽष्टौ धनुः शतानि एतावताऽध्वना स्थितं स्पर्शं गृह्णाति द्वीन्द्रियः स्पर्शनेन्द्रियेण, तथा त्रीन्द्रियस्य घ्राणेन्द्रियविषयः धनुषां शतं एतावताध्वना स्थितं गंधं गृह्णाति त्रीन्द्रियो घ्राणेन्द्रियेण तथा तस्यैव त्रीन्द्रियस्य स्पर्शनेन्द्रियविषयः षोडशधनुःशतानि एतावताध्वना व्यवस्थितं स्पर्शं गृह्णाति त्रीन्द्रियः स्पर्शनेन्द्रियेण तथा तस्यैव त्रीन्द्रियस्य रसनेंद्रियविषयोऽष्टाविंशत्यधिकं च शत धनुषां एतावताध्वना स्थितं रसं गृह्णाति, त्रीन्द्रियः रसनेंद्रियेण तथा तस्यैव त्रीन्द्रियस्य घ्राणेन्द्रियविषयः शतं धनुषां एतावताध्वना स्थितं गंधं गृह्णाति त्रीन्द्रियो घ्राणेन्द्रियेण, तथा चतुरिंद्रियस्य स्पर्शनेन्द्रियविषयो द्विशताधिकानि त्रीणि

सहस्राणि धनुषामेतावताध्वना स्थितं स्पर्शं गृह्णाति चतुरिन्द्रियःस्पर्शनेन्द्रियेण, तथा तस्यैव चतुरिन्द्रियस्य रसनेन्द्रियविषयो धनुषां द्वे शते षट्पंचाशदधिके एतावताध्वना स्थितं रसं चतुरिन्द्रियः रसनेन्द्रियेण गृह्णाति तथा तस्यैव चतुरिंद्रियस्य घ्राणेन्द्रियविषयो द्वे शते धनुषामेतावताध्वना स्थितं गंधं गृण्हाति चतुरिन्द्रियो घ्राणेन्द्रियेण, तथाऽसंज्ञिपंचेंद्रियस्य स्पर्शनेंद्रियविषयः चतुः शताधिकानि षट्सहस्राणि धनुषामेतावत्यध्वानि स्थितं स्पर्शमसंज्ञिपंचेंद्रियो गृह्णाति स्पर्शनेंद्रियेण तथा तस्यैवासंज्ञिपंचेंद्रियस्य रसनेंद्रियविषयः द्वादशोत्तराणि पंचशतानि धनुषामेतावत्यध्वनि स्थितं रसं गृह्णाति असंज्ञिपंचेंद्रियो रसनेंद्रियेण तथा तस्यैवासंज्ञिपंचेंद्रियस्य घ्राणेंद्रियविषयो धनुषां चत्वारि शतानि एतावताध्वना स्थितं गंधं गृह्णाति असंज्ञिपंचेंद्रियो घ्राणेंद्रियेण । न चैतेषामिन्द्रियाणां प्राप्तग्राहित्वेनैतावताध्वना ग्रहणमयुक्तमप्राप्तग्राहित्वमपि, यतो युक्त्या आगमेन च न विरुध्यते, युक्तिस्तावदेकेन्द्रियो दूरस्थमपि वस्तु जानाति पादप्रसारणात् यस्यां दिशि वस्तु सुवर्णादिकं स्थितं, प्रारोहं प्रसारयत्येकेन्द्रियो वनस्पातिः । अवष्टंभप्रदेशे च नालानि व्युत्सृजतीति । तथागमेऽपि स्पर्शनेन्द्रियादीनामप्राप्तग्राहित्वं पठितं षड्त्रिंशत्रिशत इति विकल्पस्य कथनादिति ॥ ५१ ॥

चतुरिन्द्रियस्य चक्षुर्विषयं प्रतिपादयन्नाह;—

**इगुणतीसजोयणसदाइं चउवण्णाय होइ णायव्वा ।**
**चउरिंदियस्स णियमा चक्खुप्फासं वियाणाहि ॥५२॥**

**एकोनत्रिंशत् योजनशतानि चतुःपंचाशत् भवति ज्ञातव्यानि ।**
**चतुरिंद्रियस्य नियमात् चक्षुःस्पर्शं विजानीहि ॥ ५२ ॥**

**टीका**—इगुणतीसजोयणसदाइं-एकोनत्रिंशद्योजनशतानि योजनानामेकोनानि त्रिंशच्छतानि, चहुवण्णाय—चतुः पंचाशच्चतुर्भिरधिका च पंचाशद्योजनानां, होइ—भवति, णायव्वा—ज्ञातव्यानि । चउरिंदियस्स—चतुरिन्द्रि-

यस्य, णियमा—नियमात् निश्चयेन । चक्खुप्फासं—चक्षुःस्पर्शं विषयं वियाणाहि—विजानीहि । इमं चतुरिन्द्रियस्य चक्षुरिन्द्रियविषयं योजनानामेकोनत्रिंशच्छतं चतुःपंचाशद्योजनाधिकं विजानीह्यसंदेहेनेति । न चक्षुषः प्राप्तग्राहित्वं तत्क्षुःस्थांजनादेरग्रहणात्, न च गत्वा गृह्णाति चक्षुःप्रदेशशून्यत्वप्रसंगात् । नापि विज्ञानमयं चक्षुर्गच्छति जीवस्याज्ञत्वप्रसंगात्, न च स्वतोऽर्धस्वरूपेण गमनं युज्यतेऽतरे सर्ववस्तुग्रहणप्रसंगात् इति ॥ ५२ ॥

असंज्ञिपंचेंद्रियस्य चक्षुर्विषयं प्रतिपादयन्नाह;—

**उणसट्ठि जोयणसदा अट्ठेव य होंति तह य णायव्वा ।**
**असण्णिपंचेंदीए चक्खुप्फासं वियाणाहि ॥ ५३ ॥**

**एकोनषष्टियोजनशतानि अष्टैव च भवंति तथा च ज्ञातव्यानि ।**
**असंज्ञिपंचेंद्रियस्य चक्षुःस्पर्शं विजानीहि ॥ ५३ ॥**

**टीका**—उणसट्ठि—एकोनषष्टिः, एकेनोना षष्टिः । जोयणसदा—योजनानां शतानि योजनशतानि, अट्ठेव य—अष्टावपि च योजनानि, होंति—भवंति । तह य णायव्वा—तथैव ज्ञातव्यानि असण्णिपंचेंदीए—असंज्ञिपंचेंद्रियस्य शिक्षालापादिरहितपंचेंद्रियस्य, चक्खुप्फासं—चक्षुःस्पर्शं चक्षुर्विषयं चक्षुषा ग्रहणं, वियाणाहि—विजानीहि । योजनशतानामेकोनषष्टिस्तथैवाष्टयोजनानि च भवंति ज्ञातव्यान्येतत्प्रमाणमसंज्ञिपंचेंद्रियस्य चक्षुरिन्द्रियविषयं जानीहि एतावत्यध्वनि स्थितं रूपमसंज्ञिपंचेंद्रियो गृह्णाति चक्षुरिन्द्रियेणेति ॥ ५३ ॥

असंज्ञिपंचेंद्रियस्य श्रोत्रविषयं प्रतिपादयन्नाह;—

**अट्ठेव धणुसहस्सा सोदप्फासं असण्णिणो जाण ।**
**विसयावि य णायव्वा पोग्गलपरिणामजोगेणं ॥ ५४ ॥**

---

१ 'इमं' प्रेस-पुस्तके नास्ति । २ चक्षुरिंद्रियविषयस्य प्रेस-पुस्तके पाठः । ३ विज्ञानमेयं प्रेस पुस्तके । ४ सन्तानस्वरूपेण ख—ग । ५ असमादयं तत्प्रमाणा एतावंति ख. । एतावंति ग । एतावंति गोचरे ख. ग ।

**अष्टावेव धनुःसहस्राणि श्रोत्रस्पर्शमसंज्ञिनो जानीहि ।**
**विषया अपि च ज्ञातव्याः पुद्गलपरिणामयोगेन ॥ ५४ ॥**

**टीका**—अट्ठेव धणुसहस्सा–अष्टावेव धनुःसहस्राणि, सोदप्फासं–श्रोत्रस्पर्शं श्रोत्रेंद्रियविषयं, असण्णिणो–असंज्ञिनोऽसंज्ञिपंचेंद्रियस्य, जाण–जानीहि । असंज्ञिपंचेन्द्रियश्रोत्राविषयं धनुषामष्टसहस्रं जानीह्येतावताध्वना स्थितं शब्दं गृह्णाति श्रोत्रेणासंज्ञिपंचेंद्रिय इति । विसयावि य–विषयाश्चापि णायव्वा–ज्ञातव्याः पोग्गलपरिणामजोगेण–पुद्गलस्य मूर्त्तद्रव्यस्य परिणामो विशिष्टसंस्थानमहत्वप्रकृष्टवार्ण्यादिः[2] पुद्गलपरिणामस्तेन योगः संपर्कस्तेन पुद्गलपरिणामयोगेन एतावतोक्तांतरेण विशिष्टा रूपादयः दिवाकरादिभूता विशिष्टैरिन्द्रियैर्गृह्यंते नान्यथेति ॥ ५४ ॥

संज्ञिपंचेंद्रियस्य पंचेंद्रियविषयं प्रतिपादयन्नाह;—

**फासे रसे य गंधे विसया णव जोयणा य णायव्वा[3] ।**
**सोदस्स दु वारसजोयणाणिदो चक्खुसो वोच्छं ॥ ५५ ॥**

**स्पर्शस्य रस्य च गंधस्य विषयाः नव योजनानि ज्ञातव्यानि ।**
**श्रोत्रस्य तु द्वादशयोजनानीतश्चक्षुषो वक्ष्ये ॥ ५५ ॥**

**टीका**—फासे–स्पर्शस्य स्पर्शनेन्द्रियस्य, रसे–रसस्य रसनेंद्रियस्य, गंधे–गंधस्य घ्राणेंद्रियस्य, विसया–विषयाः ग्रहणगोचराणि, णवजोयणा–नव योजनानि, णायव्वा–ज्ञातव्यानि, सोदस्सदु–श्रोत्रस्य तु श्रोत्रेंद्रियस्य पुनः, वारस जोयणाणि–द्वादश योजनानि इदो–इत ऊर्ध्वं, चक्खुसो–चक्षुषः संज्ञिपंचेंद्रियस्य चक्षुरिन्द्रियस्य च, वोच्छं–वक्ष्ये, संज्ञिपंचेंद्रियस्य प्रकृष्टेंद्रियस्य चक्रवर्त्यादेः स्पर्शनेंद्रियस्य नवयोजनानि विषयः रसनेंद्रियस्य नव योजनानि विषयः घ्राणेंद्रियस्य नव योजनानि विषयः श्रोत्रेंद्रियस्य द्वादश योजनानि विषयः संज्ञिपंचेंद्रिय उत्कृष्टपुद्गलपरिणामान्नवभिर्नव-

१ सहस्सा ख. ग. २ वर्णादिः ख ग । ३ मुणेयव्वा ख. ग. ।

भिर्योजनैः स्थितानि स्पर्शरसगंधद्रव्याणि स्पर्शनरसनघ्राणेन्द्रियैर्गृह्णाति शब्दं पुनर्द्वादशयोजनैः स्थितं श्रोत्रेंद्रियेण गृह्णातीति ॥ ५५ ॥

सूचितचक्षुर्विषयमाह;—

**सत्तेतालसहस्सा वे चेव सदा हवंति तेसट्ठी ।**
**चक्खिंदिअस्स विसओ उक्कस्सो होदि अदिरित्तो॥५६॥**

**सप्तचत्वारिंशत्सहस्राणि द्वे चैव शते भवंति त्रिषष्टिः ।**
**चक्षुरिंद्रियस्य विषय उत्कृष्टो भवति अतिरिक्तः ॥ ५६ ॥**

टीका—सत्तेताल–सप्तचत्वारिंशत्, सहस्सा–सहस्राणि, वे चेव सदा द्वे चैव शते, हवंति–भवंति तेसट्ठी–त्रिषष्ट्याधिके योजनानामिति संबंधः चक्खिंदियस्स चक्षुरिन्द्रियस्य, विसओ–विषयः, उक्कस्सो–उत्कृष्टः होइ भवति अदिरित्तो–अतिरिक्तः, अतिरिक्तस्य प्रमाणं गव्यूतमेकं दंडानां द्वादशशतानि पंचदशदंडाधिकानि हस्तश्चैकः द्वे चांगुले साधिकयवचतुर्थभागाधिके; संज्ञिपंचेंद्रियपर्याप्तकचक्षुरिन्द्रियस्य विषयो योजनानां सप्तचत्वारिंशत्सहस्राणि त्रिषष्ट्यधिकद्विशताधिकानि पंचदशाधिकद्वादशशतदंडाधिकैकगव्यूताधिकानि सविशेषयवचतुर्थभागाधिकद्व्यंगुलाधिकैकहस्ताधिकानि च । एतावताध्वना सज्ञिपंचेंद्रियः पर्याप्तको रूपं पश्यतीति॥५६॥

अस्यैव प्रमाणस्यानयने करणगाथामाहः—

**अस्सीदिसदं विगुणं दीवविसेसस्स वग्ग दहगुणिय ।**
**मूलं सट्ठिविहत्तं दिणद्धमाणाहतं चक्खू ॥ ५७ ॥**

**अशीतिशतं द्विगुणं द्वीपविशेषस्य वर्गो दशगुणितः ।**
**मूलं षष्टिविभक्तं दिनार्धमानाहतं चक्षुः ॥ ५७ ॥**

टीका—असीदिसदं–अशीत्यधिकं शतं, विगुणं–द्विगुणं द्वाभ्यां गुणितं षष्ट्यधिकत्रिंशत्प्रमाणं भवति द्वीपशब्देन जंबूद्वीपविष्कंभयोजनलक्षं परिगृह्यते सर्वाभ्यंतरान्यवर्त्मपरिधिप्रमाणानयननिमित्तमुभयोः पार्श्वयोर्वि-

शोधनमशीतिशतद्विगुणस्य लक्षयोजनप्रमाणात्तस्मात् द्वीपात् तद्विसृष्टं रहितं क्रियते तस्मिन् कृते शेषो द्वीपविशेष इत्युच्यते तस्य द्वीपविशेषस्य वर्गः क्रियते[1] स वर्गों दशगुणः क्रियते तस्य मूलं षष्ट्या विभाजितं भक्तं दिनार्धमानाहतं नवभिर्गुणितं " दिनार्धशब्देन नव मुहूर्ताः परिगृह्यंते "। सर्वाभ्यंतरपरिधिषष्टिमुहूर्ते भ्रमति मार्तंडोऽतः षष्टिभिर्भागो मध्याह्ने भवति नवभिर्मुहूर्तैरयोध्यायां नवगुणकारः। एवं कृते च यल्लब्धं परिमाणं पूर्वोक्तं चक्षुषो विषयो भवति आषाढमासे सर्वाभ्यंतरवर्त्मनि मिथुनावसाने स्थितस्यादित्यस्याध्वनो ग्रहणमिति ॥ ५७ ॥

स्वामित्वपूर्वकं योनिस्वरूपं प्रतिपादयन्नाहः—

**एइंदिय णेरइया संपुडजोणी हवंति देवा य।**
**वियलिंदिया य वियडा संपुडवियडा य गब्भेसु ॥५८॥**

**एकेंद्रियाश्च नारकाः संवृतयोनयो भवंति देवाश्च।**
**विकलेंद्रिया विवृताः संवृतविवृताश्च गर्भेषु ॥ ५८ ॥**

**टीका**—सचित्तशीतसंवृताचित्तोष्णविवृतभेदैः सचित्ताचित्तशीतोष्णसंवृतविवृतभेदैश्च नवप्रकारा योनिर्भवति। यूयते[2] भवपरिणत आत्मा यस्यामिति योनिर्भवाधारः। आत्मनश्चैतन्यविशेषपरिणामश्चित्तं सह चित्तेन वर्तते इति सचित्तं, शीत इति स्पर्शविशेषः 'शुक्लादिवदुभयवचनत्वात्तद्युक्तं द्रव्यमप्याह'। सम्यग्वृतः संवृतः दुरुपलक्ष्यप्रदेशोऽचित्तरहितपुद्गलप्रचयप्रदेशो वा, उष्णः संतापपुद्गलप्रचयप्रदेशो वा, विवृतो संवृतः प्रकटपुद्गलप्रचयप्रदेशो वा, उभयात्मको मिश्रः सचित्ताचित्तः शीतोष्णः संवृतविवृतः एतैर्भेदैश्च नवयोनयः सम्मूर्च्छनगर्भोपपादानां जन्मनामाधारा भवंति एतेषु प्रदेशेषु जीवाः सम्मूर्च्छनादिस्वरूपेणोत्पद्यंत इति। तत्र एइंदिय णेरइया—एकेंद्रिया नारकाश्च, संपुडजोणी—संवृतयोनयः, संवृता

---

१ अस्माद्ग्रे ' तत्तद्गुणो वर्गः। इति पाठः ख-ग-पुस्तके। २ यूयते ख-ग।

योनिर्येषां ते संवृतयोनयः दुरुपलक्ष्योत्पत्तिप्रदेशाः, हवंति—भवंति, देवा य—देवाश्च संवृतयोनयः, वियलिंदिया—विकलेन्द्रियाश्च द्वीन्द्रियत्रीन्द्रिय चतुरिन्द्रियाः, वियडा—विवृतयोनयश्च, तास्थ्यात्ताच्छब्धं संपुडवियडा य—संवृताविवृताः संवृतविवृतयोनयः, गब्भेसु—गर्भेषु स्त्रियांउदरे "शुक्र-शोणितयोर्मिश्रणं गर्भः"। देवनारकैकेन्द्रियाः संवृतयोनयः, विकलेन्द्रिया ये ते विवृतयोनयः, गर्भेषु ये ते संवृतविवृतयोनयः भवन्तीति ॥ ५८ ॥

पुनस्तेषां विशेषयोनित्वमाहः—

**अच्चित्ता खलु जोणी णेरइयाणं च होइ देवाणं ।**
**मिस्सा य गब्भजम्मा तिविहा जोणी दु सेसाणं ॥५९॥**

**अचित्ता खलु योनिः नारकाणां च भवति देवानां ।**
**मिश्राश्च गर्भजन्मनां त्रिविधा योनिस्तु शेषाणां ॥ ५९ ॥**

**टीकाः**—अच्चित्ता—निश्चेतना, खलु—स्फुटं, जोणी—योनिः, णेरइयाणं च—नारकाणां च होइ—भवति देवाणं—देवानां चशब्दोऽत्र संबंधनीयः। मिस्सा य मिश्रा च, गब्भजम्मा—गर्भजन्मनां गर्भजानां। तिविहा—त्रिविधा त्रिप्रकारा, जोणी दु—योनिस्तु, सेसाणं—शेषाणां, सम्मूर्च्छनजन्मनामेकें-द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपंचेन्द्रियाणां देवनारकाणां गर्भवर्जित-पंचेन्द्रियाणां च देवनारकाणां अचित्तयोनयः, गर्भजाः सचित्ताचित्तयो-नयः, शेषाः पुनरेकेन्द्रियादिपंचेंन्द्रियपर्यंताः केचन सचित्तयोनयः केचन अचित्तयोनयः केचन सचित्ताचित्तयोनयश्च भवंतीति ॥ ५९ ॥

पुनरपि तेषामेव विशेषयोनिस्वामित्वमाहः—

**सीदुण्हा खलु जोणी णेरइयाणं तहेव देवाणं ।**
**तेऊण उसिणजोणी तिविहा जोणी दु सेसाणं ॥६०॥**

**शीतोष्णा खलु योनिः नारकाणां तथैव देवानां ।**
**तेजसां उष्णयोनिः त्रिविधा योनिस्तु शेषाणां ॥ ६० ॥**

टीका—सीदुण्हा–शीतोष्णा, खलु–स्फुटं, जोणी–योनिः, णेरइयाणं–नारकाणां, तहेव देवाणं–तथैव देवानां, तेऊण–तेजःकायानां, उसिणजोणी–उष्णयोनिः । तिविहा–त्रिविधा, शीता–उष्णा–शीतोष्णा, जोणी दु–योनिस्तु सेसाणं–शेषाणां पृथिवीकायाप्कायवायुकायवनस्पतिकायद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियाणां देवनारकवर्जितपंचेंद्रियाणां । देवनारकाणां शीतोष्णा च योनिः तेषां हि कानिचिच्छीतानि कानिच्चिदुष्णानि तेजःकायिकानां पुनरुष्ण एव योनिः शेषाणां तु त्रिविधो योनिस्ते च केचिच्छीतयोनयः केच्चिदुष्णयोनयः केच्चिच्छीतोष्णयोनयः अप्कायिकाः शीतयोनय एवेति ॥ ६० ॥

पुनरप्येतेषां योनीनां विशेषयोनिस्वरूपमाह;—

**संखावत्तयजोणी कुम्मुण्णद वंसपत्तजोणी य ।**
**तत्थ य संखावत्ते णियमादु विवज्जए गब्भो ॥ ६१ ॥**

**शंखावर्तकयोनिः कूर्मोन्नतः वंशपत्रयोनिश्च ।**
**तत्र च शंखावर्ते नियमात् विपद्यते गर्भः ॥ ६१**

टीका—संखावत्तय शंख इव आवर्तो यस्य शंखावर्तका जोणी-योनिः कुमुण्णद–कूर्म इवोन्नतः कूर्मोन्नतः, वंशपत्तजोणी य–वंशपत्रमिव योनिर्वंशपत्रयोनिः । तत्र च तेषु मध्ये शंखावर्त्ते नियमात् विवज्जए विपद्यते विनश्यति गर्भो "गर्भः शुक्रशोणितगरणं"। शंखावर्त्तकूर्मोन्नतवंशपत्रभेदेन त्रिविधो योनिस्तत्र च शंखावर्त्ते योनौ नियमाद्विपद्यते गर्भः अतः तद्वती[1] वंध्या भवतीति ॥ ६१ ॥

तेषु य उत्पद्यंते तानाह;—

**कुम्मुण्णदजोणीए तित्थयरा दुविहचक्कवट्टी य ।**
**रामावि य जायंते सेसा सेसेसु जोणीसु ॥ ६२ ॥**

---

१ 'तद्वती' ख-ग-पुस्तके नास्ति ।

**कूर्मोन्नतयोनौ तीर्थंकरा द्विविधचक्रवर्तिनः ।**

**रामा अपि च जायंते शेषाः शेषयोर्योन्योः ॥ ६२ ॥**

**टीका**—कूर्मोन्नतयोनौ विशिष्टसर्वशुचिप्रदेशे शुद्धपुद्गलप्रचये वा तित्थयरा—तीर्थंकराः, दुविहचक्कवट्टीय—द्विविधचक्रवर्त्तिनः चक्रवर्त्तिवासुदेवप्रतिवासुदेवाः रामाविय रामाश्चापि बलदेवा आपि जायंते समुत्पद्यंते । सेसा—शेषा अन्ये तीर्थंकरचक्रवर्त्तिबलदेववासुदेवप्रतिवासुदेवविवर्जिता भोगभूमिजादयः, सेसेसु—शेषयोः जोणीसु—योन्योर्वंशपत्रशंखावर्त्तयोरुत्पद्यंते । किंतु शंखावर्त्ते विपद्यते गर्भः स भोगभूमिजानां न भवति ते ह्यनपवर्त्यायुष इति ॥ ६२ ॥

संवृतादियोनिविशेषांश्चतुरशीतिसहस्रभेदान् प्रतिपादयन्नाहः—

**णिच्चिदरधादु सत्तय तरु दस विगलिंदियेसु छच्चेव ।**

**सुरणरतिरिए चउरो चोद्दस मणुएसु सदसहस्सा ॥ ६३ ॥**

**नित्येतरधातुसप्तकं तरूणं दश विकलेंद्रियाणां षट् चैव ।**

**सुरनारकतिरश्चां चत्वारि चतुर्दश मनुजानां शतसहस्राणि॥६३॥**

**टीकाः**—नित्यनिगोदेतरनिगोदपृथिवीकायिकाप्कायिकतेजःकायिकवायुकायिकानां सप्त लक्षाणि योनीनां । तरूणां प्रत्येकवनस्पतीनां दशलक्षाणि योनीनां । विकलेंद्रियाणां द्वीन्द्रियत्रींद्रियचतुरिन्द्रियाणां षट्शतसहस्राणि । सुराणां चत्वारि लक्षाणि । नारकाणां चत्वारि लक्षाणि । तिरश्चां सुरनारकमनुष्यवर्जितपचेंद्रियाणां चत्वारि लक्षाणि । मनुष्याणां चतुर्दशशतसहस्राणि योनीनामिति संबंधः । एवं सर्वसमुदायेन चतुरशीतिशतसहस्राणि योनीनामिति । नात्र पौनरुक्त्यं पूर्वेण सहाधिकारभेदात् पर्यायार्थिकशिष्यानुग्रहणाच्च ॥ ६३ ॥

आयुषः स्वरूपं प्रमाणेन स्वामित्वपूर्वकं प्रतिपादयन्नाह—

**वारसवाससहस्सा आऊ सुद्धेसु जाण उक्कस्सं।**
**खरपुढविकायगेसु य वाससहस्साणि वावीसा ॥ ६४ ॥**

**द्वादशवर्षसहस्राणि आयुः शुद्धेषु जानीहि उत्कृष्टम्।**
**खरपृथिवीकायिकेषु च वर्षसहस्राणि द्वाविंशतिः ॥ ६४ ॥**

**टीका**:—नारकतिर्यङ्मनुष्यदेवभवधारणहेतुः कर्मपुद्गलपिंड आयुः। औदारिकमिश्रवैक्रियकवैक्रियकामिश्रशरीरसाधारणलक्षणं वायुः। तत्र वारसवाससहस्सा—द्वादशवर्षसहस्राणि, उच्छ्वासानां त्रीणि सहस्राणि त्रिसप्तत्यधिकसप्तशतानि च गृहीत्वैको मुहूर्तः आगमोक्तं लक्षणमेतत्। लौकिकैः पुनः सप्तशतैरुच्छ्वासैर्मुहूर्तो भवति। आगमिक उच्छ्वास उदरप्रदेशनिर्गमाद्गृहीतो लौकिकः पुनः नासिकाया निर्गमात् गृहीत इति न दोषः। त्रिंशन्मुहूर्त्तैर्दिवसस्त्रिंशद्भिर्दिवसैर्मासो द्वादशभिर्मासैर्वर्षः। आऊ—आयुः भवस्थितिः सुद्धेसु— शुद्धेषु शुद्धानां पृथिवीकायिकेष्विति संबंधः जाण—जानीहि, उक्कस्सं—उत्कृष्टं, खरपुढविकायिगेसु य—खरपृथिवीकायिकेषु च मृत्तिकादयः शुद्धपृथिवीकायिकाः पाषाणादयः खरपृथिवीकायिकाः, वाससहस्साणि—वर्षसहस्राणि वावीस—द्वाविंशतिः। शुद्धपृथिवीकायिकानामुत्कृष्टमायुर्द्वादशवर्षसहस्राणि, खरपृथिवीकायिकानां चोत्कृष्टमायुर्द्वाविंशतिवर्षसहस्राणि भवंतीति ॥ ६४ ॥

अप्कायिकतेजःकायिकानामायुःप्रमाणमाह;—

**सत्त दु वाससहस्सा आऊ आउस्स होइ उक्कस्सं।**
**रत्तिंदियाणि तिण्णि दु तेऊणं होइ उक्कस्सं ॥ ६५ ॥**

**सप्त तु वर्षसहस्राणि आयुरपां भवति उत्कृष्टं।**
**रात्रिंदिनानि त्रीणि तु तेजसां भवति उत्कृष्टं ॥ ६५ ॥**

**टीका**—सत्त दु—सप्तैव, वासासहस्सा—वर्षसहस्राणि, आऊ—आयुः, आउस्स—अपां अप्कायिकानां होइ—भवति उक्कस्सं—उत्कृष्टं, अप्कायिकानां

परमायुः सप्तैव वर्षसहस्राणि । रत्तिंदियाणि—रात्रिंदिनानि अहोरात्रं, तिण्णि दु—त्रय एव, तेऊणं—तेजसां तेजः कायिकानां, होइ—उक्कस्सं भवत्युत्कृष्टं । अप्कायिकानां परमायुः सप्तैव वर्षसहस्राणि त्रीणि रात्रिंदिनानि तेजःकायिकानां परमायुरिति ॥ ६५ ॥

वायुकायिकानां वनस्पतिकायिकानां च परमायुःप्रमाणमाहः—

**तिण्णि दु वाससहस्सा आऊ वाउस्स होइ उक्कस्सं ।**
**दस वामसहस्साणि दु वणप्फदीणं तु उक्कस्सं ॥ ६६ ॥**

**त्रीणि तु वर्षसहस्राणि आयुः वायूनां भवति उत्कृष्टं ।**
**दश वर्षसहस्राणि तु वनस्पतीनां तु उत्कृष्टं ॥ ६६ ॥**

**टीका**—तिण्णि दु—त्रीणि तु त्रीण्येव नाधिकानि, वाससहस्सा—वर्षसहस्राणि, आऊ—आयुः, वाउस्स—वायूनां वायुकायिकानां, होदि उक्कस्सं—भवत्युत्कृष्टं । दस वाससहस्साणि—दशवर्षसहस्राणि, तुशब्दोऽवधारणार्थः" वणप्फदीणं तु—वनस्पतीनां च वनस्पतिकायानां तु उक्कस्सं—उत्कृष्टमेव । वायुकायिकानामुत्कृष्टमायुस्त्रीण्येव वर्षसहस्राणि; वनस्पतिकायिकानां तूत्कृष्टमायुर्दशैववर्षसहस्राणीति ॥ ६६ ॥

विकलेंद्रियाणामायुःप्रमाणमाहः—

**वारस वासा वेइंदियाणमुक्कस्सं भवे आऊ ।**
**राइंदियाणि तेइंदियाणमुगुवण्ण उक्कस्सयं ॥ ६७ ॥**

**द्वादश वर्षाणि द्वीन्द्रियाणमुत्कृष्टं भवेदायुः ।**
**रात्रिंदिनानि त्रींद्रियाणामेकोनपंचाशत् उत्कृष्टं ॥ ६७ ॥**

**टीका**—वारस वासा—द्वादशवर्षाणि, वेइंदियाणं—द्वीन्द्रियाणां शंखप्रभृतीनां उक्कस्सं—उत्कृष्टमेव, हवे—भवेत्, आऊ—आयुः । रत्तिंदिणाणि—रात्रिंदिनानि अहोरात्ररूपाणि तेइंदियाण—त्रीन्द्रियाणां गोम्यादीनां, उगुवण्ण—

एकोनपंचाशत्, उक्कस्सं—उत्कृष्टं । द्वीन्द्रियाणां प्रकृष्टमायुःद्वादशसंवत्सरा एव, त्रींद्रियाणां पुनरुत्कृष्टमायुः एकेनोनपंचाशद्रात्रिदिवसानामिति ॥ ६७ ॥

चतुरिंद्रियपंचेंद्रियाणामाह;—

**चउरिंदियाणमाऊ उक्कस्सं खलु हवेज्ज छम्मासं ।**
**पंचेंदियाणमाऊ एत्तो उड्ढं पवक्खामि ॥ ६८ ॥**

**चतुरिन्द्रियाणामायुः उत्कृष्टं खलु भवेत् षण्मासाः ।**
**पंचेंद्रियाणामायुः इत ऊर्ध्वं प्रवक्ष्यामि ॥ ६८ ॥**

**टीका**—चउरिंदियाणं—चतुरिन्द्रियाणां भ्रमरादीनां, आऊ—आयुः उक्कस्सं—उत्कृष्टं, हवेज्ज—भवेत्, छम्मासं—षण्मासाः । पंचेंदियाण—पंचेंद्रियाणां, आऊ—आयुः एतो उड्ढं—इत ऊर्द्धं विकलेंद्रियकथनोर्द्धं, पवक्खामि—प्रवक्ष्यामि प्रतिपादयिष्यामि । चतुरिन्द्रियाणामुत्कृष्टमायुः षण्मासमितं भवेत्, इत ऊर्द्धं पंचेंद्रियाणामायुर्वक्ष्यामीति ॥ ६८ ॥

तदेव प्रतिपादयति;—

**मच्छाण पुव्वकोडी परिसप्पाणं तु णवय पुव्वंगा ।**
**बादालीस सहस्सा उरगाणं होइ उक्कस्सं ॥ ६९ ॥**

**मत्स्यानां पूर्वकोटी परिसर्पाणां तु नवैव पूर्वांगानि ।**
**द्वाचत्वारिंशत् सहस्राणि उरगाणां भवति उत्कृष्टं ॥ ६९ ॥**

**टीका**—वर्ष दशगुणितं दशवर्षाणि, दशवर्षाणि दशगुणिता वर्षशतं, वर्षशतं दशगुणितं वर्षसहस्रं, वर्षसहस्रं दशगुणितं दशवर्षसहस्राणि, दशवर्षसहस्राणि दशगुणितानि वर्षशतसहस्रं, वर्षशतसहस्रं दशगुणितं दशवर्षशतसहस्राणि, दशवर्षशतसहस्राणि दशगुणितानि कोटी, दशगुणिता कोटी दशकोटी, दशकोटी दशगुणिता कोटीशतं, कोटीशतं दशगुणितं कोटीसहस्रं, कोटीसहस्रं दशगुणितं दशकोटीसहस्राणि,

दशगुणितानि दशकोटीसहस्राणि कोटीकोटीत्येवमादि कालप्रमाणं नेतव्यमिति । वर्षलक्षं चतुरशीतिरूपगुणितं पूर्वांगं भवति, पूर्वांगं चतुरशीतिगुणितं पूर्वं भवति, पूर्वस्य तु प्रमाणं सप्ततिकोटीशतसहस्राणि कोटीनां तु षट्पंचाशत्सहस्राणि चेति । प्रस्तुतं वक्ष्ये— मच्छाणं—मत्स्यानां पुव्वकोडी—पूर्वकोटी पूर्वाणां कोटी " सप्ततिकोटीशतसहस्राणि कोटीनां षट्पंचाशत्सहस्राणि च कोटीगुणितानि पूर्वकोटी भवति " । परिसप्पाणं—परिसर्पंतीति परिसर्पाः गोधेरगोधादयस्तेषां परिसर्पाणां तु णव य पुव्वंगा—नवैव पूर्वांगानि चतुरशीतिलक्षाणि नवगुणितानि बादालीसं—द्वाचत्वारिंशत्, सहस्सा—सहस्राणि, उत्तरगाथार्द्धे वर्षशब्दस्तिष्ठति तेन सह संबंधः, न पूर्वपूर्वांगाभ्यामिति, ताभ्यां सह वर्षाणां संबंधे पूर्वागमविरोधः स्यात्तस्माद्वाचत्वारिंशत्सहस्राणीति संभवंति उरगाणं—उरसा गच्छंति इति उरगाः सर्पास्तेषामुरगाणां, होदि—भवंति, उक्कस्सं—उत्कृष्टं । मत्स्यानां पूर्वकोटी परमायुः परिसर्पाणां तु नवैव पूर्वांगानि सर्पाणां पुनः परमायुर्वर्षाणां द्वाचत्वारिंशत्सहस्राणीति ॥ ६९ ॥

पक्षिणामसंज्ञिनां च परमायुः प्रमाणमाह;—

**पक्खीणं उक्कस्सं वाससहस्सा बिसत्तरी होंति ।**
**एगा य पुव्वकोडी असण्णीणं तह य कम्मभूमीणं ॥७०॥**

**पक्षिणां उत्कृष्टं वर्षसहस्राणि द्वासप्ततिः भवंति ।**
**एका च पूर्वकोटी असंज्ञिनां तथा च कर्मभौमानां ॥ ७० ॥**

टीका—पक्खीणं—पक्षिणां भैरुंडादीनां, उक्कस्सं—उत्कृष्टमायुरिति संबंधः, वाससहस्सा—वर्षसहस्राणि, विसत्तरी—द्वासप्ततिः, होंति—भवंति । एगा य—एका च, पुव्वकोडी—पूर्वकोटी असण्णणं—असंज्ञिनां मनोविरहितपंचेंद्रियाणां तह—तथा, कम्मभूमीणं—कर्मभौमानां " कर्मभौमशब्दोऽनंतराणां सर्वेषां विशेषणं " तथाशब्देन च सप्ततिशतार्यखंडप्रभवा मनुष्याः परि-

गृह्यंते । कर्मभूमिजानां पक्षिणामुत्कृष्टमायुर्द्वासप्ततिवर्षसहस्राणि भवंति, असंज्ञिनां कर्मभूमिजमनुष्याणामन्येषां कर्मभूमिप्रतिभागजानां चैका पूर्वकोटी वर्षाणां परमायुर्भवतीति ॥ ७० ॥

अथ भोगभूमिजानां किंप्रमाणं परमायुरित्यत आह;—

**हेमवदवंसयाणं तहेव हेरण्णवंसवासीणं ।**
**मणुसेसु य मेच्छाणं हवदि तु पलिदोपमं एक्कं ॥ ७१ ॥**

**हैमवतवंशजानां तथैव हैरण्यवंशवासिनाम् ।**
**मनुष्येषु च म्लेच्छानां भवति तु पल्योपमं एकं ॥ ७१ ॥**

**टीका**—हेमवदवंसयाणं–हैमवतवंशजानां, तहेव–तथैव हैरण्यवतवंशवासिनां, मणुसेसु य–मानुषेषु च मध्ये मेच्छाणं–म्लेच्छानां सर्वम्लेच्छखंडेषु जातानां भोगभूमिप्रतिभागजानां अंतर्द्वीपजानां वा समुच्चयश्चशब्देन हवदि तु भवति तु, पलिदोपमं–पल्योपममेकं । पंचसु जघन्यभोगभूमिषु हैमवतसंज्ञकासु तथा परासु पंचसु जघन्यभोगभूमिषु हैरण्यवतसंज्ञकासु च मध्ये सर्वम्लेच्छखंडेषु जातानां भोगभूमिप्रतिभागजानामन्तर्द्वीपजानां च पल्योपममेकं परमायुरिति ॥ ७१ ॥

मध्यमभोगभूमिजानां परमायुःप्रमाणमाह:—

**हरिरम्मयवंसेसु य हवंति पलिदोवमाणि खलु दोण्णि ।**
**तिरिएसु य सण्णीणं तिण्णि य तह कुरुवगाणं च ॥७२॥**

**हरिरम्यकवंशेषु च भवंति पल्योपमानि खलु द्वे ।**
**तिर्यक्षु च संज्ञिनां त्रीणि च तथा कुरवकाणां च ॥ ७२ ॥**

**टीका**—मनुष्या इत्यनुवर्त्तते, हरिरम्मयवंसेसु य हरिरम्यकवंशेषु च वंशशब्दोऽत्र प्रत्येकमभिसंबध्यते, पंचसु हरिवंशेषु मध्यमभोगभूमिषु पंचसु रम्यकवंशेषु च, हवंति–भवतः पलिदोवमाणि–पल्योपमानि, द्वे खलु स्फुटं,

द्रोण्णि—द्वे । तिरिएसु य—तिर्यक्षु च तिरश्चां वा तिर्यक्शब्दः प्रत्येकभोगभूमिषु संबध्यते, सण्णीणं—संज्ञिनां समनस्कानां "अत्र संज्ञिशब्दो भोगभूमिषु असंज्ञिनामभावप्रतिपादकः भोगभूमिजास्तिर्यंचः संज्ञिन एवेति" । तिण्णि य—त्रीणि च, तह य—तथा कुरवगाणं—कौरवकाणां चात्र कुरुवशब्द उत्तरकुरुदेवकुरुषु वर्त्तमानो गृह्यते सामान्यनिर्देशात् । पंचसु च हरिवंशेषु मध्यमभोगभूमिषु पंचसु च रम्यकवंशेषु मध्यमभागेभूमिषु च मनुष्याणां तिरश्चां च संज्ञिनां द्विपल्योपमं परमायुः, पंचसूत्तरकुरुषु पंचसु देवकुरुषु चोत्कृष्टभोगभूमिषु मनुष्याणां तिरश्चां च त्रीणि पल्योपमानि परमायुरिति॥७२॥

नारकाणां देवानां च परमायुषः स्थितिं प्रतिपादयन्नाहः—

**देवेसु णारयेसु य तेत्तीसं होंति उदधिमाणाणि ।**
**उक्कस्सयं तु आऊ वाससहस्सा दस जहण्णा ॥ ७३ ॥**

**देवेषु नारकेषु च त्रयस्त्रिंशत् भवंति उदधिमानानि ।**
**उत्कृष्टं तु आयुः वर्षसहस्राणि दस जघन्यानि ॥ ७३ ॥**

**टीका**—देवेसु-देवानामाणिमाद्यष्टर्द्धिप्राप्तानां, णारयेसु य—नारकाणां च सर्वाशुभकराणां अथवा देवेषु नारकेषु च विषये तेत्तीसं—त्रयस्त्रिंशत् त्रिभिरधिकं दशानां त्रयं, होंति—भवंति, उदधिमाणाणि सागरोपमाणि उक्कस्सयं तु-उत्कृष्टं, तु शब्दोऽवधारणार्थं । आऊ-आयुः वाससहस्सा-वर्षाणां सहस्राणि वर्षसहस्राणि, दस-दश, जहण्णं-जघन्यं, निकृष्टं । सामान्यकथनमेतत् द्रव्यार्थिकशिष्यानुग्रहनिमित्तं विस्तरतः सूत्रेणोत्तरत्र कथनं पर्यायार्थिकशिष्यानुग्रहार्थं "सर्वानुग्रहकारी च सतां प्रयासो यतस्ततः सामान्यविशेषात्मकं प्रतिपादनं युक्तमेव सामान्यविशेषात्मकत्वाच्च सर्ववस्तूनां सामान्येन प्रतिपन्ने सति विशेषस्य सुखेनावगातिर्नित्यक्षणिकैकांतवादिमतं च निराकृतं भवति । सामान्येन देवानां नारकाणां चोत्कृष्टमायुः त्रयस्त्रिंशत्सागरोपमाणि जघन्यं च देवनारकाणामायुर्दशवर्षसहस्राणीति ॥ ७३ ॥

अल्पप्रपंचत्वात्प्रथमतरं तावन्नारकाणां सामान्यसूत्रसूचितं प्रकृष्टमायुःप्रमाणं सर्वपृथिवीनां प्रतिपादयन्नाहः—

**एक्कं च तिण्णि सत्तय दस सत्तरसेव होंति बावीसा।**
**तेत्तीसमुदधिमाणा पुढवीण ठिदीणमुक्कस्सं॥ ७४॥**

**एकं च त्रीणि सप्त च दश सप्तदशैव भवंति द्वाविंशतिः।**
**त्रयस्त्रिंशत् उदधिमानानि पृथिवीनां स्थितीनामुत्कृष्टं॥ ७४॥**

**टीका**—एकं च एकं च सर्वत्रोदधिमानानीत्यनेनसंबंधः तिण्णि-त्रीणि, सत्त य-सप्त च, दस-दश, सत्तरस-सप्तदश एवकारोऽवधारणार्थः, होंति-भवंति, बावीसं द्वाविंशतिः, तेत्तीसं-त्रयस्त्रिंशत्, उदधिमाणा-उदधिमानानि, पुढवीणं-पृथिवीनां रत्नशर्करावालुकापंकधूमतमोमहातमःप्रभाणां सप्तानां यथासंख्येन संबंधः, ठिदीणं स्थितीनामायुरित्यनुवर्तते तेनायुःस्थितीनां नान्यकर्मस्थितीनां ग्रहणं भवति नापि नरकभूमिस्थितीनामिति, उक्कस्सं-उत्कृष्टं। रत्नप्रभायां त्रयोदशप्रस्तरे नारकाणामायुःस्थितेः प्रमाणमेकसागरोपमं, शर्कराप्रभायामेकादशप्रस्तरेऽधोनारकाणां परमायुःस्थितेः प्रमाणं त्रीणि सागरोपमाणि। वालुकाप्रभायां नवमप्रस्तरेऽधोनारकाणां परमायुःस्थितेः प्रमाणं दशसागरोपमाणि, धूमप्रभायां पंचमप्रस्तरे परमायुःस्थितेः प्रमाणं सप्तदशसागरोपमाणि, तमः प्रभायां तृतीयप्रस्तरे नारकाणां परमायुःस्थितेः प्रमाणं द्वाविंशतिः सागराणां। महातमः प्रभायां अवधिस्थाननरके नारकाणां परमायुः स्थितेः प्रमाणं त्रयस्त्रिंशदुदधिमानानि इति। प्रथमायां तावत्तत एवमभिसंबंधः क्रियते रत्नप्रभायां नारकाणामेकसागरोपममुत्कृष्टायुःस्थितिरित्येवं सर्वदात्र सर्वेऽपि मध्यमविकल्पा आयुःस्थितेर्वक्तव्या देशामर्शकसूत्रेण? सूचितत्वात्। प्रथमायां पृथिव्यां प्रथमप्रस्तरे सीमंतकेन्द्रके नारकाणां परमायुषः स्थितेः प्रमाणं नवतिसहस्रवर्षप्रमाणं भवति, द्वितीयेंद्रके नारकाभिख्ये वर्षाणां नवतिलक्षाणि, तृतीयकेंद्रके रौरुकनाम्नि पूर्वकोट्यस्त्वसंख्येयाः, चतुर्थे-

न्द्रके भ्रांतसंज्ञके सागरोपमस्य दशमभागः, पंचमेंद्रक उद्भ्रांताभिधाने द्वौ दशभागौ, षष्ठेंद्रके संभ्रांतसंज्ञके दशभागास्त्रयः, सप्तमेंद्रकेऽसंभ्रांतनाम्नि दशभागाश्चत्वारः, अष्टमेंद्रके विभ्रांते दशभागाः पंच, नवमेंद्रके त्रस्तसंज्ञके दशभागाः षट्, दशमेंद्रके त्रसिते दशभागाः सप्त, एकादशेंद्रके वक्रांते दशभागा अष्टौ, द्वादशेंद्रकेऽवक्रांते दशभागा नव, त्रयोदशेंद्रके विक्रांते दशभागा दश, सागरोपमस्येति सर्वत्र संबंधः । द्वितीयायां पृथिव्यां नारकाणां प्रथमेंद्रके ततकसंज्ञके परमायुषः स्थितेः प्रमाणं द्विसागरोपमस्यैकादशभागाभ्यामधिकं सागरोपमं, द्वितीयेंद्रके स्तनके सागरोपममेकादशचतुर्भागैराधिकं, तृतीयेंद्रके मनके सागरोपमं षड्भिरेकादशभागैरधिकं, चतुर्थेंद्रके वनके सागरोपममेकादशभागैरष्टभिरधिकं, पंचमेंद्रके घाटसंज्ञके सागरोपममेकादशभागैर्दशभिरधिकं, षष्ठेंद्रके संघाटकसंज्ञके द्वे सागरोपम एकादशभागेनाधिके, सप्तमेंद्रके जिह्वाख्ये द्वे सागरोपमे त्रिभिरेकादशभागैरधिके, अष्टमेंद्रके जिह्विकनाम्नि द्वे सागरोपमे पंचभिरेकादशभागैरधिके, नवमेंद्रके लोलनामके द्वे सागरोपमे सप्तभिरेकादशभागैरधिके, दशमेंद्रके लोलुपाख्ये द्वे सागरोपमे नवभिरेकादशभागैरधिके, एकादशेंद्रके स्तनलोलुपनाम्नि उक्तान्येव त्रीणि सागरोपमाणीति । तृतीयायां पृथिव्यां प्रथमेंद्रके तप्तनाम्नि नारकाणां परमायुषः प्रमाणं त्रीणि सागरोपमाणि सागरोपमस्य नवभागैश्चतुर्भागैरभ्याधिकानि, द्वितीयेंद्रके त्रस्तनामके सागरास्त्रयो नवाष्टभागैरभ्यधिकाः, तृतीयके तपनसंज्ञके चत्वारः सागरा नवभागैस्त्रिभिरभ्यधिकाः, चतुर्थप्रस्तरे तापनाख्ये चत्वारः सागराः सप्तभिर्नवभागैरभ्यधिकाः, पंचमेंद्रके निदाघाख्ये पंच सागरा नवभागा द्वाभ्यामधिकाः, षष्ठेंद्रके प्रज्वलिते पंच सागराः नवभागैः षड्भिरभ्यधिकाः सप्तमेंद्रके ज्वलिते षट् सागरा नवभागेनैकेनाभ्यधिकाः, अष्टमेंद्रके संज्वलिते षट् पयोधयो नवभागैः पंचभिरभ्यधिकाः, नवमेंद्रके संज्वलिते उक्तान्येव सप्तसागरोपमाणि । चतुर्थ्यां पृथिव्यां नारकाणां परमायुषः प्रमाणं—प्रथमेंद्रक आरनाम्नि सप्त पयोधयः त्रिभिः सप्तभागैर-

---

१ व्युत्क्रान्त इत्यपि पाठान्तरम् । २ संस्तनक इति च ।

भ्यधिकाः, द्वितीयेंद्रके तारसंज्ञके सप्त समुद्राः सप्तभागैः षड्भिरभ्यधिकाः, तृतीयेंद्रके मारनाम्नि पयोधयोऽष्टौ सप्तभागाभ्यां द्वाभ्यामधिकाः, चतुर्थेंद्रके वर्चस्कनाम्नि सागरा अष्टौ पंचभिः सप्तभागैरभ्याधिकाः, पंचमेंद्रके तमके नव सागराः सप्तभागेनाधिकाः, षष्ठेंद्रके खरनाम्नि नव सागराश्चतुर्भिः सप्तभागैरभ्याधिकाः, सप्तमेंद्रके खडखडे उक्तान्येव दशसागरोपमाणि। पंचम्यां पृथिव्यां नारकाणां परमायुःप्रमाणं—प्रथमेंद्रके तमोनाम्नि एकादशार्णवा द्विसागरस्य पंचभागाभ्यामधिकाः, द्वितीयेंद्रके भ्रमरसंज्ञके द्वादश सागराश्चतुर्भिः पंचभागैरभ्यधिकाः, तृतीयेंद्रके ऋषभनाम्नि चतुर्दश पयोधयः पंचभागेनाऽप्यधिकाः, चतुर्थेंद्रकेऽधःसंज्ञके पंचदशोदधयस्त्रिभिः पंच भागैरभ्यधिकाः, पंचमेंद्रके तमिस्राभिधाने कथितान्येव सप्तदशसागरोपमाणि। षष्ठयां पृथिव्यां नारकाणां परमायुः—प्रथमेंद्रके हिमनाम्नि सागरोपमस्य द्वित्रिभागाभ्यामधिका अष्टादशपयोधयः, द्वितीयेंद्रके वर्दलसंज्ञके विंशतिपयोधयस्त्रिभागेनाप्यधिकाः, तृतीयेंद्रके लल्लकनाम्नि उक्तान्येव द्वाविंशतिसागरोपमाणि, सप्तम्यां तु पृथिव्यामवधिस्थानसंज्ञकेंद्रके नारकाणां त्रयस्त्रिंशत्सागरोपमाण्येव परमायुषः। श्रेणिबद्धेषु प्रकीर्णकेषु च नारकाणां स्वकीयेंद्रकप्रतिबद्धमुत्कृष्टमायुर्वेदितव्यं। यदल्पं तन्मुखं मुखं भूमेर्विशोध्य विशुद्धं च शेषमुच्छ्रयभाजितमिच्छया गुणितं मुखसहितं च कृत्वा सर्वत्र वाच्यमिति॥ ७४॥

सर्वपृथिवीषु नारकारणां जघन्यस्थितिमायुषः प्रतिपादयन्नाह;—

**पढमादियमुक्कस्सं बिदियादिसु साधियं जहण्णत्तं।**
**धम्मायभवणविंतर वाससहस्सा दस जहण्णं॥ ७५॥**

**प्रथमादिकमुत्कृष्टं द्वितीयादिषु साधिकं जघन्यं।**
**धर्माभवनव्यंतराणां वर्ष सहस्राणि दश जघन्यं॥ ७५॥**

**टीका—** प्रथमादिर्यस्य तत्प्रथमादिकं आयुरिति संबध्यते, उक्कस्सं—उत्कृष्टं, बिदियादिसु—द्वितीयाआदिर्यासां ता द्वितीयादयस्तासु द्वितीयादिषु

पृथिवीषु, साधियं—साधिकं समयाधिकं, जहण्णत्तं—जघन्यं तत् । प्रथमायां यदुत्कृष्टं द्वितीयायां समयाधिकं जघन्यं तदायुस्तथा द्वितीयायां यदुत्कृष्ट-मायुर्नारकाणां, तृतीयायां नारकाणां समयाधिकं जघन्यं तत् । तृतीया-यामुत्कृष्टं यदायुश्चतुर्थ्यां समयाधिकं जघन्यं तत्, चतुर्थ्यां यदुत्कृष्टमायुः पंचम्यां समयाधिकं जघन्यं तत् । पंचम्यामुत्कृष्टं यदायुः षष्ठ्यां समयाधिकं जघन्यं तत् षष्ठ्यामुत्कृष्टं यदायुः सप्तम्यां समयाधिकं जघन्यं तत् । एवं सर्वासु पृथिवीषु सर्वप्रस्तरेषु सर्वेंद्रकेषु योज्यं, प्रथमेंद्रके यदुत्कृष्टमायुर्नार-काणां द्वितीयेंद्रके समयाधिकं जघन्यं तत्, द्वितीयेंद्रके यदुत्कृष्टमायुस्तृतीयें-द्रके समयाधिकं जघन्यं तत् । एवमेकान्नपंचाशदिंद्रकेषु नेतव्यमिति । अथ केषां नारकाणां देवानां च जघन्यमायुर्दशवर्षसहस्राणीत्यत आह;—
धम्माय—धर्मायां सीमंतके नारके नारकाणां भवण—भवनवासिनां, विंतर—व्यंतराणां, वाससहस्सा—वर्षसहस्राणि, दस—दश, जहण्णा—जघन्यायुषः स्थितिः । सीमंतकनरके नारकाणां भवनावासिनां देवानां व्यंतराणां च जघन्यमायुर्दशवर्षसहस्राणीति ॥ ७५ ॥

भवनवासिनां व्यंतराणां चोत्कृष्टमायुःप्रमाणं प्रतिपादयन्नाह;—

**असुरेसु सागरोवम तिपल्ल पल्लं च णागभोमाणं ।**
**अद्धाद्दिज्ज सुवण्णा दु दीव सेसा दिवड्ढं तु ॥ ७६ ॥**

**असुरेषु सागरोपमं त्रिपल्यं पल्यं च नागभौमानां ।**
**अर्धतृतीये सुपर्णानां द्वे द्वीपानां शेषाणां द्व्यर्धं तु ॥ ७६ ॥**

**टीका**—असुरेसु—असुराणां भवनवासिनां प्रथमप्रकाराणां अंबावरीषा-दीनां, सागरोवम—सागरोपमं, तिपल्ल—त्रीणि पल्यानि त्रिपल्योपमानि, पल्लं च—पल्यं च पल्योपमं णागभोमाणं—नागेंद्राणां—धरणेंद्रादीनां, भोमाणं—भौमानां व्यंतराणां किंनरेंद्राणां यथासंख्येन संबंधः नागेंद्राणा-मुत्कृष्टमायुस्त्रीणि पल्योपमानि व्यंतराणां किंनरादीनामुत्कृष्टमायुरेकं पल्यो-

पमं घातायुरपेक्ष्य सार्धपल्यं । अद्धादिज्ज अर्धतृतीये द्विपल्योपमे पल्यो- मार्धाधिके द्वे पल्योपमे, सुवण्णा-सुपर्णकुमाराणां, तु-दु द्वे पल्योपमे दीव-द्वीपानां द्वीपकुमाराणां, सेसा-शेषाणां विद्युदग्निस्तनितोदधि- दिग्वायुकुमाराणां दिवड्ढं तु अर्धाधिकं पल्योपमं पल्योपमार्द्धेनाधिकमेकं पल्योपमं । सुपर्णकुमाराणां प्रकृष्टमायुर्द्वे पल्योपमे पल्योपमार्द्धाधिके, द्वीपकुमाराणां च द्वे पल्योपमे प्रकृष्टमायुः शेषाणां तु कुमाराणां षण्णां पल्योपमं पल्योपमार्द्धाधिकमुत्कृष्टमायुरिति ॥ ७६ ॥

ज्योतिषां जघन्योत्कृष्टमायुः शक्रादीनां च जघन्यं प्रतिपादयन्नाह;—

**पल्लट्ठभाग पल्लं च साधियं जोदिसाण जहण्णिदरम् ।**
**हेट्ठिल्लुक्कस्सठिदी सक्कादीणं जहण्णा सा ॥ ७७ ॥**

**पल्याष्टभागः पल्यं च साधिकं ज्योतिषां जघन्यमितरत् ।**
**अध उत्कृष्टस्थितिः शक्रादीनां जघन्या सा ॥ ७७ ॥**

**टीका**— पल्लट्ठभाग-पल्याष्टभागः पल्योपमस्याष्टभागः, पल्लं च- पल्योपमं च, साधियं-साधिकं वर्षलक्षेणाधिकं, जोदिसाण-ज्योतिषां चंद्रादीनां, जहण्णिदरं-जघन्यमितरच्च । ज्योतिषां जघन्यमायुः पल्यो- पमस्याष्टभाग उत्कृष्टं च पल्योपमं वर्षलक्षाधिकं घातायुरपेक्ष्य पल्योपमं सार्द्धमुत्कृष्टं । हेट्ठिल्लुक्कस्सठिदी-अध उत्कृष्टायुः स्थितिः, अधःस्थितानां ज्योतिष्कादीनां सक्कादीणं-शक्रादीनां सौधर्मादिदेवानां, जहण्णा सा- जघन्या सा । ज्योतिषां योत्कृष्टायुषः स्थितिःसौधर्मैशानयोः समयाधिका जघन्या सा सौधर्मैशानयोरुत्कृष्टायुषः स्थितिः सनत्कुमारमाहेंद्रयोर्देवानां समयाधिका जघन्या सा, सानत्कुमारमाहेन्द्रयोर्योत्कृष्टा ब्रह्मब्रह्मोत्तरयोः समयाधिका जघन्या सा । एवं योज्यं यावत् त्रयस्त्रिंशत्सागरोप- माणीति ॥ ७ ॥

अथ कोत्कृष्टाऽऽयुषः स्थितिः शक्रादीनां या जघन्या स्यादित्यत आह;—

**वे सत्त दसय चोद्दस सोलस अट्ठार वीस वावीसा ।**
**एयाधिया य एत्तो सक्कादिसु सागरुवमाणं ॥ ७८ ॥**

**द्वे सप्त दश चतुर्दश षोडश अष्टादश विंशतिः द्वाविंशतिः ।**
**एकाधिका च इतः शक्रादिषु सागरोपमानं ॥ ७८ ॥**

टीका—वे–द्वे, सत्त–सप्त, दस य–दश च, चोद्दस–चतुर्दश, सोलस–षोडश, अट्ठार–अष्टादश, वीस–विंशतिः, वावीस–द्वाविंशतिः, एयाधिया–एकाधिका एकैकोत्तरा, एत्तो–इतो द्वाविंशतेरूर्द्ध्वं सक्कादिसु–शक्रादिषु सौधर्मैशानादिषु, सागरुवमाणं–सागरोपमानं । सौधर्मैशानयोर्देवानां द्वे सागरोपमे परमायुषः स्थितिरघातायुषोऽपेक्ष्यैतदुक्तं सूत्रे, घातायुषोऽपेक्ष्य पुनर्द्वे सागरोपमे सागरोपमार्धेनाधिके भवतः. एवं सौधर्मैशानमारभ्य तावदर्द्धसागरोपमेनाधिकं कर्त्तव्यं सूत्रनिर्दिष्टपरमायुर्यावत्सहस्रारकल्पः उपरि घातायुषः समुत्पत्तेरभावात् । सनत्कुमारमाहेंद्रयोः सप्त सागरोपमाणि परमायुषः स्थितिः सर्वत्र देवानामिति संबंधनीयं, ब्रह्मब्रह्मोत्तरयोर्दश सागरोपमाणि, किंतु लौकांतिकदेवानां सारस्वतादीनामष्टौ सागराः, लांतवकापिष्ठयोश्चतुर्दश सागराः, शुक्रमहाशुक्रयोः षोडशाब्धयः, शतारसहस्रारयोरष्टादश पयोधयः, आनतप्राणतयोर्विंशतिः सागरोपमानां, आरणाच्युतयोर्द्वाविंशतिः सागरोपमानां, सुदर्शने त्रयोविंशतिरब्धीनां, अमोघे चतुर्विंशतिः पयोधीनां, सुप्रबुद्धे पंचविंशतिरुदधीनां, यशोधरे षड्विंशतिर्नदीपतीनां, सुभद्रे सप्तविंशतिरुदधीनां, सुविशालेऽष्टाविंशतिरब्धीनां, सुमनस्येकान्नत्रिंशदुदधीनां, सौमनसे त्रिंशदर्णवानां, प्रीतिंकरे एकत्रिंशदुदधीनां, अनुदिशि द्वात्रिंशदुदधीनां, सर्वार्थसिद्धौ त्रयस्त्रिंशत्सागरोपमानामेवं त्रिषष्टिपटलेषु चतुरशीतिलक्षविमानेषु त्रयोविंशत्यधिकसप्तनवतिसहस्राधिकेषु श्रेणिबद्धप्रकीर्णकसंज्ञाविमानेषु देवानां स्वकीयस्वकीयेंद्रकवद्देवायुषः प्रमाणं वेदितव्यं । ऋतुविमलचंद्रवल्गुवीरारुणनंदननलिनकांचनरोहित चंचन्मारुतार्द्धिईशानवैडूर्यरुचकरुचिरांकस्फटिकतपनीयमेघाभ्र–हारिद्रपद्मलोहिताख्यवज्रनंद्यावर्त्तप्रभंकरपृष्ठंकरांजनमित्र-

प्रभाख्यान्येकत्रिंशदिंद्रकाणि सौधर्मेशानयोः । अंजनवनमालानागगरुड-लांगलबलभद्रचक्राणि सप्तकेंद्रकाणि सनत्कुमारमाहेंद्रयोः । अरिष्टदेवसंमित ब्रह्मब्रह्मोत्तराणि चत्वारींद्रकाणि ब्रह्मलोके । ब्रह्महृदयलांतवे चंद्रके लांतवकल्पे महाशुक्रकल्पे शुक्रमेकमिंद्रकं, शतारमेकमिन्द्रकं सहस्रारकल्पे, प्राणतकल्पे आनतप्राणतपुष्पकाणि त्रीणींद्रकाणि, अच्युतकल्पे सानत्कुमारारणाच्युतानींद्रकाणि त्रीणि, अधोग्रैवेयके सुदर्शनामोघसुप्रबुद्धानि त्रीणीन्द्रकाणि, मध्यमग्रैवेयके यशोधरसुभद्रसुविशालानि त्रीणीन्द्रकाणि, ऊर्ध्वग्रैवेयके सुमनःसौमनसप्रीतिंकराणि त्रीणींद्रकाणि, अनुदिश आदित्यमेकमिंद्रकं अनुत्तरे सर्वार्थसिद्धिसंज्ञकमेकमिंद्रकं, इत्येतेषु स्वायुषः प्रमाणं वेदितव्यं । अत्र सौधर्मे प्रथमप्रस्तरे ऋतुसंज्ञके उत्कृष्टमायुरर्द्धसागरोपमं तन्मुखं तत्रैवावसानेंद्रके उत्कृष्टमायुर्द्वे सागरोपमे सागरोपमार्द्धाधिके तद्भूमिरुच्छ्रयस्त्रिंशदिंद्रकाणि भूमेर्मुखमपनीयोच्छ्रायेण भागे हृते सागरोपमस्य पंचदशभागो वृद्धिरागच्छति इमामिष्टप्रतरसंख्यया गुणयित्वा मुखे प्रक्षिप्ते विमलादीनां त्रिंशतः प्रस्ताराणामुत्कृष्टान्यायूंषि भवंति । तेषां संदृष्टयः—न्यास इत्थम् ।

५
१५

| १७ | ५९ | ७ | २३ | ५ | २७ | २९ | ३१ | ११ | ७ | ३७ | १३ | ४१ | ३ | ४७ | ४९ | १७ | ५३ | ११ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ३० | ३० | १० | ३० | ६ | ३० | ३० | ३० | १० | ६ | ३० | १० | ३० | ३ | ३० | ३० | १० | ३० | ६ |

| १९ | ५९ | ६१ | ४३ | २१ | १३ | ६० | ३३ | ७१ | ७३ | २ |
|---|---|---|---|---|---|---|---|---|---|---|
| १० | ३० | ३० | ३० | १० | ६ | ३० | १० | ३० | ३० | २ |

सनत्कुमारमाहेंद्रयोः सप्तेंद्रकाणि तत्र द्वे सागरोपमे सागरोपमार्द्धाधिके मुखं सार्द्धसप्तसागरोपमाणि भूमिः सप्तेंद्रकाणि उच्छ्रयः, भूमेर्मुखं विशोध्योच्छ्रयेण भागे हृते वृद्धिरागच्छति तामिष्टप्रतरसंख्यया गुणयित्वा मुखसहिता कृतैवं भवति ।

| | | | | | | |
|---|---|---|---|---|---|---|
| ३ | ३ | ४ | ५ | ६ भा. | ६ | ७ |
| ३ | १३ | ९ | ५ | १ | ११ | १ |
| १४ भा. | १४ भा. | १४ भा | १४ भा | १४ भा. | १४ भा. | २ |

ब्रह्मब्रह्मोत्तरयोश्चत्वारः अत्र सप्त सार्द्धानि सागरोपमाणिमुखं दशसार्धानि भूमिश्चत्वार उच्छ्रयस्तस्य संदृष्टिर्यथा;—

| | | | |
|---|---|---|---|
| ८ | ९ सा | ९ | १० |
| १ भा. | ० ग | ३ भा. | १ भू |
| ४ भा. | ० र | ४ भा. | २ मि१० |

लांतवकापिष्ठयोः द्वौ प्रस्तरौ तत्र मुखं सार्द्धानि दश सार्धानि चतुर्दश भूमिर्द्वावुच्छ्रयौ—

| | |
|---|---|
| १२ | १४ |
| १ | १ |
| २ | २ |

महाशुक्रे एक, प्रस्तरः तत्रायुः प्रमाणं | १६ १ २ | तथा सहस्रारे एक प्रस्तरः तत्रायुः प्रमाणं | १८ १ २ | आनतप्राणतकल्पयोः त्रयः प्रस्तारास्तत्र विंशतिर्मुखं द्वाविंशतिर्भूमिः तस्य संदृष्टिः

| | | |
|---|---|---|
| २० | २१ | २२ |
| २ | १ | ० |
| ३ | ३ | ० |

शेषाणां संदृष्टिः २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । वेदितव्येति ॥ ७८ ॥

सौधर्मादिदेवीनां परमायुषः प्रमाणं प्रतिपादयन्नाह;—

**पंचादी वेहिं जुदा सत्तावीसा य पल्ल देवीणं ।**
**तत्तो सत्तुत्तरिया जावदु अरणप्पयं कप्पं ॥ ७९ ॥**

**पंचादीनि द्वाभ्यां युतानि सप्तविंशतिः पल्यानि देवीनां ।**
**ततः सप्तोत्तराणि यावत् आरणाच्युतं कल्पः ॥ ७९ ॥**

**टीका**—पंचादी–पंच आदि पंचपल्योपमानि मूलं, वेहिं जुदा–द्वाभ्यां युक्तानि द्वाभ्यां द्वाभ्यामधिकानि वीप्सार्थो द्रष्टव्यः उत्तरोत्तरग्रहणात् । सत्ता वीसा य–सप्तविंशतिः "चशब्दो यावच्छन्दं समुच्चिनोति" पल्ल–पल्यानि पल्योपमानि यावत्सप्तविंशतिः पल्योपमानि, देवीणं–देवीनां देवपत्नीनां, तत्तो ततः पल्यानां सप्तविंशतेरूर्द्ध्वं सत्त–सप्तसप्त उत्तरिया–उत्तराणि सप्तसप्ताधिकानि पल्योपमानि जावदु–यावत्, अरणप्पयंकप्पं–अच्युतकल्पः तावत् । सौधर्मकल्पे देवीनां परमायुः पंचपल्योपमानि, ईशाने सप्त पल्योपमानि, सनत्कुमारे नव पल्योपमानि, माहेंद्रे एकादश पल्योपमानि, ब्रह्मकल्पे त्रयोदश पल्योपमानि, ब्रह्मोत्तरे पंचदश पल्योपमानि, लांतवे सप्तदश पल्योपमानि, कापिष्ठे एकान्नविंशतिः पल्योपमानि, शुक्रे एकविंशतिः पल्योपमानि, महाशुक्रे त्रयोविंशतिः पल्योपमानि, शतारे पंचविंशतिः पल्योपमानां, सहस्रारे सप्तविंशतिः पल्यानां, आनते चतुस्त्रिंशत्पल्योपमानि, प्राणते एकाधिक चत्वारिंशत् पल्यानां, आरणे अष्टचत्वारिंशत्पल्यानां, अच्युते पंचपंचाशत्पल्यानां सर्वत्र देवीनां परमायुषः प्रमाणमिति संबंधः । पंचपल्योपमानि द्वाभ्यां द्वाभ्यां तावदधिकानि कर्त्तव्यानि यावत्सप्तविंशतिः पल्योपमानि भवंति, ततः सप्तविंशतिः सप्तभिः सप्तभिरधिका कर्तव्या यावदच्युतकल्पे पंचपंचाशत्पल्योपमानि संजातानीति ॥ ७९ ॥

देवीनामायुषः प्रमाणस्य द्वितीयमुपदेशं प्रतिपादयन्नाह;—

**पणयं दस सत्तधियं पणवीसं तीसमेव पंचधियं ।**
**चत्तालं पणदालं पण्णाओ पण्णपण्णाओ ॥ ८० ॥**

**पंच दश सप्ताधिकानि पंचविंशतिः त्रिंशत् एव पंचाधिका ।**
**चत्वारिंशत् पंचचत्वारिंशत् पंचाशत् पंचपंचाशत् ॥ ८० ॥**

**टीका**—पणयं–पंच सौधर्मैशानयोर्देवीनां पंचपल्योपमानि परमायुः । दस सत्तधियं–दश सप्ताधिकानि सनत्कुमारमाहेंद्रयोर्देवीनां परमायुः सप्तदशपल्योपमानि पणवीसं–पंचविंशतिः ब्रह्मब्रह्मोत्तरयोर्देवीनां पंचविंशतिः पल्योपमानि परमायुः, तीसमेव पंचधियं–त्रिंशदेव पंचाधिका लांतवकापिष्ठयोर्देवीनां त्रिंशदेवपंचाधिका पल्योपमानां परमायुः, चत्तालं–चत्वारिंशच्छुक्रमहाशुक्रयोर्देवीनां चत्वारिंशत्पल्यानां परमायुः, पणदालं पंचचत्वारिंशत् शतारसहस्रारयोर्देवीनां पंचचत्वारिंशत्पल्योपमानां परमायुः, पण्णासं–पंचाशत् आनतप्राणतयोर्देवीनां परमायुः पंचाशत्पल्योपमानि, पण्णपण्णाओ–पंचपंचाशदारणाच्युतयोर्देवीनां परमायुषः प्रमाणं पंचपंचाशत्पल्योमानि । आऊ–आयुः सर्वत्रानेन संबंधः । देवायुषः प्रतिपादनन्यायेनायमेवोपदेशो न्याय्योऽत्रैवकारकरणादथवा द्वावप्युपदेशौ ग्राह्यौ सूत्रद्वयोपदेशात् द्वयोर्मध्य एकेन सत्येन भवितव्यं, नात्र संदेहमिथ्यात्वं, यदर्हत्प्रणीतं तत्सत्यमिति संदेहाभावात् । छद्मस्थैस्तु विवेकः कर्त्तुं न शक्यतेऽतो मिथ्यात्वभयादेव द्वयोर्ग्रहणमिति ॥ ८० ॥

ज्योतिषां यद्यपि सामान्येन प्रतिपादितं जघन्यं चोत्कृष्टमायुस्तथापि स्वामित्वपूर्वको विशेषो नावगतस्तत्र तत्प्रतिपादनायाह;—

**चंदस्स सदसहस्सं सहस्स रविणो सदं च सुक्कस्स ।**
**वासाधिए हि पल्लं लेहिट्ठं वरिसणामस्स ॥ ८१ ॥**

**चंद्रस्य शतसहस्रं सहस्रं रवेः शतं च शुक्रस्य ।**
**वर्षाधिकं हि पल्यं लघिष्ठं वर्षनाम्नः ॥ ८१ ॥**

टीका—परमायुरित्यनुवर्त्तते–चंदस्स–चंद्रस्य, सदसहस्सं–शतसहस्रं, शतसहस्रेण, अत्र तृतीयार्थे द्वितीया, सहस्स–सहस्रेण, रविणो–रवेरादित्यस्य, शतं च–शतेन च, सुक्कस्स–शुक्रस्य, वास–वर्षाणां, अधियं–आधिकं, हि–स्फुटं निश्चयेन, पल्लं–पल्यं, पल्योपमं, लेहिट्ठं–न्यूनं हीनं अनंतरेण शतेनाभिसंबंधः, वरिसणामस्स–वर्षनाम्नः बृहस्पतेः । चंद्रस्य परमायुरेकं पल्योपमं वर्षाणां शतसहस्रेणाधिकं, रवेरेकं पल्योपमं परमायुर्वर्षाणां सहस्रेणाधिकं, शुक्रस्य परमायुरेकं पल्योपमं वर्षाणां शतेनाधिकं, बृहस्पतेरेकं पल्योपमं वर्षाणां शतेन न्यूनं स्फुटमिति ॥ ८१ ॥

अथ कथं शेषाणामित्यत आह;—

**सेसाणं तु गहाणं पल्लद्धं आउगं मुणेयव्वं ।**
**ताराणं च जहण्णं पादद्धं पादमुक्कस्सं ॥ ८२ ॥**

**शेषाणां तु ग्रहाणां पल्यार्द्धं आयुः मंतव्यं ।**
**ताराणां च जघन्यं पादार्धं पादमुत्कृष्टं ॥ ८२ ॥**

टीका—सेसाणं–शेषाणां, तुशब्दः समुच्चयार्थः स नक्षत्राणि समुच्चिनोति । गहाणं–ग्रहाणां, पल्लद्धं–पल्यस्यार्द्धं, आउगं–आयुः, मुणेयव्वं–ज्ञातव्यं, । ताराणं–ताराणां ध्रुवकीलकादीनां, चशब्दात्केषांचिन्नक्षत्राणां च, जहण्णं–जघन्यं निकृष्टं पादद्धं–पादार्द्धं पल्योपमपादस्यार्द्धं पल्योपमस्याष्टमो भागः, पादं–पादः पल्योपमस्य चतुर्थो भागः उक्कस्सं–उत्कृष्टं, शेषाणां ग्रहाणां मंगलबुधशनैश्चरराहुकेत्वादीनां केषांचिन्नक्षत्राणां चोत्कृष्टमायुः पल्योपमार्द्धं ताराणां केषांचिन्नक्षत्राणां चोत्कृष्टमायुः पल्योपमस्य चतुर्थो भाग तेषामेव च जघन्यमायुः पल्योपमस्याष्टमभागः । एवं प्रतरासंख्यातभागप्रमितानां ज्योतिषां परमायुर्निकृष्टायुश्च वेदितव्यमिति ॥ ८२ ॥

तिर्यङ्मनुष्याणां निकृष्टमायुः प्रतिपादयन्नाह;—

**सव्वेसिं अमणाणं भिण्णमुहुत्तं हवे जहण्णेण ।**
**सोवक्कमाउगाणं सण्णीणं चावि एमेव ॥ ८३ ॥**

**सर्वेषां अमनस्कानां भिन्नमुहूर्तं भवेत् जघन्येन।**
**सोपक्रमायुष्काणां संज्ञिनं चापि एवमेव ॥ ८३ ॥**

टीका— सव्वेसिं–सर्वेषां, अमणाणं–अमनस्कानां सर्वग्रहणादेकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिंद्रियाणां च ग्रहणं वेदितव्यं भिण्णमुहुत्तं–भिन्नमुहूर्तं क्षुद्रभवग्रहणमुच्छ्वासस्य किंचिन्न्यूनाष्टादशभागः, हवे–भवेत्, जहण्णेण–जघन्येन जघन्यं वा, सोवक्कमाउगाणं–उपक्रम्यत इति उपक्रमः विषवेदनारक्तक्षयभयसंक्लेशशस्त्रघातोच्छ्वासनिश्वासनिरोधैरायुषो घातः, सह उपक्रमेण वर्तत इति सोपक्रममायुर्येषां ते सोपक्रमायुषः सघातायुषस्तेषां सोपक्रमायुषां, सण्णीणं–संज्ञिनां समनस्कानांच चशब्दो मनुष्याणां समुच्चयार्थस्तेनात्र त्रिषष्टिशलाकापुरुषचरमदेहवर्जितमनुष्याणां ग्रहणं भवति। सोपक्रमविशेषणेन च देवनारकभोगभूमिजभोगभूमिप्रतिभागजानां प्रतिषेधो भवति, अवि एमेव=अप्येवमेव भिन्नमुहूर्त्तमेव किंतु पूर्वोक्ताद्भिन्नमुहूर्त्तादयं भिन्नमुहूर्तो महान्, एकेंद्रियेषु क्षुद्रभवग्रहणं यतोऽतोऽप्येवमेव ग्रहणेन सूचितमेतदर्थजातं, अपर एवकारो निश्चयार्थः। सर्वेषाममनस्कानां जघन्यमायुर्भिन्नमुहूर्तं भवेत् सोपक्रमायुषां कर्मभूमिजानां कर्मभूमिप्रतिभागजानां च संज्ञिनां तिरश्चां त्रिषष्टिशलाकापुरुषचरमदेहादिवर्जितमनुष्याणां चाप्येव जघन्यमायुरंतर्मुहूर्तमेवेति ॥ ८३ ॥

यद्यपि प्रमाणं पूर्वसूत्रैः व्याख्यातं तथापि विशेषेण प्रमाणं द्रव्यक्षेत्रकालभावभेदेन चतुर्विधं, तत्र द्रव्यप्रमाणं द्विविधं संख्यातप्रमाणमुपमाप्रमाणं चेति तत्र संख्यातप्रमाणं तावन्निरूपयन्नाह,—

**संखेज्जमसंखेज्जं विदियं तदियमणंतयं वियाणाहि।**
**तत्थ य पढमं तिविहं णवहा णवहा हवे दोण्णि ८४**

**संख्यातमसंख्यातं द्वितीयं तृतीयं अनंतं विजानीहि।**
**तत्र च प्रथमं त्रिविधं नवधा नवधा भवेतां द्वे ॥ ८४ ॥**

१ अस्मादग्रे ' पाठः ' इति पाठः प्रेसपुस्तके।

**टीका**—संखेज्जं–संख्यातं रूपद्वयमादिंकृत्वा यावद्रूपोनजघन्यपरीतासंख्यातं श्रुतज्ञानविषयभूतं, असंखेज्जं–असंख्यातं संख्यामतिक्रांतमवधिज्ञानविषयभूतं, विदियं–द्वितीयं, तदियं–तृतीयं, अणंत्तयं–अनंतं असंख्यातमतिक्रांतं केवलज्ञानगोचरं वियाणाहि–विजानीहि, तत्थ य तत्र च तेषु संख्यातासंख्यातानंतेषु मध्ये पढमं–प्रथमं यत्संख्यातं तिविहं–त्रिविधं त्रिप्रकारं जघन्यमध्यमोत्कृष्टभेदेन; णवहा–नवधा नवप्रकारं, दोण्णि–द्वे, के ते ? द्वितीयतृतीये। प्रथमं यत्संख्यातं तत्त्रिविधं, द्वितीयं यदसंख्यातं तन्नवप्रकारं, तृतीयं यदनंतं तदपि नवप्रकारं। तत्र जघन्यसंख्यातं द्वे रूपे, रूपत्रयमादिं कृत्वा यावद्रूपोनोत्कृष्टं संख्यातं तत्सर्वमजघन्योत्कृष्टसंख्यातं, जघन्यपरीतासंख्यातं रूपोनमुत्कृष्टं संख्यातं; अस्यानयनविधानमुच्यते–प्रमाणयोजनलक्षायामविस्तारावगाधाश्चत्वारः कुशूलाः शलाकाप्रतिशलाकामहाशलाकानवस्थितसंज्ञकास्तत्रैकमनवस्थितसंज्ञकं कुशूलं सर्षपपूर्णं कृत्वा देवो दानवो वा तत्रैकैकं सर्षपं द्वीपे समुद्रे तावत्क्षिपेत् यावद्रिक्तः संजातः, ततः शलाकाकुंडे एकं सर्षपं क्षिपेत् अनवस्थितं कुंडं तावन्मात्रं पुनः प्रकृत्य सर्षपैश्च संपूर्णं कृत्वा द्वीपे समुद्रे च क्षिपेत् यत्र निष्ठितस्तत्र शलाकाकुंडे द्वितीयमेवं सर्षपं क्षिपेत् अनवस्थितं च कुंडं तावन्मात्रं प्रकृत्य सर्षपैश्च पूर्णं कृत्वा द्वीपेसमुद्रे च क्षिपेत्। यत्र निष्ठितस्तत्र शलाकाकुंडे तृतीयं सर्षपं क्षिपेत्। अनवास्थितकुंडं च तावन्मात्रं प्रकृत्य सर्षपैश्च संपूर्णं कृत्वा द्वीपे समुद्रे च सर्षपक्षेपं, चतुर्थप्रदेशे शलाकाकुंडे सर्षपक्षेपं चैवं तावत्कर्त्तव्यं यावच्छलाकाप्रतिशलाकामहाशलाकानवस्थितानि कुंडानि सर्वाणि पूर्णानि तदोत्कृष्टसंख्यातमतिलंध्य जघन्यपरीतासंख्यातप्रमाणं जातं तस्मादेके सर्षपेऽपनीते जातमुत्कृष्टसंख्यातं। * असंख्यातं च परीतासंख्यातं युक्तासंख्यात-

१ विषयं ख–ग। २ तत्त्रिप्रकारं ख–ग। ३ मानवो वा प्रेस–पुस्तके।

* पुष्पमध्यगतः पाठः ख–ग पुस्तकाच्च्युतः।

मसंख्यातासंख्यातामिति त्रिविधं, परीतासंख्यातमपि जघन्यमध्यमोत्कृष्ट-भेदेन त्रिविधं युक्तासंख्यातमसंख्यातासंख्यातं च जघन्यमध्यमोत्कृष्टभेदेन त्रिविधं, तथानंतमपि परीतानंतयुक्तानंतानंतानंतभेदेन त्रिविधमेकैकं जघन्यमध्यमोत्कृष्टभेदेन त्रिविधं । जघन्यपरीतासंख्यातानि जघन्यपरीता-संख्यातमात्राणि परस्परगुणितानि कृत्वा तत्र यावन्मात्राणि रूपाणि तावन्मात्रं जघन्ययुक्तासंख्यातप्रमाणं तस्मादेके रूपेऽपनीते * उत्कृष्टं परीतासंख्यातप्रमाणं जातं जघन्यपरीतासंख्यातोत्कृष्टपरीतासंख्यातयोर्मध्ये विकल्पोऽजघन्योत्कृष्टपरीतासंख्यातं, युक्तासंख्यातं अपरेण युक्तासंख्यातेन प्रगुण्य यावन्मात्राणि रूपाणि तावन्मात्रं जघन्यासंख्यातासंख्यातं तस्मादेके रूपेऽपनीते जातमुत्कृष्टं युक्तासंख्यातं, जघन्योत्कृष्टयोर्मध्येऽजघन्योत्कृष्टं युक्तासंख्यातं । जघन्यासंख्यातासंख्यातं त्रीन्वारान् वर्गितं संवर्गितं च कृत्वा धर्माधर्मलोकाकाशप्रत्येकशरीरैकजीवप्रदेशबादरप्रतिष्ठितैश्च संयुक्तं कृत्वा पुनरपि त्रीन् वारान् वर्गितं संवर्गितं च कृत्वा स्थितिबंधाध्यवसान-स्थानानुभागबंधाध्यवसानस्थानयोगविभागपरिच्छेदोत्सर्पिण्यवसर्पिणीसमयै-श्च युक्ते कृते जातं जघन्यपरीतानंतं तस्मादेकेरूपेऽपनीते जातमुत्कृष्टम-संख्यातासंख्यातं तयोर्मध्ये मध्यमो विकल्पः । जघन्यपरीतानंतानि जघन्य-परीतानंतमात्राणि परस्परं प्रगुण्य यत्प्रमाणं भवति तज्जघन्यं युक्तानंतं तस्मा-देके रूपेऽपनीते जातमुत्कृष्टं परीतानंतं जघन्योत्कृष्टयोर्मध्ये मध्यमो विक-ल्पः । जघन्ययुक्तानंतमपरेण जघन्ययुक्तानंतेन गुणितं जातं जघन्या-नंतानंतं तस्मादेके रूपेऽपनीते जातमुत्कृष्टं युक्तानंतप्रमाणं जघन्योत्कृष्ट-योर्मध्ये मध्यमो विकल्पः । जघन्यानंतानंतं त्रीन् वारान् च वर्गितं * संव-र्गितं च कृत्वा सिद्धनिगोदजीववनस्पतिकायपुद्गललोकाकाशानि प्रक्षिप्य पुनरपि त्रीन् वारान् वर्गितं संवर्गितं च कृत्वा धर्माधर्मास्तिकायागुरुलघुगु-णान् प्रक्षिप्य पुनरपि त्रीन् वारान् वर्गितं संवर्गितं प्रकृत्य केवलज्ञानकेवल-दर्शनप्रमाणे प्रक्षिप्ते जातमुत्कृष्टमनंतानंतप्रमाणं जघन्योत्कृष्टयोर्मध्येऽजघ-

*पुष्पमध्यगतः पाठः ग–पुस्तके नास्ति ।

न्योत्कृष्टो विकल्पः। यत्रयत्रानंतप्रमाणं परिगृह्यते तत्रतत्राजघन्योत्कृष्टा-नंतानंतप्रमाणं ग्राह्यं, यत्र यत्राभव्याः परिगृह्यंते तत्र तत्र जघन्ययुक्तानंत-प्रमाणं वेदितव्यं, यत्र यत्र चावलिका पठ्यते तत्र तत्र जघन्ययुक्तासंख्यातं भवतीत्यर्थः॥ ८४॥

उपमाप्रमाणार्थमाह[1];—

**पल्लो सायर सूई पदरो य घणंगुलो य जगसेढी।**
**लोगपदरो य लोगो अट्ठ दु माणा मुणेयव्वा ॥ ८५॥**

**पल्यं सागरः सूची प्रतरश्च घनांगुलं च जगच्छ्रेणी।**
**लोकप्रतरश्च लोकः अष्टौ तु मानानि ज्ञातव्यानि ॥ ८५॥**

**टीका**—पल्लो–पल्यं पल्योपमं, सायर–सागरः सागरोपमं, सूई–सूची सूच्यंगुलं, पदरो य–प्रतरश्च प्रतरांगुलं, घणंगुलो य–घनांगुलं च, जगसेढी–जगच्छ्रेणी, लोगप्रदरो य–लोकप्रतरं च, लोगो–लोकः अट्ठ दु–अष्टौ तु, माणा–मानानि प्रमाणानि, मुणेयव्वा–ज्ञातव्यानि। उद्धारपल्योपममुत्पादितं तत्र यानि रोमाग्राणि तान्येकैकं * वर्षशतसमयमात्राणि खंडानि कर्त्तव्यानि एवं कृते यत्प्रमाणमेतेषां रोमाणां तदद्धापल्योपमं प्रमाणं अनेन पल्योपमेन सर्वः कर्मस्थित्यादिर्द्रष्टव्यः। एतेषामद्धापल्योपमानां दशकोटीकोटिप्रमाणा-नामेकमद्धा सागरोपमं भवति, अनेन सागरोपमप्रमाणेन देवनारकमनुष्यति-रश्चां कर्मस्थितिभवस्थित्यायुःस्थितयो[2] ज्ञातव्याः। सूच्यंगुलमुच्यते—अद्धा-पल्योपममर्द्धेनार्द्धेन तावत्कर्त्तव्यं यावदेकरोम, तत्र यावंत्यर्द्धछेदनानि अद्धा-पल्योपमस्य तावन्मात्राण्यद्धापल्योपमानि परस्पराभ्यस्तानि कृत्वा यत्प्रमाणं भवति तावन्मात्रा आकाशप्रदेशा ऊर्द्धमावल्याकारेण रचितास्तेषां यत्प्र-माणं सूच्यंगुलं। तत्सूच्यंगुलं तदपरेण सूच्यंगुलेन गुणितं प्रतरांगुलं। तत्प्र-

---

१ उपमाप्रमाणमाह–ख। २ अस्य स्थाने ‘ कर्मस्थितिर्भवति भवन्ति चायुः-स्थितयो ज्ञातव्याः ’ इति पाठः प्रेस–पुस्तके।

तरांगुलमपरेण सूच्यंगुलेन गुणितं घनांगुलं । जगच्छ्रेणिरुच्यते–पंचविंशतिकोटीकोटीनामुद्धारपल्यानां यावंति रूपाणि लक्षयोजनार्द्धछेदनानि च रूपाधिकान्येकैकं द्विगुणीकृतान्यन्योन्यभ्यस्तानि यत्प्रमाणं सा रज्जुरिति रज्जुः सप्तभिर्गुणिता श्रेणिः वा परया गुणिता श्रेण्या जगत्प्रतरं, जगत्प्रतरं च जगच्छ्रेण्या गुणितं लोकप्रमाणं । सूच्यंगुलस्य संदृष्टिः २ । प्रतरांगुलस्य संदृष्टिः ४ । घनांगुलस्य संदृष्टिः ८ । रज्जोः संदृष्टिः ? । श्रेणिसंदृष्टिः । जगत्प्रतरस्य संदृष्टिः ? । लोकस्य संदृष्टिः १८ । संख्यातस्य संदृष्टिः ९ । असंख्यातस्य संदृष्टिः ६ । अनंतस्य संदृष्टिः ६ । क्षेत्रप्रमाणं लिक्षायवांगुलवितस्तिरत्निकिष्कुधनुर्योजनादिस्वरूपेण ज्ञातव्यम् । कालप्रमाणं परमसूक्ष्मः समयः अणोरण्वंतरव्यतिक्रमः कालः समयः, जघन्ययुक्तासंख्यातमात्राः समया आवलीनाम् प्रमाणं असंख्यातावल्यः कोटीकोटीनामुपरि यत्प्रमाणं स उच्छ्वासः, सप्तभिरुच्छ्वासैः स्तवः, सप्तभिः स्तवैर्लवा, अष्टत्रिंशल्लवानामर्द्धलवा च नाडी, द्वे नाड्यौ मुहूर्त्तः, त्रिंशन्मुहूर्त्तैर्दिवसरात्रिः इत्येवमादिकालप्रमाणं । भावप्रमाणं मतिश्रुतावधिमनःपर्ययकेवलज्ञानानि परोक्षप्रत्यक्षाणि । एवं प्रमाणसूत्रं व्याख्यातमिति ॥ ८५ ॥

स्वामित्वेन योगस्य स्वरूपमाह;—

**वेइंदियादि भासा भासा य मणो य सण्णिकायाणं ।**
**एइंदिया य जीवा अमणाय अभासया होंति ॥ ८६ ॥**

**द्वीन्द्रियादीनां भाषा भाषा च मनश्च संज्ञिकायानां ।**
**एकेंद्रियाश्च जीवा अमनस्का अभाषका भवंति ॥ ८६ ॥**

**टीका**—कायवाङ्मनसां निमित्तं[1] परिस्पंदो जीवप्रदेशानां योगस्त्रिविधः[2] कायवाङ्मनोभेदेन । वेइंदियादि–द्वीन्द्रियादीनां द्वीन्द्रियत्रीन्द्रियचतुरिंद्रियाणां असंज्ञिपंचेन्द्रियाणां च भासा–भाषा वचनव्यापारः । भासा य—

१ निमित्तः ख–ग । २ त्रिप्रकारः ख–ग ।

भाषा च, मणो य—मनश्च, साण्णकायाणं—संज्ञिकायानां पंचेंद्रियाणां संज्ञिनां भाषामनोयोगौ भवतः कायश्च । एइंदिया य—एकेन्द्रियाश्च पृथिवीकायिकाप्कायिकतेजःकायिकवायुकायिकवनस्पतिकायिका जीवाः अमणा य-अमनस्काः, अभासया—अभाषकाः, होंति—भवंति ते काययोगा इत्यर्थः । संज्ञिनो जीवा कायवाङ्मनोयोगा भवंति, द्वींद्रियाद्यसंज्ञिपंचेंद्रियपर्यंताः कायवचनयोगा भवंति, पृथिवीकायिकादिवनस्पतिकायांताः काययोगा भवंति, सिद्धास्तु[१] त्रिभिर्योगै रहिता भवंति । चशब्दादयमर्थो लब्धश्चतुर्विधस्य मनोयोगस्य चतुर्विधस्य वाग्योगस्य सप्तविधस्य काययोगस्य च तेष्वाभवादिति ॥ ८६ ॥

स्वामित्वेन वेदस्य स्वरूपमाह,—

**एइंदिय वियलिंदिय णारय सम्मुच्छिमा य खलु सव्वे ।**
**वेदे णपुंसगा ते णादव्वा होंति णियमादु ॥ ८७ ॥**

**एकेंद्रिया विकलेंद्रिया नारकाः संमूर्छनाश्च खलु सर्वे ।**
**वेदेन नपुंसकास्ते ज्ञातव्या भवंति नियमात् ॥ ८७ ॥**

**टीका**—एइंदिय—एकेंद्रियाः पृथिवीकायिकादिवनस्पत्यंताः, वियलिंदय—विकलेंद्रिया, द्वीन्द्रियत्रींद्रियचतुरिंद्रियाः, णारय—नारकाः, सम्मुच्छिमा य—सम्मूर्च्छनाश्च, खलु—स्फुटं, सव्वे—सर्वे तेन पंचेन्द्रियाः संज्ञिनोऽसंज्ञिनश्च गृह्यन्ते सम्मूर्च्छिमविशेषणान्यथानुपपत्तेः । एकेन्द्रियविकलेन्द्रियास्तु सम्मूर्च्छिमा एव तेषां विशेषणमनुपपन्नमेव । वेदे—वेदेन वेदस्त्रिविधः स्त्रीवेदः पुंवेदो नपुंसकवेदश्च स्त्रीलिंगं पुंलिंगं नपुंसकलिंगमिति यावत्, स्त्यायत्यस्यां गर्भ इति स्त्री, सूते पुरुगुणानिति पुमान्, न स्त्री न पुमानिति नपुंसकं, स्त्रीबुद्धिशब्दयोः प्रवृत्तिनिमित्तं स्त्रीलिंगं, पुंबुद्धिशब्दयोः प्रवृत्तिनिमित्तं पुंल्लिंगं, नपुंसकबुद्धिशब्दयोः प्रवृत्तिनिमित्तं नपुंसकलिंगं तेन लिंगेन

१ सिद्धाः पुन ख—ग । २ ' त एव भविनः कर्तारः इति ' प्रेस—पुस्तके ।

नपुंसकवेदेन नपुंसका नपुंसकलिंगाः, णायव्वा—ज्ञातव्याः, हौंति—भवंति, नियमादु—नियमात् निश्चयात् । सर्वे एकेंद्रियाः, सर्वे च विकलेंद्रियाः, नारकाः, सर्वे सम्मूर्च्छनजाः पंचेन्द्रियाः संज्ञिनोऽसंज्ञिनश्च वेदेन नपुंसका भवंतीति ज्ञातव्या नात्र संदेहः सर्वज्ञवचनं यत इति ॥ ८७ ॥

स्वामित्वेन स्त्रीलिंगपुंल्लिंगयोः स्वरूपमाह,—

**देवा य भोगभूमा असंखवासाउगा मणुयतिरिया ।**
**ते हौंति दोसुवेदेसु णत्थि तेसिं तदियवेदो ॥ ८८ ॥**

**देवाश्च भोगभौमा असंख्यवर्षायुषः मनुजतिर्यंचः ।**
**ते भवंति द्वयोः वेदयोः नास्ति तेषां तृतीयवेदः ॥ ८८ ॥**

टीका—देवा य—देवा भवनवासिव्यंतरज्योतिष्ककल्पवासिनः, च शब्दः समुच्चयार्थः, भोगभूमा—भोगभौमास्त्रिंशद्भोगभूमिजातास्तिर्यङ्मनुष्याः, असंखवासाउगा—असंख्यवर्षायुषो भोगभूमिप्रतिभागजाः, सर्वे म्लेच्छखंडोत्पन्नाश्च मनुष्याः, तिरिया—तिर्यंचः, ते हौंति—ते भवंति, दोसु वेदेसु द्वयोर्वेदयोर्द्वाभ्यां वेदाभ्यां, णत्थि—नास्ति न विद्यते, तेसिं—तेषां पूर्वोक्तानां तादियवेदो—तृतीयवेदो नपुंसकलिंगं । देवा भोगभौमा असंख्यातवर्षायुषस्तिर्यंचः भोगभूमिप्रतिभागजाः च शब्दान्म्लेच्छाश्च सर्वे एते स्त्रीलिंगपुंल्लिंगाभ्यां भवंति नास्ति तृतीयं नपुंसकलिंगमिति ॥ ८८ ॥

विशेषणं त्रिलिंगत्वं प्रतिपादयन्नाह;—

**पंचेंद्रिया दु सेसा सण्णि असण्णीय तिरिय मणुसा य ।**
**ते हौंति इत्थिपुरिसा णपुंसगा चावि वेदेहिं ॥ ८९ ॥**

**पंचेंद्रियास्तु शेषाः संज्ञिनोः असंज्ञिनश्च तिर्यंचो मनुष्याश्च ।**
**ते भवंति स्त्रीपुरुषा नपुंसकाश्चापि वेदैः ॥ ८९ ॥**

टीका—पंचेंदिया दु—पंचेंद्रियास्तु, सेसा—शेषाः देवनारकभोगभूमिजभोगभूमिप्रतिभागजातिर्यङ्म्लेच्छवर्ज्या अन्ये सण्णि संज्ञिनः असण्णीय

असंज्ञिनश्च, तिरिय–तिर्यंचः, मणुसा य–मनुष्याश्च ते होंति–ते सर्वे भवंति, इत्थिपुरिसा–स्त्रीपुरुषाः, णपुंसगा–नपुंसकाश्चापि, वेदेहिं–वेदैर्वेदेषु वा। पूर्वोक्तानां शेषाः पंचेंद्रियाः संज्ञिनोऽसंज्ञिनश्च ये तिर्यंचो मनुष्यास्ते सर्वेऽपि स्त्रीपुंनपुंसकास्त्रिभिर्वेदैर्भवंति पुनर्वेदग्रहणं द्रव्यवेदप्रतिपादनार्थं भाववेदस्य स्त्रीपुंनपुंसकग्रहणेनैव ग्रहणादिति ॥ ८९ ॥

ननु यथा तिर्यङ्मनुष्येषु सर्वत्र स्त्रीलिंगमुपलभ्यते किमेवं देवेष्वपि नेत्याह;–

**आ ईसाणा कप्पा उववादो होइ देवदेवीणं।**
**तत्तो परंतु णियमा उववादो होइ देवाणं ॥ ९० ॥**

**आ ईशानात् कल्पात् उपपादो भवति देवदेवीनां।**
**ततः परं तु नियमात् उपपादो भवति देवानां ॥ ९० ॥**

**टीका**—नात्रोपपादकथनमन्याय्यं विषयभेदात्, देवेषु स्त्रीलिंगस्य भावाभावविषयककथनमेतत् नोपपादकथनं, आङ्यमभिविधौ गृह्यते ईसाणा–ईशानात् कप्पो कल्पात् उववादो–उपपादो, होइ–भवति, देवदेवीणं देवदेवीनां देवानां देवीनांच, ततस्तस्मादीशानात्परं तूर्द्ध्वं सनत्कुमारादिषु उववादो उपपाद। उत्पत्तेःसंभवः, होइ–भवति, देवाणं–देवानां। आईशानात्कल्पादिति किमुक्तं भवति–भवनव्यंतरज्योतिष्केषु सौधर्मेशानयोश्च कल्पयोर्देवानां देवीनां चोपपादः स्त्रीलिंगपुंल्लिंगयोरुत्पत्तेः, परेषु कल्पेषु सनत्कुमारादिषु देवानामेवोत्पत्तेः संभवो न चात्र स्त्रीलिंगस्योत्पत्तेः संभव इति ॥ ९० ॥

अथ स्त्रीलिंगस्या ईशानादुत्पन्नस्यकियद्दूरगमनमित्याशंकायामाह;—

**जावदु आरणअच्चुद गमणागमणं च होइ देवीणं।**
**तत्तो परं तु णियमा देवीणं णत्थि से गमणं ॥ ९१ ॥**

---

१ तदेवमन्येष्वपि किं प्रेस–पुस्तके। २ पातः ख–ग। परंतु परत ऊर्ध्वं ख–ग।

**यावत् आरणाच्युतौ गमनागमनं च भवति देवीनां ।**
**ततः परं तु नियमात् देवीनां नास्ति तासां गमनं ॥ ९१ ॥**

**टीका**—यावदु–यावत्, आरणअच्चुद–आरणाच्युतौ, गमणं–गमनं, आगमणं–आगमनं चशब्दः समुच्चये, होदि–भवति, देवीणं–देवीनां, तत्तो–ततस्ताभ्यामूर्द्ध्वं परंतु–परतः, णियमा–नियमात् निश्चयात्, देवीणं–देवीनां, णत्थि–नास्ति न विद्यते, से–तासां गमणं–गमनं । यावदारणाच्युतकल्पौ तावदागमनं च भवति देवीनां ततः परेषु नवग्रैवेयकनवानुत्तरपंचानुत्तरेषु नास्ति तासां देवीनां गमनं कुत एतत् पूर्वागमात् ॥ ९१ ॥

तमेवागमं प्रदर्शयतीति;—

**कंदप्पमाभिजोगा देवीओ चावि आरण चुदोत्ति ।**
**लंतवगादो उवरिं ण संति संमोहखिब्भिसया ॥ ९२ ॥**

**कांदर्पा आभियोग्या देव्यश्चापि आरणाच्युतौ इति ।**
**लांतवकात् उपरि न संति संमोहाः किल्बिषिकाः ॥ ९२ ॥**

**टीका**—कंदप्प–कंदर्पस्य भावः कांदर्पं कांदर्पयोगाद्देवाः कांदर्पाः प्रहासोपप्लवशीलाः, अभिजोगा–अभियोग्या वाहनसुराः, देवीओ–देव्यः, चावि–चापि समुच्चयसंभावनार्थः, आरणच्चुदोत्ति आरणाच्युतौ चशब्देन यावच्छब्दः समुच्चीयते । तेनैवमभिसंबंधः क्रियते । कांदर्पा आभियोग्या देव्योऽपि यावदारणाच्युतौ, अस्मादागमाज्ज्ञायते नास्ति देवीनामूर्द्ध्वं गमनं । लंतवगादो–लांतवका, उवरिं–उपरि ऊर्द्ध्वं न संति न विद्यंते, संमोह–सम्मोहा भंडदेवा नित्यमैथुनसेविनः श्ववत् । खिब्भिसिया–किल्विषिकाः पाटहिकमौरविकादयः वादित्रवादनपराः । लांतवादुपरि किल्बिषिकाः संमोहाश्च न संतीति ॥ ९२ ॥

---

१ आरणाच्युतकल्पौ यावदागमनं भवति देवीनां ततः परस्मिन् ख–ग । २ तदेवागमनं प्रदर्शयतीति प्रेस–पुस्तके । ३ कांदर्पयोगोद्भवाः प्रेस–पुस्तके ।

लेश्यानां स्वामित्वेन स्वरूपं प्रतिपादयन्नाह;—

**काऊ काऊ तह काउणील णीला य णीलकिण्हाय।**
**किण्हा य परमकिण्हा लेस्सी रदणादि पुढवीसु ॥ ९३ ॥**

कापोती कापोती तथा कापोती नीलनीला च नीलकृष्णा च।
कृष्णा च परमकृष्णा लेश्या रत्नादिपृथिवीषु ॥ ९३ ॥

टीका—लेश्यायाः सर्वत्र संबंधः, काऊ काऊ–कापोती कापोती जघन्य कापोतलेश्या, तह–तथा, काऊ–कापोती मध्यम–कापोतलेश्या, णील–नीला जघन्यनीललेश्या उत्कृष्टकापोतलेश्या नीलाय–नीला च मध्यमनीला., नीलकिण्हाय–नीलकृष्णा चोत्कृष्ट–नीला जघन्यकृष्णा च, किण्हाय–कृष्णा च मध्यमकृष्णालेश्या परमाकिण्णा–परमकृष्णा सर्वोत्कृष्ट-कृष्णलेश्या, लेस्सा–लेश्या कषायानुरंजिता योगप्रवृत्तिः, रदणादि, रत्नादिषु पुढवीसु–धरित्रीषु रत्नप्रभादिसप्तसु नरकेषु यथासंख्येन संबंधः। रत्नप्रभायां नारकाणां जघन्यकापोतलेश्या, द्वितीयायां शर्कराप्रभायां मध्यमकापोतलेश्या, तृतीयायां वालुकाप्रभायामुपरिष्टादुत्कृष्टकापोतीलेश्या आद्यो जघन्यनीला च, चतुर्थ्यां पंकप्रभायां मध्यमनीललेश्या, पंचम्यां धूमप्रभायां उपरि उत्कृष्टनीला अधो जघन्यकृष्णा च, षष्ठ्यां तमः प्रभायां मध्यमकृष्णलेश्या, सप्तम्यां महातमः-प्रभायामुत्कृष्टलेश्या सर्वत्र नारकाणामिति संबंधः। स्वायुः–प्रमाणावधृता द्रव्यलेश्याः। भावलेश्यास्तु अंतर्मुहूर्तपरिवर्तिन्यः। न केवलमशुभलेश्याः नारकाणां किंतु अशुभपरिणामा अशुभस्पर्शरसगंधवर्णाः क्षेत्रविशेषनिमित्तवशादतिदुःखहेतवो देहाश्च तेषामशुभनामोदयादत्यंताशुभतराः विकृताकृतयो हुंडसंस्थाना इति ॥ ९३ ॥

देवानां लेश्याभेदमाह;—

**तेऊ तेऊ तह तेऊ पम्म पम्मा य पम्मसुक्का य।**
**सुक्का य परमसुक्का लेस्साभेदो मुणेयव्वो ॥ ९४ ॥**

१ 'काऊ–कापोती जघन्य कापोत लेश्या काऊ कापोती मध्यमकापोतलेश्या, तह–तथा–काऊणीले–कपोतनीले उत्कृष्टकापोतलेश्या, जघन्यनीललेश्या च इतिचैके।

**तेजस्तेजस्तथा तेजः पद्मा पद्मा च पद्मशुक्ला च ।**
**शुक्ला च परमशुक्ला लेश्याभेदो ज्ञातव्यः ॥ ९४ ॥**

**टीका**—तेऊ तेऊ–तेजस्तेजः जघन्यतेजोलेश्या, तह–तथा, तेऊ–तेजः मध्यमतेजोलेश्या पम्म–पद्मा जघन्यपद्मलेश्या उत्कृष्टतेजोलेश्या च, पम्मा य–पद्मा च मध्यमपद्मलेश्या, पम्मसुक्का य–पद्मशुक्ला च उत्कृष्टपद्मलेश्या जघन्यशुक्ललेश्या च, सुक्का य शुक्ला–च मध्यमशुक्ला, परमसुक्का परमशुक्ला सर्वोत्कृष्टशुक्ललेश्या, लेस्साभेदो–लेश्याभेदः, मुणेयव्वो–ज्ञातव्य इति ॥ ९४ ॥

एते सप्त लेश्याभेदाः केषामित्याशंकायामाह;—

**तिण्हं दोण्हं दोण्हं छण्हं दोण्हं च तेरसण्हं च ।**
**एतो य चोदसण्हं लेस्सा भवणादिदेवाणं ॥ ९५ ॥**

**त्रयाणां द्वयोर्द्वयो[1] षण्णां द्वयोश्च त्रयोदशानां च ।**
**इतश्च चतुर्दशानां लेश्या भवनादिदेवानाम् ॥ ९५ ॥**

**टीका**—तिण्हं–त्रयाणां त्रिषु वा, दोण्हं–द्वयोः, पुनरपि दोण्हं–द्वयोः, छण्हं–षण्णां, दोण्हं च–द्वयोश्च, तेरसण्हं च–त्रयोदशानां त्रयोदशसु वा, एत्तो य–इतश्चोपरि चोदसण्हं चतुर्दशानां चतुर्दशसु वा लेस्सा–लेश्याः पूर्वोक्ताः सप्त लेश्याभेदाः, भवणादिदेवाणं–भवनादिदेवानां । भवनवानव्यंतरज्योतिष्केषु त्रिषु देवानां जघन्यतेजोलेश्या, सौधर्मैशानयोर्देवानां मध्यमतेजोलेश्या, सनत्कुमारमाहेंद्रयोर्देवानामुत्कृष्टतेजोलेश्या जघन्यपद्मलेश्या च, ब्रह्मब्रह्मोत्तरलांतवकापिष्टशुक्रमहाशुक्रेषु षट्सु देवानां मध्यमपद्मलेश्या, शतारसहस्रारयोरुत्कृष्टपद्मलेश्या जघन्यशुक्ललेश्या च, आनतप्राणतारणाच्युतसहितेषु नवसु ग्रैवेयकेषु त्रयोदशसंख्यकेषु मध्यमशुक्ललेश्या, नवानुत्तरेषु पंचानुत्तरेषु चतुर्दशसंख्येषु परमशुक्ललेश्या, सर्वत्र देवानामिति यथासंख्येन संबंध इति ॥ ९५ ॥

---

१ अत्रापि पूर्ववत्पाठेन भाव्यं केवलं कापोतस्थाने तेजोलेश्या पठनीया ।

तिर्यङ्मनुष्याणां लेश्याभेदमाह;—

**एइंदियवियलिंदियअसण्णिणो होंति असुहाओ**
**संखादीदाउणं तिण्णि सुहा छप्पि सेसाणं ॥ ९६ ॥**

**एकेंद्रियविकलेंद्रियासंज्ञिनां तिस्रो भवंत्यशुभाः ।**
**संख्यातीतायुष्काणां तिस्रः शुभाः षडपि शेषाणां ॥ ९६ ॥**

**टीका**—एइंदिय–एकेंद्रियाणां पृथिवीकायिकादिवनस्पतिकायिकांतानां, वियलिंदिय–विकलेंद्रियाणा द्वीन्द्रियत्रींद्रियचतुरिंद्रियाणां, असण्णिणो–असंज्ञिनां शिक्षाऽऽलापादिग्रहणायोग्यानां पंचेंद्रियाणां, तिण्णि–तिस्रः, होंति–भवंति, असुहाओ–अशुभाः कापोतनीलकृष्णलेश्याः। संखादी दाऊणां–संख्यातीतायुष्काणां भोगभूमिजानां भोगभूमिप्रतिभागजानां च तिण्णि तिस्रः शुभाः तेजः शुक्लपद्मलेश्याः, छप्पि–षडपि कापोतनीलकृष्णतेजःपद्मशुक्लुलेश्याः, सेसाणं–शेषाणां कर्मभूमिजानां कर्मभूमिप्रतिभागजानां पंचेंद्रियाणां संज्ञिनां । एकेंद्रियविकलेंद्रियसंज्ञिनां तिस्रोऽशुभलेश्या भवंति, भोगभूमिजानां भोगभूमिप्रतिभागजानां च तिर्यङ्मनुष्याणां तिस्रः शुभा लेश्या भवंति, शेषाणां पुनः कर्मभूमिजानां कर्मभूमिप्रतिभागजानां च तिर्यङ्मनुष्याणां षडपि लेश्या भवंति । अत्रापि केषांचिद्द्रव्यलेश्याः स्वायुः प्रमाणावधृता । भावलेश्याः पुनः सर्वेषामंतर्मुहूर्तपरिवर्तिन्यः कषायाणा हानिवृद्धीभ्या तासा हानिवृद्धी वेदितव्ये इति ॥ ९६ ॥

प्रवीचारकारणेंद्रियाविषयभेदे प्रतिपादयन्नाह;—

**कामा दुवे तऊ भोग इंदियत्था विदूहिं पण्णत्ता ।**
**कामो रसो य फासो सेसा भोगेत्ति आहीया ॥ ९७ ॥**

**कामौ द्वौ त्रयो भोगा इंद्रियार्था विद्वद्भिः प्रज्ञप्ताः ।**
**कामो रसश्च स्पर्शः शेषाः भोगा इति आहिताः ॥ ९७ ॥**

टीका—कामा—कामः स्त्रीपुंनपुंसकवेदोदयकृततद्विषयाभिलाषस्तस्य कारणात्वात्कामौ कारणे कार्योपचारात्, दुवे—द्वौ, तओ—त्रयः, भोग—भोगाः, इंदियत्था—इंद्रियार्थाः इन्द्रियविषयाः स्पर्शरसरूपगंधशब्दाः। अथवेंद्रियाणि स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि तद्विषयाश्च, विदूहिं—विद्वद्भिः प्रत्यक्षदर्शिभिः पण्णत्ता—प्रज्ञप्ताः कथिताः दृष्टा वा। कामो—कामौ, रसोये—रसश्च, फासो—स्पर्शश्च, सेसा—शेषाः गंधरूपशब्दाः भोगेत्ति—भोगा इति, आहिता—आहिताः प्रतिपादिताः ज्ञाता वा। स्पर्शनेंद्रियप्रवृत्तिकारणत्वात् रूपशब्दौ भोगौ रसनेंद्रियस्य प्रवृत्तिहेतोः स्पर्शनेंद्रियस्य च घ्रौणं भोगोऽतः यत एवं कामौ रसस्पर्शौ गंधरूपशब्दा भोगाः कथिताः, अत इंद्रियार्थाः सर्वेपि कामौ भोगाश्च विद्वाद्भिः प्रज्ञप्ता इति॥ ९७॥

इंद्रियैर्वेदनाप्रतिकारसुखं देवानामाह;—

**आईसाणा कप्पा देवा खलु होंति कायपडिचारा।**
**फासप्पडिचारा पुण सणक्कुमारे य माहिंदे॥ ९८॥**

**आ ईशानात् कल्पात् देवाः खलु भवंति कायप्रतीचाराः।**
**स्पर्शप्रतीचाराः पुनः सनत्कुमारे च माहेन्द्रे॥ ९८॥**

टीका—आङयमभिविधौ द्रष्टव्यः असंहिततया निर्देशोऽसंदेहार्थः तिर्यङ्मनुष्यभवनवासिव्यंतरज्योतिःसौधर्माणां ग्रहणं लब्धं भवति, ईसाणा—ईशानात्, कप्पा—कल्पाः, देवा—देवाः, खलु—स्फुटं, होंति—भवंति, कायपडिचारा—कायप्रतीचाराः “प्रतीचारो मैथुनोपसेवनं वेदोदयकृतपीडाप्रतीकारः” काये कायेन वा प्रतीचारो येषां ते कायप्रतीचारास्तिर्यङ्मनुष्या भवनवासिवानव्यंतरज्योतिष्कासौधर्मेशाना देवा देव्यश्च

१ ‘घ्राणं, श्रोत्रं, चक्षुश्च’ इति प्रेस–पुस्तके पाठ। २ ‘असंनिहितनया’ इति प्रेसपुस्तके। संहिता सन्धि।

स्फुटं भवंति कायप्रतीचाराः संक्लिष्टकर्मकलंकत्वान्मनुष्यवत्स्त्रीसुखमनुभवंतीति। अवधिग्रहणादितरेषां सुखविभागे प्रतिज्ञाते तत्प्रतिज्ञानायाह-फासपडिचारा-स्पर्शप्रतीचाराः स्पर्शे स्पर्शनेन वा प्रतीचारो विषयसुखानुभवनं येषां ते स्पर्शप्रतीचाराः, पुण-पुनरन्येन प्रकारेण सणकुमारे य-सनत्कुमारे च कल्पे, माहिंदे-माहेंद्रे कल्पे देवा इत्यनुवर्त्तते। सनत्कुमारे कल्पे माहेंद्रे कल्पे च ये देवास्ते स्पर्शप्रतीचाराः-देवांगनास्पर्शमात्रकामकृतप्रीतिसुखमुपलभंते तथा देव्योऽपीति ॥ ९८ ॥

तथा शेषाणां सुखप्रतिपादनार्थमाह;—

**वंभे कप्पे वंभुत्तरे य तह लंतवे य कापिट्ठे।**
**एदेसु य जे देवा बोधव्वा रूवपडिचारा ॥ ९९ ॥**

**ब्रह्मे कल्पे ब्रह्मोत्तरे च तथा लांतवे च कापिष्ठे।**
**एतेषु च ये देवा बोद्धव्या रूपप्रतीचाराः ॥ ९९ ॥**

टीका—बंभे कप्पे-ब्रह्मकल्पे, बंभुत्तरे य-ब्रह्मोत्तरे च कल्पे, तह-तथा, लंतवे य-लांतवकल्पे, काविट्ठे-कापिष्ठकल्पे एदेसुय एतेषु च कल्पेषु चान्येषु तत्प्रतिबद्धेषु, जे देवा-ये देवाः, बोधव्वा-बोद्धव्याः ज्ञातव्याः, रूवपडिचारा-रूपे रूपेण वा प्रतीचारो येषां ते रूपप्रतीचाराः। ब्रह्मब्रह्मोत्तरलांतवकापिष्ठेषु कल्पेषु ये देवास्ते रूपप्रतीचाराः दिव्यांगनानां शृंगारचतुरमनोज्ञवेषरूपालोकनमात्रादेव परं सुखं प्राप्नुवंति देव्योऽपि चेति ॥ ९९ ॥

शब्दप्रतीचारान् प्रतिपादयन्नाह,—

**सुक्कमहासुक्केसु य सदारकप्पे तहा सहस्सारे।**
**कप्पे एदेसु सुरा बोधव्वा सद्दपडिचारा ॥ १०० ॥**

**शुक्रमहाशुक्रयोश्च शतारकल्पे तथा सहस्रारे।**
**कल्पे एतेषु सुरा बोद्धव्याः शब्दप्रतीचाराः ॥ १०० ॥**

---

१ प्रवीचार ख-ग।

टीका—सुक्कमहासुक्केसु य—शुक्रमहाशुक्रयोश्च, सदारकप्पे—शतारकल्पे, तहा—तथा, सहस्सारे—सहस्रारे च, कप्पे—कल्पे, एतेसु—एतेषु, सुरासुरा, देवाः, बोधव्वा—बोद्धव्याः, सद्दपडिचारा—शब्दप्रतीचाराः, शब्दे शब्देन वा प्रतीचारो येषां ते शब्दप्रतीचाराः । एतेषु शुक्रमहाशुक्रशतारसहस्रारकल्पेषु ये देवा देव्योऽपि च ते शब्दप्रतीचाराः, देववनितानां मधुरसंगीतमृदुललितकथितभूषणारवश्रवणमात्रादेवपरां प्रीतिमास्कंदंतीति॥१००॥

मनः प्रवीचारान् प्रतिपादयन्नाहः,—

**आणदपाणदकप्पे आरणकप्पे य अच्चुदे य तहा ।**
**मणपडिचारा णियमा एदेसु य होंति जे देवा ॥ १०१ ॥**

**आनतप्राणतकल्पयोः आरणाकल्पे चाच्युते य तथा ।**
**मनः प्रतीचारा नियमादेतेषु च भवंति ये देवाः ॥ १०१ ॥**

टीका—आणदपाणदकप्पे—आनतप्राणतकल्पयोः, आरणकप्पे—आरणकल्पे, अच्चुदे य तहा—अच्युते च तथैव देव्योऽपि, मणपडिचारा—मनः प्रतीचाराः, णियमा—नियमान्निश्चयेन एदेसु य—एतेषु च, होंति—भवंति, जे देवा—ये देवाः । एतयो आनतप्राणतकल्पयोरारणाच्युतकल्पयोर्देवा मनः प्रतीचारा मानसिककामाभिलाषप्राप्तसुखाः स्वांगनामनःसंकल्पमात्रादेव परमसुखमवाप्नुवंतीति ॥ १०१ ॥

अथोत्तरेषां किंप्रकारं सुखमित्युक्ते तन्निश्चयार्थमाह;

**तत्तो परं तु णियमा देवा खलु होंति णिप्पडीचारा ।**
**सप्पडिचारेहिं वि ते अणंतगुणसोक्खसंजुत्ता ॥ १०२॥**

**ततः परतो नियमात् देवाः खलु भवंति निःप्रतीचाराः ।**
**सप्रतिचारेभ्योऽपि ते अनंतगुणसौख्यसंयुक्ताः ॥ १०२ ॥**

**टीका**—तत्तो–ततस्तेभ्यो भवनाद्यच्युतांतेभ्यः, परं तु–परत ऊर्द्ध्वं, णियमा–नियमान्निश्चयादसंदेहात् देवा–अहमिंद्रादयः, खलु स्फुटं व्यक्तमेतत्प्रत्यक्षज्ञानिदृष्टमेतत्, होंति–भवंति, णिप्पडीचारा–निष्प्रतीचारा प्रतीचारनिर्गता निष्प्रतीचाराः कामाग्निदाहविनिर्मुक्ताः । वनिता विषयपंचेंद्रियसुखरहिताः । यद्येवं किं तेषां सुखमित्याशंकायामाह,—सप्पडिचारेहिं वि–सप्रतीचारेभ्योऽपि कायस्पर्शरूपशब्दमनःप्रवीचारेभ्योऽपि ते नवग्रैवेयकादिकेऽहमिंद्राः, अणंतगुणसोक्खसंजुत्ता–अनंतगुणसौख्ययुक्ता । अनंतो गुणो गुणकारो यस्य तदनंतगुणं अनंतगुणं च तत्सोख्यं चानंतगुणसौख्यं स्वायत्तसर्वप्रदेशानंदप्रीणनं तेन संयुक्ताः सहिताःतेभ्यो भवनाद्यच्युतांतेभ्यः परेषु नवग्रैवेयकनवानुत्तरेषु ये देवास्ते निश्चयेनाप्रतीचाराः सप्रतीचारेभ्योऽनंतगुणसंयुक्ताः, व्यक्तमेतत् प्रतीचारो हि वेदनाप्रतीकारस्तदभावे तेषां परमसुखमनवरतमिति ॥ १०२ ॥

कुतो यतः,—

**जं च कामसुहं लोए जं च दिव्वं महासुहं ।**
**वीतरागसुहस्सेदे णंतभागंपि नग्घंदि ॥ १०३ ॥**

**यच्च कामसुखं लोके यच्च दिव्यं महासुखं ।**
**वीतरागसुखस्यैते अनंतभागमपि नार्हंति ॥ १०३ ॥**

**टीका**—जं च–यच्च, कामसुहं–कामसुखं विषयोत्थजीवप्रदेशाह्लादकारणं मनुष्यादिभवं लोए लेके तिर्यगूर्द्ध्वाधोभागेषु, जं च दिव्व महासुहं—दिवि भवं दिव्यं दिव्यं च तन्महासुखं च दिव्यमहासुखं भवनाद्यच्युतांतदेवोत्थं, वीदरागसुहस्स–वीतरागसुखस्य निर्मूलितमोहनीयादिकर्मकलंकस्य, एदे एतानि तिर्यङ्मनुष्यदेवजनितानि सुखानि, णंतभागंपि–अनंतभागस्यापि वीतरागसुखस्यानंतराशिना भागे कृते यल्लब्धं नम्यानंतभागस्यापि णग्घंति नार्घन्ति नार्हंति सदृशानि न तानि तस्य मूल्यं

वा नार्हति । यतः सर्वाणि देवमनुष्यभोगभूमिजादिसर्वसुखानि वीतराग-सुखस्यानंतभागमपि नार्हंति, अतःनिष्प्रतीचारेषु देवेषु महत्सुखं सर्वान् सप्रतीचारानपेक्ष्येति ॥ १०३ ॥

स्पर्शरसौ कामाविति व्याख्यातौ तत्र स्पर्शः कामो देवानामवगतो रसः कामो नाद्यापीत्युक्ते तदर्थमाह;—

**जदि सागरोवमाओ तदि वाससहस्सियादु आहारो ।**
**पक्खेहिं दु उस्सासो सागरसमयेहिं चेव भवे ॥ १०४ ॥**

**यावत् सागरोपमायुः तावत् वर्षसहस्रैः आहारः ।**
**पक्षैस्तु उच्छ्वासः सागरसमयैश्चैव भवेत् ॥ १०४ ॥**

**टीका**—जदि—यावत् यन्मात्रं, सागरोवमाऊ—सागरोपमायुः यावन्मात्रैः सागरोपमायुः तदि—तावन्मात्रैः वाससहस्सिया—वर्षसहस्रैरतिक्रांतैराहारो *भोजनेच्छा आहाराभिलाषः यावन्मात्राणि सागरोपमाण्यायुस्तावन्मात्रैर्वर्षसहस्रैरतिक्रांतैराहारो *देवानां भवति । अथ गंधस्य कथमित्युक्तेऽत आह;—पक्खेहिंदु—पक्षैस्तु पंचदशाहोरात्रैः, उस्सासो—उच्छ्वासो निःश्वासश्च गंधद्रव्याघ्राणं, सायरसमयेहिं—सागरसमयसमानैः सागरोपमप्रमाणैः, चेव—चैव, भवे—भवेत् । यावन्मात्राणि सागरोपमाणि जीवंति देवास्तावन्मात्रैः पक्षैर्गतैरुच्छ्वासनिःश्वासौ भवतः । सौधर्मैशानयोर्देवानामाहारसंज्ञा भवति द्वयोर्वर्षसहस्रयोः साधिकयोर्गतयोस्तथा मासे साधिके गते उच्छ्वासो भवेत्, सनत्कुमारमाहेंद्रयोर्देवानां सप्तभिर्वर्षसहस्रैः साधिकैर्गतैराहारेच्छा जायते तावद्भिः पक्षैश्चोच्छ्वासः साधिकैश्चशब्दाद्देवीनामंतर्मुहूर्त्तपृथक्त्वेनैवमुत्तरत्रापि सर्वत्र योज्यमिति ॥ १०४ ॥

अथ येषां पल्योपमायुस्तेषामित्याशंकायामाह;—

**उक्कस्सेणाहारो वाससहस्साहिएण भवणाणं ।**
**जोदिसियाणं पुण भिण्णमुहुत्तेणेदि सेस उक्कस्सं ॥ १०५ ॥**

---

* पुष्पमध्यगतौ पाठौ ख—ग—पुस्तके नैस्तः ।

**उत्कृष्टेन आहारो वर्षसहस्राधिकेन भवनानां ।**

**ज्योतिष्काणां पुनः भिन्नमुहूर्तेन इति शेषाणामुत्कृष्टं ॥ १०५ ॥**

**टीका**—उक्कस्सेण—उत्कृष्टेनाहारो भोजनाभिप्रायः, वाससहस्स—वर्षसहस्रेण, अहिएण—अधिकेन पंचदशवर्षशतैरित्यर्थः भवणाणां—भवनानां भवनवास्यसुराणां, जोदिसियाणं—ज्योतिष्काणां चंद्रादित्यादीनां, पुण—पुनः, भिण्णमुहुत्तेण भिण्णमुहूर्त्तेनेति, एवं सेस—शेषाणां नवानां भवनवासिकुमाराणां सर्वदेवीनां च, किंतु केषांचिन्मुहूर्त्तपृथक्त्वेन उक्कसं—उत्कृष्टं । असुराणां वर्षसहस्रेण साधिकेनाहारग्रहणं भवति, ज्योतिषां शेषकुमाराणां व्यंतराणां सर्वदेवीनां चांतर्मुहूर्त्तेन, केषांचिदन्तर्मुहूर्त्तपृथक्त्वेनेति ॥ १०५ ॥

अथोच्छ्वासः कथं तेषामित्याशंकायामाह;—

**उक्कस्सेणुस्सासो पक्खेणहिएण होइ भवणाणं ।**

**मुहुत्तपुधत्तेण तहा जोइसणागाण भोमाणं ॥ १०६ ॥**

**उत्कृष्टेन उच्छ्वासः पक्षेणाधिकेन भवनानां ।**

**मुहूर्तपृथक्त्वेन तथा ज्योतिष्कनागभौमानां ॥ १०६ ॥**

**टीका**—उक्कस्सेण—उत्कृष्टेन, उस्सासो—उच्छ्वासः, पक्खेण पक्षेण, पंचदशाहोरात्रेण, अहिएण अधिकेन, होइ—भवति भवणाणं—भवनानामसुराणां, मुहुत्तपुधत्तेण—मुहूर्त्तपृथक्त्वेन यद्यप्यत्र मुहूर्त्तपृथक्त्वमुक्तं तथाप्यत्रान्तमुहूर्त्तपृथक्त्वं ग्राह्यं तथोपदेशात् त्रैराशिकन्यायाद्भिन्नमुहूर्त्तानुवर्त्तनाच्च, तहा—तथा तेनैव प्रकारेण, जोइसणागाण भोमाणं—ज्योतिष्कनागभौमानां तथाशब्देन शेषकुमाराणां । सुराणां पक्षेण साधिकेनोच्छ्वासो नागानां कल्पवासिदेवीनां च, अंतर्मुहूर्त्तपृथक्त्वेन भिन्नमुहूर्त्तपृथक्त्वैर्वा ज्योतिष्कभौमानां शेषकुमाराणां तद्देवीनां भिन्नमुहूर्त्तेनेति ॥ १०६ ॥

इंद्रियविषयद्वारेणैव देननारकाणामवधिविषयं प्रतिपादयन्नाह,—

**सक्कीसाणा पढमं बिदियं तु सणक्कुमारमाहिंदा ।**

**बंभालंतव तदियं सुक्कसहस्सारया चउत्थी दु ॥ १०७ ॥**

**शक्रैशानाः प्रथमं द्वितीयं तु सनत्कुमारमाहेंद्राः ।**
**ब्रह्मलांतवाः तृतीयं शुक्रसहस्रारकाः चतुर्थीं तु ॥ १०७ ॥**

**टीका**—पश्यंतीति क्रियापदमुत्तरगाथायां तिष्ठति तेन सह संबंधो द्रष्टव्यः । सक्कीसाणा शक्रैशानाः सौधर्मैशानयोर्वा ये देवाः पढमं प्रथमं प्रथमपृथिवीपर्यंतं यावत्, विदियंतु द्वितीयं तु द्वितीयपृथिवीपर्यंतं सणक्कुमारमाहिंदा सनत्कुमारमाहेंद्रयो र्ये देवाः, बंभालंतव ब्रह्मलांतवा ब्रह्मब्रह्मोत्तर लांतवकापिष्ठेषु ये देवास्ते तादियं तृतीयां तृतीयपृथिवीपर्यन्तं, सुक्कसहस्सारया शुक्रसहस्रारकाः शुक्रमहाशुक्रशतारसहस्रारेषु ये देवास्ते चउत्थी हु चतुर्थपृथिवीपर्यंतमेव । सौधर्मैशानयोर्देवाः स्वावासमादिं कृत्वा प्रथमपृथिवीपर्यंतं यावदवधिज्ञानेन पश्यंति, तथा सनत्कुमारमाहेंद्रयोर्देवाः स्वावासमारभ्य यावद्द्वितीयावसानं तावत्पश्यंति, ब्रह्मब्रह्मोत्तरलांतवकापिष्ठेषु देवाः स्वविमानमादिं कृत्वा तावत्पश्यंति यावत्तृतीयपृथिवीपर्यन्तं, शुक्रमहाशुक्रशतारसहस्रारेषु सुराः स्वदेशमारभ्य तावत्पश्यंति यावच्चतुर्थीसमाप्तिरिति ॥ १०७ ॥

तथा,—

**पंचमि आणदपाणद छट्ठी आरणच्चुदा य पस्संति ।**
**णवगेवज्जा सत्तमि अणुदिस अणुत्तरा य लोगंत्तं ॥ १०८ ॥**

**पंचमीं आनतप्राणताः षष्ठीं आरणाच्युताश्च पश्यंति ।**
**नवग्रैवेयकाः सप्तमीं अनुदिशा अनुत्तराश्च लोकांतं ॥ १०८ ॥**

**टीका**—पंचमि पंचमीं पृथिवीं आणादपाणद आनतप्राणांताः आनतप्राणतकल्पयोर्देवाः, छट्ठी षष्ठीं पृथिवीआरणाच्चुदायआरणाच्युताश्चारणाच्युतयोः कल्पयोर्ये देवास्ते पस्संति पश्यंति अवधिज्ञानेन सम्यंगवलोकयंति, णवगवेज्जा नव ग्रैवेयका नवग्रैवेयकविमानेषु देवाः सत्तमि सप्तमीं पृथिवीं, अणुद्दिस अनुदिशेषु नवानुत्तरेषु देवाः अनुत्तरा य अनुत्तराश्च पंचानुत्तरेषु देवा

लोगंतं लोकांतं अधोवातपर्यंतं । आनतप्राणतकल्पयोर्देवाः स्वविष्टरमारभ्य यावत्पंचमपृथिवीपर्यंतं तावत्पश्यति आरणाच्युतकल्पयोः पुनर्देवाः स्वावस्थानमारभ्य यावच्छष्ठपृथिवीपर्यंतं तावत्पश्यति, नवग्रैवेयकेषु देवाः स्वविमानमारभ्य यावत्सप्तमी तावत्पश्यंति, नेवानुदिशेषु पंचानुत्तरेषु च देवाः स्वदेवगृहमारभ्य यावल्लोकांतं पश्यंति, ऊर्द्ध्वं पुनः सर्वे स्वविमानध्वजाग्रं यावत्पश्यंत्यसंख्यातयोजनानि वा तिर्यक पुनरसंख्यातानि योजनानि पश्यंतीत्यर्थः ॥ १०८ ॥

व्यंतरादीनामवधिविषयमाहः—

**पणवीस जोयणाणं ओही विंतरकुमारवग्गाणं ।**
**संखेज्जजोयणोही जोदिसियाणं जहण्णं तु ॥ १०९ ॥**

**पंचविंशति योजनानां अवधिः व्यंतरकुमारवर्गाणां ।**
**संख्यातयोजनान्यवधिः ज्योतिषां जघन्यं तु ॥ १०९ ॥**

**टीका**—पणवीस पंचविंशतिः जोयणाणं योजनानां ओही अवधिज्ञानं भवप्रत्ययजं विंतर व्यंतराणां किंनराद्यष्टप्रकाराणां कुमारवग्गाणं कुमारवर्गाणां नागकुमारादिनवानां संखेज्जजोयण संख्यातयोजनानि सप्ताष्टादीनि ओही अवधिः जोदिसियाणं ज्योतिषां चतुः प्रकाराणां जहण्णं हु जघन्यं एव । व्यंतराणां नागादिनवकुमाराणां च पंचविंशतियोजनान्यवधिर्जघन्यो भवति, ज्योतिष्काणां पुनर्जघन्यतोऽवधिः संख्यातयोजनानि, एतावन्मात्रं वस्तु परिछिंदंतीति ॥ १०९ ॥

असुरचंद्रादित्यादीनां जघन्यं सर्वेषामुत्कृष्टं चावधिं प्रतिपादयन्नाह,—

**असुराणमसंखेज्जा कोडी जोइसिय सेसाणं ।**
**संखादीदा य खलु उक्कस्सोहीयविसओ दु ॥ ११० ॥**

**असुराणामसंख्याताः कोट्यो ज्योतिष्काणां शेषाणां ।**
**संख्यातीताश्च खलु उत्कृष्टः अवधिविषयस्तु ॥ ११० ॥**

**टीका**—असुराणं असुराणां प्रथमभवनवासिनां असंखेज्जा असं-ख्याताः कोडी कोट्यो योजनानामिति संबंधः, जघन्योवधिरसुराणां चंद्रादीनां चासंख्याता योजनकोट्यः, इत उत्कृष्टं ज्योतिष्कादीनामाह,—जोइसिय ज्योतिष्काणां चंद्रादीनां सेसाणं शेषाणां भवनवासिव्यंतराणां निकृष्टकल्पवासिनां च संखादीदा य संख्यातीताश्च संख्यामतिक्रांताः असंख्याता योजनकोटीकोट्यः खलु स्फुटं उक्कस्सोही उत्कृष्टावधिः विस-ओ विषयः । भवनवासिवानव्यंतरज्योतिष्काणामुत्कृष्टावधिविषयोऽसंख्याता योजनानां कोटीकोट्यः निकृष्टकल्पवासिनां च मिथ्यादृष्टीनां पुनर्विभंग-ज्ञानं संख्यातयोजनविषयमसंख्यात योजनविषयं चेति ॥ ११० ॥

नारकाणामवधिविषयं निरूपयन्नाहः—

**रयणप्पहाए जोयणमेयं ओहीविसओ मुणेयव्वो ।**
**पुढवीदो पुढवीदो गाऊ अद्धद्ध परिहाणी ॥ १११ ॥**

**रत्नप्रभायां योजनमेकं अवधिविषयो ज्ञातव्यः ।**
**पृथिवीतः पृथिवीतो गव्यूतस्यार्धार्धं परिहानिः ॥ १११ ॥**

**टीका**—रयणप्पहाय रत्नप्रभायां प्रथमपृथिव्यां जोयणमेयं योजन-मेकं चत्वारि गव्यूतानि ओहीविसओ अवधिविषय अवधिज्ञानस्य गोचरो मुणेयव्वो ज्ञातव्यः, प्रथमपृथिव्यां नारकाणामवधिविषयो योजनप्रमाणं स्वस्थानमादिं कृत्वा यावद्योजनमात्रं पश्यंति, मिथ्या दृष्टीनां विभंगज्ञानं स्तोकमात्रं ततोऽधः पुढवीदो पुढवीदो पृथिवीतः पृथिवीतः पृथिवीं प्रति पृथिवीं प्रति गाऊ गव्यूतस्य अद्धद्ध अर्द्धस्यार्द्धस्य परिहाणी परिहानिः गव्यूतार्द्धस्य परिक्षयः । द्वितीयायां पृथिव्यां त्रीणि गव्यूतानि गव्यूतार्द्धं च, सर्वत्र नारकाणामवधेर्विषयः संबंधनीयः; तृतीयायां त्रीणि गव्यूतानि, चतुर्थ्यां द्वे गव्यूते सार्द्धे, पंचम्यां द्वे गव्यूते, षष्ठ्यां गव्यूतमेकं सार्द्धं, सप्तम्यामेकं गव्यूतं सम्यग्दृष्टीनामेतत् मिथ्यादृष्टीनां पुनर्विभंगाज्ञानमस्मा-न्न्यूनमिति ॥ १११ ॥

**पढमं पुढविमसण्णी पढमं विदियं च सरिसवा जंति।**
**पक्खी जावदु तदियं जाव चउत्थी दु उरसप्पा॥ ११२॥**

**प्रथमां पृथिवीमसंज्ञिनः प्रथमां द्वितीयां च सरीसृपा यांति।**
**पक्षिणो यावत् तृतीयां यावच्चतुर्थीं तु उरःसर्पाः॥ ११२॥**

**टीका**—यांतीति क्रियापदं तेन सह संबंधः, प्रथमां पृथिवीमसंज्ञिनोऽमनस्का यांति प्रथमां द्वितीयां च पृथिवीं कृकलासादयो यांति, पक्षिणो सरीसृपगोध भेरुंडादयः प्रथमामारभ्य यावत्तृतीयां पृथिवीं यांति प्रथमामारभ्य यावच्चतुर्थीं पृथिवीमुरः सर्पा अजगरादयो यांति। अत्र पापं कृत्वा तत्र च गत्वा दुःखमनुभवंतीति॥ ११२॥

तथाः—

**आ पंचमिति सीहा इत्थीओ जंति छट्ठिपुढवित्ति।**
**गच्छंति माघवीत्ति य मच्छा मणुया य ये पावा॥ ११३॥**

**आपंचमीमिति सिंहाः स्त्रियो यांति षष्ठीपृथिवीमिति।**
**गच्छंति माघवीमिति च मत्स्या मनुजाश्च ये पापाः॥ ११३॥**

**टीका**—आङभिविधौ द्रष्टव्यः आ पंचम्या इति। प्रथमामारभ्य यावत्पंचमी सिंहव्याघ्रादयो गच्छंति, स्त्रियः पुनर्महापापपरिणताः प्रथमामारभ्य षष्ठीपृथिव्यंतं यांति, मत्स्याः मनुष्याश्च ये पापा महाहिंसादिपरिणताः माघवी सप्तमीं पृथिवीं प्रथमामारभ्य गच्छंति। अयं पापशब्दः सर्वेषामभिसंबध्यते। यदि रौद्रध्यानेन हिंसादिक्रियायां परिणताः स्युस्तदा ते पापानुरूपं नरकं गत्वा दुःखमनुभवंतीति॥ ११३॥

नारकाणामुपपादं प्रतिपाद्य तेषामुद्वर्त्तनं प्रतिपादयन्नाह,—

**उव्वट्टिदाय संता णेरइया तमतमादु पुढवीदो।**
**ण लहंति माणुसत्तं तिरिक्खजोणीमुवणयंति॥ ११४॥**

**उद्वर्तिताः संतो नारकास्तमस्तमसः पृथिवीतः ।**
**न लभंते मानुषत्वं तिर्यग्योनिमुपनयंति ॥ ११४ ॥**

**टीका**—तमस्तमः पृथिव्या नारका उद्वर्त्तिताः संतः सप्तमनरकादगताः संतो मानुषत्वं मनुष्यभवं न लभंते न प्राप्नुवंति सुष्ठु संक्लेशकारणं यतस्तत-स्तिर्यग्योनिमुपनयंति सिंहव्याघ्रादिकं पुनः पापकारणं प्राप्नुवंति ॥ ११४ ॥

अथ केषु तिर्यक्षूत्पद्यंत उत्पन्नाश्च क्व गच्छंतीत्याशंकायामाहः,—

**वालेसु य दाढीसु य पक्खीसु य जलचरेसु उववण्णा ।**
**संखेज्जआउठिदिया पुणोवि णिरयावहा होंति ॥ ११५ ॥**

**व्यालेषु च दंष्ट्रीसु च पक्षिषु च जलचरेषु उत्पन्नाः ।**
**संख्यातायुःस्थितिकाः पुनरपि निरयावहा भवंति ॥११५॥**

**टीका**—वालीसु व्यालेषु श्वापदभुजगेषु चशब्दादन्येष्वपि तत्समानेषु दाढीसु य दंष्ट्रिषु च सिंहव्याघ्रवराहादिषु पक्खीसु य पक्षिषु च गृध्रभेरुंडादिषु च जलयरेसु जलचरेषु तिमितिमिंगलादिमत्स्यमकरादिषु उववण्णा उत्पन्नाः संखेज्जाउट्ठिदिया संख्यातायुःस्थितिर्येषां ते संख्यातायुःस्थितिकाः कर्मभू मिकर्मभूमिप्रातिभागजाः संतः पुणोवि पुनरपि पापवशात् णिरयावहा नर-कावहा नारका होंति भवंति नारककर्मसमानका भवंति । सप्तमपृथिव्या आगत्य व्यालदंष्ट्रिपक्षिजलचरेषूत्पद्य पुनरपि नरकं गच्छंतीति ॥ ११५ ॥

अथ षष्ठ्या आगताः क्वोत्पद्यंते किं लभंते किं च न लभंत इत्याशंका-यामाहः,—

**छट्ठीदो पुढवीदो उव्वट्टिदा अणंतर भवम्हि ।**
**भज्जा माणुसलंभे संजमलंभेण दु विहीणा ॥ ११६ ॥**

**षष्ठ्याः पृथिव्या उद्वर्तिता अनंतर भवे ।**
**भाज्या मनुष्यलाभे संयमलाभेन तु विहीनाः ॥ ११६ ॥**

**टीका**—षष्ठ्याः पृथिव्या षष्ठनरकादुद्वर्त्तिता आगताः संतोऽनंतरभवे तस्मिन् भाज्या विकल्पयुक्ताः मनुष्यलाभेन सम्यक्त्वलाभेन च, संयमलाभेन

तु विहीनाः । षष्ठनरकादागतानां तस्मिन् भवे कदाचिन्मनुष्यलाभः सम्यक्त्वलाभश्च भवति नापि भवति, संयमलाभस्तु निश्चयेन न भवतीति ॥११६॥

पंचमपृथिव्या आगता यल्लभंते यच्च न लभंते तदाह;—

**होज्जदु संजमलाभो पंचमखिदिणिग्गतस्स जीवस्स ।**
**णत्थि पुण अंतकिरिया णियमा भवसंकिलेसेण ॥ ११७॥**

**भवतु संयमलाभः पंचमक्षितिनिर्गतस्य जीवस्य ।**
**नास्ति पुनः अंतक्रिया नियमात् भवसंक्लेशेन ॥ ११७ ॥**

**टीका**—पंचमपृथिव्या निर्गतस्य जीवस्य भवत्येव संयमलाभः, अंतक्रिया मोक्षगमनं पुनर्नियमान्नास्ति भवसंक्लेशदोषेणेति । यद्यपि पंचमनरकादागतस्य संयमलाभो भवति तथापि मोक्षगमनं नास्ति भवसंक्लेशदोषेणेति ॥ ११७ ॥

चतुर्थ्या आगतस्य यद्भवति तदाह;—

**होज्जदु णिव्वुदिगमणं चउत्थिखिदिणिग्गदस्स जीवस्स।**
**णियमा तित्थयरत्तं णत्थित्ति जिणेहिं पण्णत्तं ॥ ११८॥**

**भवतु निर्वृतिगमनं चतुर्थीक्षितिनिर्गतस्य जीवस्य ।**
**नियमात्तीर्थंकरत्वं नास्तीति जिनैः प्रज्ञप्तम् ॥ ११८ ॥**

**टीका**—चतुर्थक्षितेरागतस्य जीवस्य भवत्येव निर्वृतिगमनं, तीर्थंकरत्वं पुनर्निश्चयेन नास्ति जिनैः प्रज्ञप्रमेतत् । चतुर्थनरकादागतस्य यद्यपि निर्वृतिगमनं भवति जीवस्य तथापि तीर्थंकरत्वं नास्ति, नात्र संदेहो जिनैः प्रतिपादितत्वादिति ॥ ११८ ॥

तत ऊर्द्ध्वमाह;—

**तेण परं पुढवीसु भयणिज्जा उवरिमा हु णेरइया ।**
**णियमा अणंतरभवे तित्थयरत्तस्स उत्पत्ती ॥ ११९ ॥**

**तेन परं पृथिवीषु च भजनीया उपरितमास्तु नारकाः ।**
**नियमादनंतरभवेन तीर्थंकरत्वस्योत्पत्तिः ॥ ११९ ॥**

**टीका**—तेन परं तस्माच्च पृथिव्या ऊर्द्ध्वं पुढवीसु य पृथिवीषु च प्रथमद्वितीयतृतीयप्रभासु भयणिज्जा भाज्या विभाज्या उवरिमा उपरितमा णेरइया नारकाः नियमादनंतरभवेन तीर्थंकरत्वस्योत्पत्तिः । तृतीयद्वितीयप्रथमेभ्यो नरकेभ्य आगतानां नारकाणां तेनैव भवेन संयमलाभो मोक्षगतिस्तीर्थंकरत्वं च संभवति नात्र प्रतिषेध इति ॥ ११९ ॥

सप्तभ्यः पृथिवीभ्य आगतास्तेनैव भवेन यन्न लभंते तदाह;—

**णिरयेहिं णिग्गदाणं अणंतरभवम्हि णत्थि णियमादो ।**
**बलदेववासुदेवत्तणं च तह चक्कवट्टित्तं ॥ १२० ॥**

**नरकेभ्यो निर्गतानां अंतरभवे नास्ति नियमात् ।**
**बलदेववासुदेवत्वं च तथा चक्रवर्तित्वम् ॥ १२० ॥**

**टीका**—नरकेभ्यो निर्गतानामनंतरभवे नास्ति नियमात् बलदेवत्वं वासुदेवत्वं तथा सकलचक्रवर्त्तित्वं च । नरकादागतस्य तेनैव भवेन बलदेववासुदेवचक्रवर्त्तिभावा न संभवंति संयमपूर्वका यतः नरके च संयमेन गमनं नास्तीति ॥ १२० ॥

नारकाणां गत्यागतिस्वरूपमुपसंहरन् शेषाणां च सूचयन्नाह;—

**उववादोवट्टणमा णेरइयाणं समासदो भणिओ ।**
**एत्तो सेसाणं पि य आगदिगदिमो पवक्खामी ॥ १२१ ॥**

**उपपादोद्वर्त्तने नारकाणां समासतो भणिते ।**
**इतः शेषाणामपि च आगतिगती प्रवक्ष्यामि ॥ १२१ ॥**

**टीका**—उपपादोद्वर्त्तने गत्यागती नारकाणां समासतो भणिते प्रतिपादिते, इत ऊर्द्ध्वं शेषाणां तिर्यङ्मनुष्यदेवानां च ये संभवतो गत्यागती ते प्रवक्ष्याम्यागमबलाद्भणिष्यामीति ॥ १२१ ॥

**सव्वमपज्जत्ताणं सुहुमकायाण सव्वतेऊणं ।**
**वाऊणमसण्णीणं आगमणं तिरियमणुसेहिं ॥ १२२ ॥**

**सर्वापर्याप्तानां सूक्ष्मकायानां सर्वतेजसां ।**
**वायूनामसंज्ञिनामागमनं तिर्यङ्मनुष्येभ्यः ॥ १२२ ॥**

**टीका**—सव्व सर्वेषां अपज्जत्ताणं अपर्याप्तानां सुहुमकायाणं सूक्ष्मकायानां सव्वतेऊणं सर्वतेजस्कायानां वाऊणं वायुकायानां असण्णीणं असंज्ञिनां अत्रापि सर्वशब्दः संबंधनीयः सर्ववायुकायानां सर्वासंज्ञिनां चागमनमागातिः तिरियमणुसेहिं तिर्यङ्मनुष्यैः । पृथिवीकायिकाप्कायिकतेजस्कायिकवायुकायिकवनस्पतिकायिका द्वीन्द्रियत्रीन्द्रियचतुरिंद्रियपंचेंद्रियाणां ये लब्ध्यपर्याप्तास्तेषु मध्येषु तिर्यंचो मनुष्याश्चोत्पद्यंते तथा पृथिवीकायिकादिवनस्पतिपर्यन्तेषु सर्वसूक्ष्मेष्वपर्याप्तेषु तथा तेजःकायिकवायुकायिकेषु बादरेषु पर्याप्तापर्याप्तेषु असंज्ञिषु च तिर्यङ्मनुष्या एवोत्पद्यंते न देवा नापि नारका न चैव भोगभूमिजा भोगभूमिप्रतिभागजाश्चेति ॥ १२२ ॥

अतः पृथिवीकायादयो गत्वा क्वोत्पद्यंत इत्याशंकायामाह;—

**तिण्हं खलु कायाणं तहेव विगलिंदियाण सव्वेसिं ।**
**अविरुद्धं संकमणं माणुसतिरिएसु य भवेसु ॥ १२३ ॥**

**त्रयाणां खलु कायानां तथैव विकलेंद्रियाणां सर्वेषाम् ।**
**अविरुद्धं संक्रमणं मानुषतिर्यक्षु च भवेषु ॥ १२३ ॥**

**टीका**—तिण्हं त्रणायां खलु स्फुटं कायाणं कायानां पृथिवीकायाप्कायवनस्पतिकायानां तहेव तथैव विगलिंदियाणं सव्वेंषां विकलेंद्रियाणां पर्याप्तापर्याप्तानां अविरुद्धं अप्रतिपिद्धं संक्रमणं गमनं माणुस मनुष्यभवे तिरियि तिर्यग्भवे । पृथिवीकायिकाप्कायिकवनस्पतिकायिकाः सर्वे विकलेंद्रियाश्चागत्य तिर्यक्षु मनुष्येषु चोत्पद्यंते नात्र विरोध इति ॥ १२३ ॥

तेजोवायूनां संक्रमणमाह;—

**सव्वेवि तेउकाया सव्वे तह वाउकाइया जीवा ।**
**ण लहंति माणुसत्तं णियमादु अणंतरभवेहिं ॥ १२४ ॥**

**सर्वेपि तेजःकायाः सर्वे तथा वायुकायिका जीवाः ।**
**न लभंते मानुषत्वं नियमात् अनंतरभवेन ॥ १२४ ॥**

टीका—सर्वेऽपि वादरसूक्ष्मपर्याप्तापर्याप्ता तेजस्कायिकास्तथैव सर्वे वादरसूक्ष्मपर्याप्तापर्याप्ताः वायुकायिका जीवा न लभंते न प्राप्नुवंति मनुष्यत्वं नियमात्तु अनंतरभवेन तेनैव भवेनेति ॥ १२४ ॥

प्रत्येकवनस्पतिपृथिवीकायाप्कायबादरपर्याप्तानामागमनमाह;—

**पत्तेयदेहा वणप्फइ वादरपज्जत्त पुढवि आऊय ।**
**माणुसतिरिक्खदेवेहिं चेवाइंति खलु एदे ॥ १२५ ॥**

**प्रत्येकदेहा वनस्पतयो बादराः पर्याप्ताः पृथिवी आपश्च ।**
**मानुषतिर्यग्देवेभ्यः एव आयांति खलु एते ॥ १२५ ॥**

टीका-प्रत्येकदेहाः नालिकेरादिवनस्पतयः बादराः पर्याप्ता पृथिवीकायिका आप्कायिकाश्चैतेऽपि बादराः पर्याप्तापर्याप्ताश्च मनुष्यतिर्यग्देवेभ्य एवायांति स्फुटमेतत् नान्येभ्य इति । मनुष्यतिर्यग्देवाः संक्लिष्टा आर्तध्यानपरा मिथ्यादृष्टय आगत्य प्रत्येकवनस्पतिपृथिवीकायिकाप्कायिकेषूत्पद्यंत इति ॥ १२५ ॥

असंज्ञिपर्याप्तानां संक्रमणमाह;—

**अविरुद्धं संकमणं असण्णिपज्जत्तयाण तिरियाणं ।**
**माणुसतिरिक्खसुरणारएसु ण दु सव्वभावेसु ॥ १२६ ॥**

**अविरुद्धं संक्रमणं असंज्ञिपर्याप्तकानां तिरश्चां ।**
**मानुषतिर्यक्सुरनारकेषु न तु सर्वभावेषु ॥ १२६ ॥**

टीका—असंज्ञिपर्याप्तकानां तिरश्चां संक्रमणमविरुद्धं न विरोधमुपयाति क्व मनुष्यतिर्यक्सुरनारकेषु चतसृषु गतिष्वपि व्रजंति न तु सर्वभावेषु नैव सर्वेषु नारकतिर्यङ्मनुष्यदेवपर्यायेषु यतः प्रथमायामेव पृथिव्यामुत्पद्यंतेऽसंज्ञिनस्तथा देवेषु भवनवासिव्यंतरज्योतिष्केषूत्पद्यंते नान्यत्र तथा भोगभूमिजेषु तत्प्रतिभागजेष्वन्येष्वपि पुण्यवत्सु तिर्यङ्मनुष्येषु नोत्पद्यंते ॥ १२६ ॥

अथासंख्यातायुषः केभ्य आगच्छंतीत्याह,—

**संखादीदाओ खलु माणुसतिरिया दु मणुयतिरियेहिं ।**
**संखिज्जआउगेहिं दु णियमा सण्णीय आयंति ॥ १२७ ॥**

**संख्यातीतायुषः खलु मानुषतिर्यंचस्तु मनुष्यतिर्यग्भ्यः ।**
**संख्यातायुष्केभ्यस्तु नियमात् संज्ञिभ्यः आयान्ति ॥ १२७ ॥**

टीका—संख्यातीतायुषः भोगभूमिजा भोगभूमिप्रातिभागजाश्च मनुष्यस्तिर्यंचः संख्यातायुष्केभ्यो मनुष्यतिर्यग्भ्यः संज्ञिभ्योऽपि नियमेनायांति व्यक्तमेतत् नान्यत्र दानानुमोदोऽदत्तादानफलं च यत इति ॥ १२७ ॥

अथ संख्यातीतायुषो मृत्वा कां गतिं गच्छंतीत्याशंकयामाह,—

**संखादीदाऊणं संकमणं णियमदो दु देवेसु ।**
**पयडीए तणुकसाया सव्वेसिं तेण बोधव्वा ॥ १२८ ॥**

**संख्यातीतायुषां संक्रमणं नियमस्तु देवेषु ।**
**प्रकृत्या तनुकषायाः सर्वेषां तेन बोद्धव्याः ॥ १२८ ॥**

टीका—संख्यातीतायुषां भोगभूमिजानां भोगभूमिप्रातिभागजानां च संक्रमणं मृत्वोत्पादः नियमतस्तु देवेषु, कुत एतत् यतः प्रकृत्या स्वभावेन तेषां तनवोल्पाः कषायाः क्रोधमानमायालोभास्तेन ते देवेषूत्पद्यंत इति ज्ञातव्यं नात्र शंका कर्त्तव्येति ॥ १२८ ॥

अथ केभ्य आगत्य शलाका पुरुषा भवंति केभ्यश्च न भवंतीत्याशंकायामाह;—

**माणुस तिरियाय तहा सलागपुरिसा ण होंति खलु णियमा ।**
**तेसिं अणंतरभवे भयणिज्जं णिव्वुदीगमणं ॥ १२९ ॥**

**मनुष्या स्तिर्यंचश्च तथा शलाकापुरुषा न भवंति खलु नियमात् ।**
**तेषां अनंतरभवे भजनीयं निर्वृतिगमनं ॥ १२९ ॥**

**टीका**—मनुष्यास्तथा तिर्यंचश्च शलाकापुरुषास्तीर्थकरचक्रवर्तिबलदेववासुदेवा न भवंति नियमात् निर्वृतिगमनं तु भाज्यं तेषां कदाचिदनंतर भवे न तेनैव भवे नवा भवति मनुष्याणां, न तु तिरश्चां युक्तमेतत् निर्वृतिगमनकारणं तु भवत्येव तिरश्चामपि सम्यक्त्वादिकं तेन न दोष इति ॥१२९॥

अथ मिथ्योपपादः क इत्याशंकायामाह;—

**सण्णि असण्णीण तहा वाणेसु य तह य भवणवासीसु ।**
**उववादो बोधव्वो मिच्छादिट्ठीण णियमादु ॥ १३० ॥**

**संज्ञिनां असंज्ञिनां तथा वानेषु च तथा च भवनवासिषु ।**
**उपपादो बोद्धव्यो मिथ्यादृष्टीनां नियमात् ॥ १३० ॥**

**टीका**—संज्ञिनामसंज्ञिनां च मिथ्यादृष्टीनां उपपादो मृत्वोत्पत्तिः कदाचिद्वानव्यंतरेषु कदाचिद्भवनवासिषु च बोद्धव्यो नियमेन, नात्र विरोध एतेषूत्पद्यंतेऽन्यत्र च परिणामवशादिति ॥ १३० ॥

अथ ज्योतिकिषु क उत्पद्यंत इत्याशंकायामाह;—

**संखादीदाऊणं मणुयतिरिक्खाण मिच्छभावेण ।**
**उववादो जोदिसिए उक्कस्सं तावसाणं दु ॥ १३१ ॥**

**संख्यातीतायुषां मनुष्यतिरश्चां मिथ्यात्वभावेन ।**
**उपपादो ज्योतिष्केषु उत्कृष्टस्तापसानां तु ॥ १३१ ॥**

---

१ क इति भाति ।

टीका—संख्यातीतायुषामसंख्यातवर्षप्रमाणायुषां मनुष्याणां तिरश्चां च मिथ्यात्वभावेनोपपादः भवनवास्यादिषु ज्योतिष्कदेवेषु कंदफलाद्याहाराणां तापसानां चोत्कृष्ट उपपाद स्तेष्वेवं ज्योतिष्केषु शुभपरिणामेनान्येनेति ॥ १३१ ॥

अथाजीवकपरिव्राजकानां शुभपरिणामेन कियद्दूरगमनमित्याशंकायामाह;—

**परिवायगाण णियमा उक्कस्सं होदि वंभलोगम्हि ।**
**उक्कस्स सहस्सार त्ति होदि य आजीवगाण तहा ॥ १३२॥**

**परिव्राजकानां नियमात् उत्कृष्टो भवति ब्रह्मलोके ।**
**उत्कृष्टः सहस्रार इति भवति च आजीवकानां तथा ॥ १३२**

टीका—परिव्राजकानां संन्यासिनां शुभपरिणामेन नियमात् उत्कृष्ट उपपादो भवनवास्यादिब्रह्मलोके भवंति, आजीवकानां तथोपपादो भवन वास्यादि सहस्रारं यावद्भवति सर्वोत्कृष्टाचरणेन मिथ्यात्वभावेन शुभपरिणामेनेति वक्तव्यं नान्यथेति । अन्येषां च लिंगिनां भवनादिषु च द्रष्टव्यं शुभपरिणामेनेति ॥ १३२ ॥

अथोर्ध्वं क उत्पद्यंत इत्याह;—

**तत्तो परं तु णियमा उववादो णत्थि अण्णलिंगीणं ।**
**णिग्गंथसावगाणं उववादो अच्चुदं जाव ॥ १३३ ॥**

**ततः परं तु नियमात् उपपादो नास्ति अन्यलिंगिनां ।**
**निर्ग्रंथश्रावकाणां उपपादः अच्युतं यावत् ॥ १३३ ॥**

टीका—ततः सहस्रारादूर्ध्वं परेषु कल्पेषु नियमादुपपादो नास्त्यन्यलिंगिनां परमोत्कृष्टाचरणेनापि, निर्ग्रन्थानां श्रावकाणां आर्यिकाणां च शुभ परिणामेनोत्कृष्टाचरणेनोपपादः सौधर्ममादिं कृत्वा यावदच्युतकल्पः निश्चितमेतादिति ॥ १३३ ॥

अथाभव्या जिनलिंगेन कियद्दूरं गच्छंतीत्याशंकायामाह;—

**जाउवरिमगेवेज्जं उववादो अभवियाण उक्कस्सो ।**
**उक्कट्ठेण तवेण दु णियमा णिग्गंथलिंगेण ॥ १३४ ॥**

**यावत् उपरिमग्रैवेयकं उपपादः अभव्यानां उत्कृष्टः ।**
**उत्कृष्टेन तपसा तु नियमान्निर्ग्रंथलिंगेन ॥ १३४ ॥**

**टीका**—अभव्यानां निर्ग्रन्थलिंगेनोत्कृष्टतपसा निश्चयेनोत्पाद उत्कृष्टः भवनवासिनमादिं कृत्वोपरिमग्रैवेयकं यावन्मिथ्यात्वभावेन शुभपरिणामेन रागद्वेषाद्यभावेनेति वक्तव्यं ॥ १३४ ॥

अथोपरि के न गच्छंतीत्याशंकायामाह;—

**तत्तो परं तु णियमा तवदंसणणाणचरणजुत्ताणं ।**
**णिग्गंथाणुववादो जावदु सव्वट्ठसिद्धित्ति ॥ १३५ ॥**

**ततः परं तु नियमात् तपोदर्शनज्ञानचरणयुक्तानाम् ।**
**निर्ग्रंथानामुपपादः यावत् सर्वार्थसिद्धिरिति ॥ १३५ ॥**

**टीका**—ततः सर्वोत्कृष्टग्रैवेयकादूर्ध्वं परेषु नवोनुत्तरादिषु सौधर्मादिषु च निर्ग्रन्थानां सर्वसंगपरित्यागिनां तपोदर्शनज्ञानचरणयुक्तानां चरमदेहिनां शुभपरिणामिनां निश्चयेनोपपादः सर्वार्थसिद्धिर्यावत् । सर्वार्थसिद्धिमंतं कृत्वा सर्वेषु सौधर्मादिषूत्पद्यंत इति ॥ १३५ ॥

अथ देवा आगत्य क्वोत्पद्यंत इत्याशंकायामाह;—

**आईसाणा देवा चएत्तु एइंदिएत्तणे भज्जा ।**
**तिरियत्तमाणुसत्ते भयणिज्जा जाव सहसारा ॥ १३६ ॥**

**आ ईशानात् देवाः च्युत्वा एकेंद्रियत्वेन भाज्याः ।**
**तिर्यक्त्वमानुषत्वेन भजनीया यावत् सहस्रारं ॥ १३६ ॥**

**टीका**—भवनवासिनमादिं कृत्वा आ ईशानात् ईशानकल्पो देवाश्च्युत्वा एकेंद्रियत्वेन भाज्याः कदाचिदार्त्तध्यानेनागत्य ..कायिकप्रत्येकवनस्पतिकायिकेषु बादरेषूत्पद्यंत [illegible]

द्रियपर्याप्ततिर्यङ्मनुष्येषु भोगभूमिजादिवर्जितेषु तत ऊर्द्ध्वं सहस्रारं यावत् देवाश्च्युत्वा तिर्यक्त्वेन मनुष्यत्वेन च भाज्याः नैते एकेंद्रियेषूत्पद्यंते पुनस्तिर्यग्ग्रहणान्नारकदेवविकलेंद्रियासंज्ञिसूक्ष्मापर्याप्तसर्वतेजोवायुभोगभूमिजादिषु सर्वे देवा नोत्पद्यंत इति च द्रष्टव्यं ॥ १३६ ॥

उपरितनानामाह;—

**तत्तो परं तु णियमा देवावि अणंतरे भवे सव्वे ।**
**उववज्जंति मणुस्से ण तेसिं तिरिएसु उववादो ॥ १३७ ॥**

**ततः परं तु नियमात् देवा अपि अनंतरे भवे सर्वे ।**
**उत्पद्यंते मानुष्ये न तेषां तिर्यक्षु उपपादः ॥ १३७ ॥**

**टीका**—ततः सहस्रारादुपरि नियमाद्देवाः सर्वेऽपि अनंतरभवेन मनुष्येषूत्पद्यंते न तेषां तिर्यक्षूपपादः च्यवनकाले महतः संक्लेशस्याभावो यत इति ॥ १३७ ॥

शलाकापुरुषा आगत्य ये देवा न भवंति तान्प्रतिपादयन्नाह;—

**आजोदिसित्ति देवा सलागपुरिसा ण होंति ते णियमा ।**
**तेसिं अणंतरभवे भयणिज्जं णिव्वुदीगमणं ॥ १३८ ॥**
**आज्योतिष इति देवा शलाकापुरुषा न भवंति ते नियमात् ।**
**तेषामनंतरभवे भाज्यं निर्वृतिगमनं ॥ १३८ ॥**

**टीका**—आ ज्योतिषो देवा भवनवासिन आदौ कृत्वा ज्योतिष्का यावद्देवाः शलाकापुरुषा न भवति तीर्थंकरचक्रवर्तिबलदेववासुदेवा न भवंतीति निश्चयेन निर्वृतिगमनं पुनस्तेषामनंतरभवे भाज्यं कदाचिद्भवति कदाचिन्नेति तस्य सर्वथा प्रतिषेध्योनास्तीति ॥ १३८ ॥

अथ के शलाकापुरुषा भवंतीत्याशंकायामाह;—

**तत्तो परं तु गेवेज्जं[1] भयणिज्जा सलागपुरिसा दु ।**
**तेसिं अणंतरभवे भयणिज्जा णिव्वुदीगमणं ॥ १३९ ॥**

१ गेवज्जं इत्यपि पाठः ।

**ततः परं तु ग्रैवेयकं भजनीयाः शलाकापुरुषास्तु ।**
**तेषामनंतरभवे भजनीयं निर्वृतिगमनं ॥ १३९ ॥**

टीका—ततः परं सौधर्मंप्रारभ्य नवग्रैवयेकं यावत्तेभ्यो देवा आगत्य शलाकापुरुषा भवंति न भवंतीति भाज्यास्तेषामनंतरभवेन च निर्वृतिगमनं भाज्यं कदाचिद्भवति कदाचिन्नेति ॥ १३९ ॥

तत ऊर्ध्वं वासुदेवा आगत्य भवंतीति प्रतिपादयन्नाह;—

**णिव्वुदिगमणे रामत्तणे य तित्थयरचक्कवट्टित्ते ।**
**अणुदिसणुत्तरवासी तदो चुदा होंति भयणिज्जा ॥१४०॥**

**निवृत्तिर्गमनेन रामत्वेन च तीर्थंकरचक्रवर्तित्वेन ।**
**अनुदिशानुत्तरवासिनः तेभ्यः च्युता भवंति भजनीया ॥ १४० ॥**

टीका—निर्वृतिगमनेन रामत्वेन तीर्थंकरत्वेन चक्रवर्तित्वेन च भाज्याः अनुदिशानुत्तरवासिनो देवास्तेभ्यो विमानेभ्यश्च्युताः संतः कदाचित्तीर्थंकररामचक्रवर्तिनो मुक्ताश्च भवंति न भवंति च, वासुदेवाः पुनर्न भवंति एवेति ॥ १४० ॥

ये पुनर्निश्चयेन निर्वृतिं गच्छंति तान् प्रतिपादयन्नाह;—

**सव्वट्ठादो य चुदा भज्जा तित्थयरचक्कवट्टित्ते ।**
**रामत्तणेण भज्जा णियमा पुण णिव्वुदिं जंति ॥ १४१ ॥**

**सर्वार्थाच्च च्युता भाज्याः तीर्थंकरचक्रवर्तित्वेन ।**
**रामत्वेन भाज्या नियमात् पुनर्निर्वृतिं यांति ॥ १४१ ॥**

टीका—सर्वार्थात्सर्वार्थसिद्धेश्च्युता देवास्तीर्थंकरत्वेन चक्रवर्तित्वेन रामत्वेन च भाज्याः, निर्वृतिं पुनर्निश्चयेन यांत्येव न तत्र विकल्पः सर्वे त आगत्य चरमदेहा भवंति तीर्थंकरचक्रवर्तिरामविभूतिं भुक्त्वा मंडलिकादिविभूतिं च संयममादाय नियमान्मुक्तिं गच्छंति ॥ १४१ ॥

पुनरपि निश्चयेन ये ये सिद्धिं गच्छंति तान् प्रतिपादयन्नाह;—

**सक्को सहग्गमहिसी सलोगपाला य दक्खिणिंदा य ॥**
**लोगंतिगा य णियमा चुदा दु खलु णिव्वुदिं जंति ॥ १४२ ॥**

**शक्रः सहाग्रमहिषी सलोकपालाश्च दक्षिणेंद्राश्च ।**
**लौकांतिकाश्च नियमात् च्युतास्तु खलु निर्वृतिं यांति । १४२ ॥**

**टीका**—शक्रः सौधर्मेंद्रः सहाग्रमहिषी अग्रमहिषी शची तया सह वर्तत इति साग्रमहिषी सलोकपालाः लोकान् पालयंतीति लोकपालाः चरारक्षिकसमानास्तैः सह वर्त्तन्त इति सलोकपालाः दक्षिणेंद्राश्च दक्षिणशब्दः प्रथमोच्चरणे वर्त्तते तेन सनत्कुमारब्रह्मलांतवशतारानतारणेन्द्राणां ग्रहणं च शब्देनान्येषां च, लौकांतिकाश्च सारस्वतादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधारिष्टाश्चाष्टप्रकारा ब्रह्मलोकवासिनो देवर्षयो नियमात् च्युता मनुष्यक्षेत्रमागता निर्वृतिं यांति । सौधर्मो मनुष्यभवं प्राप्य मोक्षं याति तथा तस्याग्रमहिषी लोकपालाश्च मनुष्यत्वं प्राप्य नियमतो निर्वृतिं यांति तथा दक्षिणेंद्रा लौकांतिकाश्च चरमदेहतां प्राप्य निश्चयेन मुक्तिं गच्छंति स्फुटमेतन्नात्र संदेह इति ॥ १४२ ॥

गत्यागत्यधिकारं समुच्चयन्नाह;—

**एवं तु सारसमए भणिदा दु गदीगदी मया किंचि ।**
**णियमादु मणुसगदिए णिव्वुदिगमणं अणुण्णादं॥ १४३॥**

**एकेन्द्रियादयः प्राणाः चतुर्दश तु भवंति जीवस्थानानि ।**
**गुणस्थानानि च चतुर्दश मार्गणास्थानान्यपि तथैव ॥ १४३॥**

**टीका**—एवं तु अनेन प्रकारेण सारसमये व्याख्याप्रज्ञप्त्यां सिद्धांते तस्माद्वा भणिते गत्यागती गतिश्च भणिता आगतिश्च भणिता मया किंचित् स्तोकरूपेण । सारसमयादुद्धृत्य गत्यागतिस्वरूपं स्तोकं मया प्रतिपादितमित्यर्थः । निर्वृतिगमनं पुनर्मनुष्यगत्यामेव निश्चयेनानुज्ञातं जिनवरैर्नान्यासु गतिषु तत्र संयमाभावादिति ॥ १४३ ॥

अथ कैः किंभूताः कैः कृत्वा निर्वृतिं यांतीत्याशंकायामाह;—

**सम्मदंसणणाणेहिं भाविदा सयलसंजमगुणेहिं ।**
**णिट्ठवियसव्वकम्मा णिग्गंथा णिव्वुदिं जंति ॥ १४४ ॥**

**सम्यग्दर्शनज्ञानाभ्यां भाविताः सकलसंयमगुणैः ।**
**निष्ठापितसर्वकर्माणो निर्ग्रन्था निर्वृतिं यांति ॥ १४४ ॥**

**टीका**—सम्यग्दर्शनज्ञानाभ्यां भाविताः सकलसंयमगुणैश्च भाविताः यथाख्यातसंयमविशुद्धिवर्द्धिता निष्ठापितसर्वकर्माणः विनाशितसर्वकर्मभूता संतो निर्ग्रंथा अनंतचतुष्टयसहाया निर्वृतिं यांति नात्र संदेह इति ॥ १४४ ॥

अथ ते तत्र गत्वा कीदृग्भूतं सुखमनुभवंति कियंतं कालमधितिष्ठंतीत्याशंकायामाह;—

**ते अजरमरुजममरमसरीरमक्खयमणुवमं सोक्खं ।**
**अव्वाबाधमणंतं अणागदं कालमत्थंति ॥ १४५ ॥**

**ते अजरमरुजममरमशरीरमक्षयमनुपमं सौख्यं ।**
**अव्याबाधमनंतं अनागतं कालं तिष्ठंति ॥ १४५ ॥**

**टीका**—ते मुक्तिं प्राप्ता अजरं न विद्यते जरावस्था वृद्धत्वं यत्र तदजरं, न विद्यते रुजा रोगो यत्र तदरुजं; न म्रियते यत्र तदमरं, अशरीरं औदारिकादिपंचशीररहितं, अक्षयं क्षयरहितं शाश्वतं सुखं अनंतज्ञानदर्शनसुखवीर्यरूपं, अव्याबाधं अन्योपघातविनिर्मुक्तं, अनंतमनागतं कालमधितिष्ठंति भविष्यत्कालपर्यंतं परमसुखे निमग्नास्तिष्ठंतीति ॥ १४५ ॥

गत्यागतिस्वरूपं निरूप्य स्थानाधिकारं प्रतिपादयन्नाह;—

**एइंदियादि पाणाचौद्दस दु हवंति जीवठाणाणि ।**
**गुणठाणाणि य चौद्दस मग्गणठाणाणिवि तहेव १४६ ॥**

**एकेंद्रियादयः प्राणाः चतुर्दश तु भवंति जीवस्थानानि ।**
**गुणस्थानानि च चतुर्दश मार्गणास्थानान्यपि तथैव १४६**

टीका—जीवस्थानान्याधारभूतानेकेंद्रियादीन् प्रतिपादयति एकेंद्रियादय एकं सूत्रं प्राणो द्वितीयं सूत्रं चतुर्दश जीवस्थानानि भवंति तृतीयं सूत्रं गुणस्थानानि चतुर्दश चतुर्थं सूत्रं मार्गणास्थानानि चतुर्दश भवंति पंचमं सूत्रं पंचत्रिःसंग्रहस्तत्र संग्रहस्थानसूत्रं व्याख्यायते—जीवास्तिष्ठंति येषु तानि जीवस्थानानि, गुणा मिथ्यात्वादयो निरूप्यंते येषु तानि गुणस्थानानि, जीवा मृग्यते येषु यैर्वा तानि मार्गणास्थानानि इति ॥ १४६ ॥

अथ का मार्गणाऽऽदौ जीवगुणमार्गणा का इत्याशंकायामाह,—

**गदिआदिमग्गणाओ परूविदाओ य चोद्दसा चेव ।**
**एदेसिं खलु भेदा किंचि समासेण वोच्छामि ॥ १४७॥**

**गत्यादिमार्गणाः प्ररूपिताश्च चतुर्दश चैव ।**
**एतेषां खलु भेदाः कियंतः समासेन वक्ष्यामि ॥ १४७ ॥**

टीका—गत्यादिमार्गणाश्चतुर्दश एवागमे निरूपिताः, चशब्दाद्वादरेकेंद्रियादीनि जीवस्थानानि चतुर्दश मिथ्यादृष्ट्यादीनि गुणस्थानानि चतुर्दशेत्येतेषां भेदान्कियतः समासेन संक्षेपेण प्रवक्ष्यमीति ॥ १४७ ॥

एवं सर्वमाक्षिप्यैकेंद्रियादिभेदांस्तावत्प्रतिपादयन्नाह;—

**एइंदियादि जीवा पंचविधा भयवदा दु पण्णत्ता ।**
**पुढवीकायादीया विगला पंचेंदिया चेव ॥ १४८ ॥**

**एकेंद्रियादयः जीवाः पंचविधा भगवता तु प्रज्ञप्ताः ।**
**पृथिवीकायादयः विकलाः पंचेंद्रिया एव ॥ १४८ ॥**

टीका—ये एकेंद्रियादयो जीवाः संग्रहसूत्रेण सूचितास्ते पंचविधाः पंचप्रकारा एव भगवता प्रज्ञप्ताः । के ते पंचप्रकारा इत्याशंकायामाह;—

पृथिवीकायिकादय एकः प्रकारः, विकलेंद्रिया द्वितीयः प्रकारः, त्रींद्रियास्तृतीयः प्रकारः, चतुरिंद्रियाः चतुर्थः प्रकारः, तथा पंचेंद्रियाः पंचमः प्रकारः। पंचप्रकारा एव न षट्प्रकार नापि चत्वार इति ॥ १४८॥

पृथिवीकायादिभेदा उत्तरत्र प्रबंधेन प्रतिपाद्यंत इति कृत्वा द्वीन्द्रियादीन् प्रतिपादयन्नाह;—

**संखो गोभी भमरादिया दु विगलिंदिया मुणेदव्वा ।**
**पंचेंदिया दु जलथलखचरा सुरणारयणरा य ॥ १४९ ॥**

**शंखो गोभी भ्रमरादयस्तु विकलेंद्रिया ज्ञातव्याः ।**
**पंचेंद्रियास्तु जलस्थलखचराः सुरनारकनराश्च ॥ १४९ ॥**

**टीका**—आदिशब्दः प्रत्येकमभिसंबध्यते; शंखादयः भ्रमरादयः, गोभ्यादयः विकलेंद्रिया द्वीन्द्रियाः त्रीन्द्रियाश्चतुरिंद्रिया यथासंख्येनाभिसंबध्यते। एते शंखकुम्यक्षवराटकक्षुल्लगंडूपदादयः द्वीन्द्रिया ज्ञातव्याः, गोभींकुंथुपिपीलिकामत्कुणवृश्चिकयूकेंद्रगोपादयस्त्रीन्द्रिया ज्ञातव्याः, भ्रमरमधुकरीदंशकपतंगमक्षिकादयश्चतुरिंद्रिया ज्ञातव्याः, पंचेंद्रियास्तु जलचराः स्थलचराः खचराः सुरा नारका नराश्च ज्ञातव्या इति ॥ १४९ ॥

प्राणान् प्रतिपादयन्नाह;—

**पंचय इंदियपाणा मणवचकाया दु तिण्णि बलपाणा ।**
**आणप्पाणप्पाणा आउगपाणेण होंति दस पाणा १५०**

**पंचैव इंद्रियाणि प्राणा मनोवचनकायास्तु त्रयो बलप्राणाः ।**
**आनप्राणः प्राणः आयुःप्राणेन भवंति दश प्राणाः ॥ १५० ॥**

**टीका**—पंचेंद्रियाणि स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि पंच प्राणाः मनोवचः कायास्तु बलरूपास्त्रयः प्राणाः आनप्राणावुच्छ्वासनिःश्वासलक्षण एकः प्राणा आयुर्भवधारणलक्षणं पुद्गलप्रचय एकः प्राणा एवमेते दश प्राणा भवंतीति ॥ १५० ॥

एकेंद्रियादीनां प्राणानां च स्वस्वामिसंबंधं प्रतिपादयन्नाह;—

**इंदिय बल उस्सासा आऊ चदु छक्क सत्त अट्ठेव ।**
**एगिंदिय विगलिंदिय असण्णि सण्णीण णव दस पाणा ॥ १५१ ॥**

**इंद्रियं बलं उच्छ्वास आयुः चत्वारः षट् सप्त अष्टैव ।**
**एकेंद्रियस्य विकलेंद्रियस्य असंज्ञिनः संज्ञिनो नव दश प्राणाः ॥**

**टीका**—इंद्रियं स्पर्शनेंद्रियमेकः प्राणः, बलं कायबलं द्वितीयः प्राणः, उच्छ्वासस्तृतीयः प्राणः, आयुश्चतुर्थः प्राणः, एते चत्वारः प्राणा एकेंद्रियस्य पर्याप्तस्य भवंति पर्याप्तिरहितस्य पुनरुच्छ्वासरहिता भवंति । द्वीन्द्रियस्य पर्याप्तस्य स्पर्शनरसनकायबलवाग्बालोच्छ्वासायूंषि षट् प्राणा भवंति, अपर्याप्तस्य त एव वागुच्छ्वासरहिताश्चत्वारः । त्रीन्द्रियस्य पर्याप्तस्य स्पर्शनरसनघ्राणकायबलवाग्बलोच्छ्वासायूंषि षट् प्राणा भवंति, त एव वागुच्छ्वासरहिताः पंचापर्याप्तस्य । स्पर्शनरसनघ्राणचक्षुः कायबलवाग्बलोच्छ्वासायूंष्यष्टौ प्राणाश्चतुरिंद्रियस्य पर्याप्तस्य भवंति वागुच्छ्वासरहितास्त एव षडपर्याप्तस्य भवंति । पंचेंद्रियस्य कायबलवाग्बलोच्छ्वासायूंषि चासंज्ञिनः पर्याप्तस्य नव प्राणा भवंति त एव वागुच्छ्वासरहिताः सप्त भवंत्यपर्याप्तस्य । संज्ञिनः पर्याप्तस्य पुनः सर्वेऽपि दश प्राणा भवंति, अपर्याप्तस्य मनोवागुच्छ्वासरहितास्त एव सप्त भवंतीति ॥ १५१ ॥

जीवसमासान्निरूपयन्नाह;—

**सुहुमा वादरकाया ते खलु पज्जत्तया अपज्जत्ता ।**
**एइंदिया दु जीवा जिणेहिं कहिया चदुवियप्पा ॥ १५२**

**सूक्ष्मा वादरकायास्ते खलु पर्याप्तका अपर्याप्तकाः ।**
**एकेंद्रियास्तु जीवा जिनैः कथिताः चतुर्विकल्पाः ॥ १५२ ॥**

**टीका**—ते पुनरेकेंद्रिया बादरसूक्ष्मपर्याप्तभेदेन जिनैश्चतुर्विकल्पाः कथिता इति कृत्वा चत्वारो जीवसमासा भवंतीति ॥ १५२ ॥

शेषजीवसमासान् प्रतिपादयन्नाह;—

**पज्जत्तापज्जत्ता वि होंति विगलिंदिया दु छब्भेया ।**
**पज्जत्तापज्जत्ता सण्णि असण्णीय सेसा दु ॥ १५३ ॥**

**पर्याप्ता अपर्याप्ता अपि भवंति विकलेंद्रियास्तु षड्भेदाः ।**
**पर्याप्ता अपर्याप्ताः संज्ञिनः असंज्ञिनः शेषास्तु ॥ १५३ ॥**

**टीका**—विकलेंद्रिया द्वीन्द्रियत्रींद्रियचतुरिंद्रियाः पर्याप्तापर्याप्तभेदेन षड्भेदा भवंति तथा पंचेंद्रियाः संज्ञिनोऽसंज्ञिनः पर्याप्तापर्याप्तभेदेन चतुर्विकल्पा भवंति । एवमेते दश जीवसमासाः पूर्वोक्ताश्चत्वारः सर्वे एते चतुर्दश जीवसमासा भवंतीति ॥ १५३ ॥

गुणस्थानानि प्रतिपादयन्ननंतरं सूत्रद्वयमाह;—

**मिच्छादिट्ठी सासादणो य मिस्सो असंजदो चेव ।**
**देसविरदो पमत्तो अपमत्तो तह य णायव्वो ॥ १५४ ॥**
**एत्तो अपुव्वकरणो अणियट्टी सुहुमसंपराओ य ।**
**उवसंतखीणमोहो सजोगिकेवलिजिणो अजोगी य १५५**

**मिथ्यादृष्टिः सासादनश्च मिश्रः असंयतश्चैव ।**
**देशविरतः प्रमत्तः अप्रमत्तः तथा च ज्ञातव्यः ॥ १५४ ॥**
**इतः अपूर्वकरणः अनिवृत्तिः सूक्ष्मसांपरायश्च ।**
**उपशांतक्षीणमोहौ सयोगिकेवलिजिनः अयोगी च ॥ १५५ ॥**

**टीका**—मिथ्या वितथाऽसत्या दृष्टिर्दर्शनं विपरीतैकांतविनयसंशयाज्ञानरूपमिथ्यात्वकर्मोदयजनिता येषां ते मिथ्यादृष्टयोऽथवा मिथ्या वितथं तत्र दृष्टी रुचिः श्रद्धा प्रत्ययो येषां ते मिथ्यादृष्टयोऽनेकांततत्वपराङ्मुखाः । आसादनं सम्यक्त्वविराधनं सहासादनेन वर्त्तत इति सासादनो विनाशित-

सम्यद्दर्शनः । अप्राप्तमिथ्यात्वकर्मोदयजनितपरिणामः मिथ्यात्वाभिमुखः । दृष्टिः श्रद्धा रुचिः एकार्थः समीचीना च मिथ्या च दृष्टिर्यस्यासौ सम्यङ्मिथ्यादृष्टिः सम्यङ्मिथ्यात्वोद्दयजनितपरिणामः सम्यक्त्वमिथ्यात्वयोरुदयप्राप्तस्पर्द्धकानां क्षयात् सतामुदयाभावलक्षणोपशमाच्च सम्यङ्मिथ्यादृष्टिः समीचीना दृष्टिः श्रद्धा यस्यासौ सम्यग्दृष्टिः असंयतश्चासौ सम्यग्दृष्टिश्चासंयतसम्यग्दृष्टिः क्षायिकक्षायोपशमिकौपशमिकदृष्टिभेदेन त्रिविधः सप्तप्रकृतीनां क्षयः क्षयोपशमेनोपशमेन च स्यात् । संयतश्च संयतासंयतः न चात्रविरोधः संयमासंयमयोरेकद्रव्यवर्तिनोः त्रसस्थावरनिवंधनत्वात् अप्रत्याख्यानवरणस्य सर्वघातिस्पर्द्धकानामुदयक्षयात्सतां चोपशमात्प्रत्याख्यानवरणीयोदयाच्च संयमासंयमो गुणः । प्रकर्षेण प्रमादवंतः प्रमत्ताः सम्यक्यताः संयताः प्रमत्ताश्च ते संयताश्च प्रमत्तसंयताः नात्र विरोधो यतः संयमो नाम हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्गुप्तिसमित्यनुरक्षितोऽसौ प्रमादेन (न) विनाश्यत इति, प्रमत्तवचनं अंतदीपकत्वात् शेषातीतसर्वगुणेषु प्रमत्ताश्रितत्वं सूचयति, प्रमत्तसंयतः संयमे(मो)ऽपि क्षायोपशमिकः संयमनिवंधनःसम्यक्त्वापेक्षया क्षायोपशमिकगुणनिवंधनः प्रमत्तसंयताः पूर्वोक्तलक्षणोनप्रमत्तसंयता अप्रमत्तसंयताः पंचदशप्रमादरहिताः एषोऽपि क्षायोपशमिकगुणः प्रत्याख्यानावरणस्य कर्मणः सर्वघातिस्पर्द्धकानां उदयक्षयात् तेषामेव सतां पूर्ववदुपशमात्संज्वलनोदयाच्च । प्रत्याख्यानोत्पत्तेः आदिदीपकत्वाच्छेषाणां सर्वेषामप्रमत्तत्वं । करणाः परिणामा न पूर्वा अपूर्वा अपूर्वाः करणा यस्यासौ अपूर्वकरणः स द्विविधः उपशमः, क्षपकक, कर्मणामुपशमनक्षपणनिबंधनत्वात् । क्षपकस्य क्षायिको गुणः, उपशमकस्य क्षायिक औपशमिकश्च दर्शनमोहनीयक्षयम-

१ 'क्षायिकौपशमिको गुणः' इति प्रेस-ख-ग-पुस्तके पाठः । स च सिद्धान्तविरुद्धो दर्शनमोहनीयक्षयमविधाय इति हेतुविरुद्धश्चातो निःसार्य 'क्षायिको गुणः' इत्येव पाठो मुद्रितः ।

तविधाय क्षपकश्रेण्यारोहणानुपपत्तेर्दर्शनमोहनीयक्षयोपशमाभ्यां विनोपशम-श्रेण्यारोहणानुपलंभाच्च । समानसमयस्थितजीवपरिणामानां निर्भेदेन वृत्ति-रथवा निवृत्तिर्व्यावृत्तिर्नविद्यते निवृत्तिर्येषां ते निवृत्तयस्तैः सह चरितो गुणो-ऽनिवृत्तिर्गुणः वादरसांपरायः सोऽपि द्विविधः उपशमकः क्षपकः काश्चित्प्र-कृतीरुपशमयति काश्चिदुपरिष्टादुपशमयिष्यतीति औपशमिकोऽयं गुणः काश्चित्प्रकृतीः क्षपयति काश्चित् क्षपयिष्यतीति क्षायिकोऽयं गुणः औप-शमिकश्च क्षायिकः क्षायोपशमिकश्च सूक्ष्मःसांपरायः कषायो येषां ते सूक्ष्म-सांपरायास्तैः सहचरितो गुणोऽपि सूक्ष्मसांपरायः स द्विविधः उपशमकः क्षपकः, सम्यक्त्वापेक्षया क्षपकः क्षपकस्य क्षायिको गुणः औपशमि-कस्य क्षायिको गुण उपशमकस्य क्षायिकौपशमिकश्च काश्चिच्च प्रकृतीः क्षपयति क्षपयिष्यति क्षपिताश्चैव क्षायिकः काश्चिदुपशमयति उपशम-यिष्यति उपशमिताश्चेति औपशमिको मोहशब्दः प्रत्येकमभिसंबध्यते उप-शांतो मोहो येषां ते उपशांतमोहास्तैः सहचरितो गुण उपशांतमोह उप-शमिताशेषकषायत्वादौपशमिकः । क्षीणो विनष्टो मोहो येषां ते क्षीणमो-हास्तैः सहचरितो गुणः क्षीणमोहः द्रव्यभावद्वैविध्यादुभयात्मकस्य निरन्वयवि-नाशात्क्षायिकगुणा एते सर्वेऽपि छद्मस्थाः । केवलं केवलज्ञानं तद्विद्यते येषां ते केवलिनः सह योगेन वर्तंत इति सयोगाः सयोगाश्च ते केवलिनश्च सयोगकेवलिजिनास्तैः सह चरितो गुणः सयोगकेवली क्षपिताशेषघाति-कर्मकत्वात् निःशक्तीकृतवेदनीयकर्मकत्वात् नष्टाष्टकर्मावयवकत्वात् क्षायि-कगुणः केवलिजिनशब्द उत्तरत्राप्यभिसंबध्यते काकाक्षितारकवत् । न वि-द्यते योगो मनवचः सह कायपरिस्पंदो द्रव्यभावरूपो येषांतेऽयोगिनस्ते च ते केवलिजिनाश्चायोगिकेवलिजिनास्तैः सहचरितो गुणोऽ योगकेवलिनः क्षी-णाशेषाघातिकर्मकत्वात् निरस्यमानघातिकर्मकत्वाच्च क्षायिको गुणः । च शब्दात्सिद्धा निष्ठिता निष्पन्ना निराकृताशेषकर्माणः वाह्यार्थ निरपेक्षा-नंतनुपमसहजाप्रतिपक्षसुखा निःशेषगुणनिधानाश्चरमदेहात् किंचिंन्न्यूनस्व-देहाः कोशविनिर्गतसायकोपमा लोकाशिखरवासिनः ॥ १५४–१५५ ॥

चतुर्दश गुणस्थानानि प्रतिपाद्य मार्गणास्थानानि निरूपयन्नाह;—

**गइ इंदिये च काये जोगे वेदे कसाय णाणे य।**
**संजम दंसण लेस्सा भविया सम्मत्त सण्णि आहारे॥१५६॥**

**गतिरिंद्रियाणि च कायो योगो वेदः कषायो ज्ञानं च।**
**संयमो दर्शनं लेश्या भव्यः सम्यक्त्वं संज्ञी आहारः॥ १५६॥**

**टीका**—गम्यत इति गतिः गतिकर्मोदयापादितचेष्टा भवाद्भवांतरसंक्रांतिर्वा गतिः सा चतुर्विधा नरकगतितिर्यग्गतिमनुष्यगतिदेवगतिभेदेन, स्वार्थनिरतानींद्रियाणि अथवा इन्द्र आत्मा तस्य लिंगमिंद्रियं इंद्रेण दृष्टमिति चेंद्रियं, तद्द्विविधं द्रव्येंद्रियं भावेन्द्रियं चेति, निर्वृत्युपकरणं द्रव्येन्द्रियं, लब्ध्युपयोगौ भावेंद्रियं, कर्मणा या निर्वर्त्यते सा निर्वृत्तिः, सापि द्विविधा वाह्याभ्यंतरभेदेन, तत्र लोकप्रमितविशुद्धात्मप्रदेशानां प्रतिनियतचक्षुरादीन्द्रियस्थानेनावस्थितानामुत्सेधांगुलस्यासंख्येयभागप्रमितानां वृत्तिरभ्यंतरा निर्वृत्तिरात्मप्रदेशेष्विन्द्रियव्यपदेशभाक्‌यः प्रतिनियतचक्षुरादिसंस्थानो नामकर्मोदयापादितावस्थाविशेषः पुद्गलप्रचयः सा वाह्या निर्वृत्तिः, उपक्रियतेऽनेनेत्युपकरणं येन निर्वृत्तेरुपकारः क्रियते तदुपकरणं, तदपि द्विविधं, वाह्याभ्यंतरभेदात्, अभ्यंतरं कृष्णशुक्लमंडलादिकं, वाह्यं आक्षिपक्ष्मपत्रद्वयादिः; इंद्रियनिर्वृत्तिहेतुः क्षयोपशमविशेषो लब्धिर्यत्सांनिधानादात्मा द्रव्येंद्रियं प्रति व्याप्रियते, तन्निमित्तं प्रतीत्योत्पद्यमान आत्मनः परिणाम उपयोगः कार्ये कारणोपचारात्; तदिंद्रियं पंचविधं स्पर्शनादिभेदेन तानि विद्यंते येषां ते एकेंद्रियादयः। आत्मवृत्त्युपचितपुद्गलपिंडः कायः पृथिवीकायादिनामकर्मजानितं परिणामो वा सः पृथिवीकायादिभेदेन षड्विधः। आत्मप्रवृत्तिसंकोचविकोचो योगः मनोवाक्कायावष्टंभवलेन जीवप्रदेशपरिस्पंदो वा योगः सः पंचदशभेदो मनवचनकायश्चतुश्चतुः सप्तभेदेन। आत्मप्रवृत्तिमैथुनसंमोहोत्पादो वेदः स्त्रीपुंनपुंसकभेदेन त्रिविधः। क्रोधादिपरिणामव-

ज्ञेन कर्षतीति कषायाः क्रोधमानमायालोभभेदेन चतुःप्रकाराः। भूतार्थ-प्रकाशकं ज्ञानं आत्मार्थोपलंभकं वा तत्पंचविधं मतिश्रुतावधिमनःपर्यय-केवलभेदेनायथार्थोपलंभकमज्ञानं तत् त्रिविधं मत्यज्ञानं श्रुताज्ञानं विभंग-ज्ञानभेदेन। व्रतसमितिकषायदंडेंद्रियाणां रक्षणपालननिग्रहत्यागजन्यः संयमः सः सप्तविधः सामायिकच्छेदोपस्थापनपरिहारशुद्धिसूक्ष्मसांपराय-यथाख्यातभेदेन असंयमासंयमासंयमश्च। प्रकाशवृत्तिर्दर्शनं तच्चक्षुरचक्षु-रवधिकेवलदर्शनभेदेन चतुर्विधं। आत्मप्रवृत्तिसंश्लेषकरी लेश्या कषाया-नुरंजिता योगप्रवृत्तिर्वा सा च षड्विधा कृष्णनीलकापोततेजःपद्मशुक्ललेश्या भेदेन। निर्वाणपुरस्कृतो भव्यः सम्यक्दर्शनादिग्रहणयोग्यस्तद्विपरीतोऽभव्यो ऽनाद्यनिधनकर्मबंधः। तत्वरुचिः सम्यक्त्वं प्रशमसंवेगानुकंपास्तिक्याभिव्यक्ति लक्षणं वा तत्क्षायिकक्षायोपशमिकौपशमिकभेदेन त्रिविधं मिथ्यात्वसासा-दनसम्यग्मिथ्यात्वभेदेन च तद्विपरीतं त्रिविधं। शिक्षाक्रियोपदेशालापग्राहि-कः संज्ञी तद्विपरीतोऽसंज्ञी। शरीरप्रायोग्यपुद्गलपिंडग्रहणमाहारः स विद्यते यस्य स आहारी तद्विपरीतोऽनाहारी। अत्र सर्वोपि विभक्तिनिर्देशः प्रथ-माविभक्त्यर्थे द्रष्टव्योऽथवा प्राकृतबलादेकारादयश्चशब्द सर्वविशेषसंग्रहार्थः समुच्चयार्थो वा ॥ १५६ ॥

एवं चतुर्दश मार्गणास्थानानि प्रतिपाद्य तत्रजीवगुणस्थानानि निरू-पयन्नाह—

**जीवाणं खलु ठाणाणि जाणि गुणसण्णिदाणि ठाणाणि।**
**एदे मग्गणठाणेसु चेव परिमग्गदव्वाणि ॥ १५७ ॥**

**जीवानां खलु स्थानानि यानि गुणसंज्ञितानि स्थानानि।**
**एते मार्गणास्थानेषु चैव परिमार्गयितव्यानि ॥ १५७ ॥**

**टीका**—जीवानां यानि स्थानानि गुणसंज्ञकानि च यानि स्थानानि तान्येतानि मार्गणास्थानेषु नान्येषु स्फुटं मार्गे कथयितव्यानि यथासंभवं द्रष्टव्यानीत्यर्थः ॥ १५७ ॥

तदेव दर्शयन्नाह;—

**तिरियगदीए चोद्दस हवंति सेसासु जाण दो दो दु।**
**मग्गणठाणस्सेदं णेयाणि समासठाणाणि ॥ १५८ ॥**

**तिर्यग्गतौ चतुर्दश भवंति शेषासु जानीहि द्वौ द्वौ तु।**
**मार्गणास्थानेषु एतानि ज्ञेयानि समासस्थानानि ॥ १५८ ॥**

**टीका**—तिरश्चां गतिस्तिर्यग्गतिस्तस्यां तिर्यग्गतौ जीवसमासस्थानानि चतुर्दशैवापि भवंति सर्वेषामेकेंद्रियवादरसूक्ष्मपर्याप्तापर्याप्तद्वीन्द्रियत्रीन्द्रियचतुरिंद्रियपर्याप्तापर्याप्तपंचेंद्रियसंज्ञ्यसंज्ञिपर्याप्तापर्याप्तानां संभवात् शेषासु पुनर्नरकमनुष्यदेवगतिषु द्वौ संज्ञिपर्याप्तापर्याप्तौ जीवसमासौ भवतः न तासु तृतीयं संभवति, एवं सर्वेषु मार्गणास्थानेषु इंद्रियादिषु एतानि जीवसमासस्थानानि परमागमानुसारेणानेतव्यान्यन्वेषितव्यानीति। तद्यथा—एकेंद्रियेषु वादरसूक्ष्मपर्याप्तापर्याप्ताश्चत्वारो जीवसमासाः, द्वीन्द्रियत्रीन्द्रियचतुरिंद्रियेषु पर्याप्तापर्याप्तौ द्वौ स्वकीयौ जीवसमासौ पंचेंद्रियेषु संज्ञ्यसंज्ञिपर्याप्तापर्याप्ताश्चत्वारो जीवसमासाः, पृथिवीकायिकाप्कायिकतेजःकायिकवायुकायिकवनस्पतिकायेषु एकैकशो वादरसूक्ष्मपर्याप्तापर्याप्ताश्चत्वारस्त्रसकायिकेषु द्वीन्द्रियत्रीन्द्रियचतुरिंद्रियसंज्ञ्यसंज्ञिनः प्रत्येकं पर्याप्तापर्याप्ता दश जीवासमासाश्चतुर्षु मनोयोगेषु सत्यमनोयोगमृषामनोयोगसत्यमृषा मनोयोगेषुः, अनुभयमनोयोगेषु संज्ञिपर्याप्तक एको जीवसमासः, त्रिषु वाग्योगेषु सत्यमृषोभयवाग्योगेषु संज्ञीपर्याप्त एक अनुभयवाग्योगे द्वीन्द्रियत्रीन्द्रियचतुरिंद्रियासंज्ञिसंज्ञिनः पर्याप्ताः पंचौदारिककाययोगे वादरसूक्ष्मविकलेंद्रियसंज्ञ्यसंज्ञिनः पर्याप्ताः सप्तौदारिकमिश्रकाययोगे त एव किंत्वपर्याप्ताः संज्ञिपर्याप्ताश्चाष्टौ वैक्रियककाययोगे संज्ञी पर्याप्तः वैक्रियकमिश्रकाययोगे निर्वृत्तपर्याप्तापेक्षया संज्ञिपर्याप्ता लब्ध्यपर्याप्तापेक्षया लब्ध्यपर्याप्त आहारामिश्रयोरेक एव संज्ञी पर्याप्तः कार्माणकाययोगे सप्तापर्याप्ताः अष्टम-

संज्ञी पर्याप्तः लोकपूरणस्थः, स्त्रीवेदे च संज्ञ्यसंज्ञ्यपर्याप्तपर्याप्ताश्चत्वारः नपुंसकवेदे च चतुर्दशापि क्रोधमानमायालोभेषु चतुर्दशापि मतिश्रुताव-धिज्ञानेषु द्वौ संज्ञिपर्याप्तापर्याप्तौ निर्वृत्यपर्याप्तापेक्षया केवलमनःपर्यय-विभंगज्ञानेषु संज्ञी पर्याप्त एकः सामायिकच्छेदोपस्थापनपरिहारशुद्धिसूक्ष्म-सांपराययथाख्यातसंयमेषु संयमासंयमे च संज्ञी पर्याप्त एक एव असंयमे च चतुर्दशापि; चक्षुर्दर्शने चतुरिंद्रियसंज्ञ्यसंज्ञिपर्याप्तापर्याप्ताः षट् अप-र्याप्तकालेऽपि चतुर्दश क्षयोपशमस्य सद्भावादुपयोगः पुनर्नास्त्येव अचक्षु-र्दर्शने चतुर्दशाप्यवधिदर्शने द्वौ संज्ञिपर्याप्तापर्याप्तौ केवलदर्शने संज्ञी पर्याप्त एक एव, कृष्णनीलकापोतलेश्यासु चतुर्दशापि तेजः पद्मशुक्लले-श्यासु द्वौ संज्ञिपर्याप्तौ, भव्यसिद्धेषु चतुर्दशापि, क्षायोपशमिकक्षायिकसा-सादनसम्यक्त्वकेषु उपशमश्रेण्यपेक्षया औपशमिकसम्येकृत्वे च द्वौ संज्ञिपर्या-प्तापर्याप्ता सम्यङ्मिथ्यात्वे प्रथमसम्यक्त्वे च पर्याप्तः संज्ञी एक एव मिथ्यात्वे चतुर्दशापि, संज्ञिषु संज्ञिपर्याप्तापर्याप्तौ द्वौ, आहारिषु चतुर्दशापि अना-हारिषु सप्तापर्याप्ताः अष्टमः संज्ञी पर्याप्तः केवली । सर्वत्र जीवसमासा इति संबंधः ॥ १५८ ॥

मार्गणास्थानेषु जीवसमासान् प्रतिपाद्य गुणस्थानानि प्रतिपादयन्नाह——

**सुरणारयेसु चत्तारि होंति तिरियेसु जाण पंचेव ।**
**मणुसगदीएवि तहा चोद्दसगुणणामधेयाणि ॥ १५९ ॥**

**सुरनारकेषु चत्वारि भवंति तिर्यक्षु जानीहि पंचैव ।**
**मनुष्यगतावपि तथा चतुर्दश गुणनामधेयानि ॥ १५९ ॥**

**टीका**—सुरेषु नारकेषु च मिथ्यादृष्ट्याद्यसंयतपर्यंतानि चत्वारि गुण-स्थानानि भवंति, तिर्यक्षु तान्येव कथितानि संयतासंयतश्च पंच भवंति, मनुष्यगतौ पुनः चतुर्दशापि मिथ्यादृष्ट्याद्ययोगपर्यंतानि गुणस्था भवंति, इत्येवं सर्वासु मार्गणासु योज्यं । तद्यथा ... एकेन्द्रि

चतुरिंद्रियासंज्ञिपंचेंद्रियेषु सर्वेषु मिथ्यादृष्टिगुणस्थानमेकमेव, संज्ञिषु चतुर्दशापि गुणस्थानानीति सर्वत्र संबंधः । पृथिवीकायाप्कयतेजःकायवायुकायवनस्पतिकायेषु मिथ्यादृष्टिसंज्ञकमेकं, द्वीन्द्रियाद्यसंज्ञिपर्यंतेष्वेकमेव मिथ्यादृष्टिगुणस्थानं संज्ञिषु त्रसेषु चतुर्दशापि, सत्यमनोयोगासत्यमृषामनोयोगसत्यवाग्योगासत्यमृषावाग्योगेषु मिथ्यादृष्ट्यादिसयोगपर्यंतानि, मृषामनोयोगसत्यमृषामनोयोगमृषावाग्योगसत्यमृषावाग्यागेषु मिथ्यादृष्ट्यादीनि क्षीणकषायांतानि, औदारिककाययोगे मिथ्यादृष्ट्यादिसयोग्यंतानि, औदारिकमिश्रकार्माणकाययोगे मिथ्यादृष्टिसासादनासंयतसम्यग्दृष्टिसयोगकेवलिसंज्ञकानि चत्वारि, वैक्रियककाययोगे मिथ्यादृष्ट्याद्यसंयतांतानि, वैक्रियिकमिश्रकाययोगे तान्येव सम्यङ्मिथ्यादृष्टिरहितानि, आहाराहारमिश्रयोगयोरेकं प्रमत्तगुणस्थानं पुंवेदाभावापेक्षया स्त्रीवेदे नपुंसकवेदे च मिथ्यादृष्ट्याद्यानिवृत्तिपर्यंतानि स्त्रीनपुंसकयोर्द्रव्यापेक्षया मिथ्यादृष्ट्यादिसंयतासंयतांतानि, पुंल्लिंगे सर्वाणि, क्रोधमानमायासु तान्येव लोभकषायेषु सूक्ष्मसांपरायाधिकानि, मत्यज्ञानश्रुताज्ञानविभंगाज्ञानेषु मिथ्यादृष्टिसासादनसंज्ञके द्वे, मतिश्रुतावधिज्ञानेषु असंयतसम्यग्दृष्ट्यादिक्षीणकषायांतानि, मनःपर्ययज्ञाने प्रमत्तादिक्षीणकषायांतानि, केवलज्ञाने सयोग्ययोगिसंज्ञके द्वे अतीतगुणस्थानं च सामायिकछेदोपस्थानसंयमयोः प्रमत्ताद्यनिवृत्त्यंतानि चत्वारि, परिहारविशुद्धिसंयमे प्रमत्ताप्रमत्तसंज्ञके द्वे सूक्ष्मसांपरायसंज्ञके संयमे सूक्ष्मसांपरायिकमेकं, यथाख्यातसंयमे उपशांताद्ययोगांतानि, संयमासंयम संयतासंयतमेकं, असंयमे मिथ्यात्वाद्यसंयतांतानि चक्षुर्दर्शनाचक्षुर्दर्शनयोर्मिथ्यादृष्ट्यादिक्षीणकषायांतानि, अवधिदर्शनेऽसंयतादिक्षीणकषायांतानि, केवलदर्शने संयोगायोगसंज्ञके द्वे अतीतगुणस्थानं च, कृष्णनीलकापोतलेश्यासु मिथ्यादृष्ट्याद्यसंयतांतानि, तेजःपद्मलेश्ययोर्मिथ्यादृष्ट्याद्यप्रमत्तांतानि शुक्लेश्यायां मिथ्यादृष्ट्यादिसंयोगांतानि, कषायन्यसहचरितयोगप्रवृत्त्युपचारेण भव्यसिद्धिषु चतुर्दशापि अभव्यासिद्धेष्वेकं

मिथ्यादृष्टिसंज्ञकं, औपशमिकसम्यक्त्वेऽसंयताद्युपशांतकषायांतानि, वेदकसम्यक्त्वे असंयताद्यप्रमत्तांतानि, क्षायिकसम्यत्क्वेऽसंयताद्ययोगांतानि, सासादनसंज्ञके ससादननामधेयमेकं, सम्यग्मिथ्यात्वे सम्यङ्मिथ्यादृष्टिसंज्ञकं, संज्ञिषु मिथ्यादृष्टयादिक्षीणकषायांतानि, असंज्ञिषु मिथ्यादृष्टिसंज्ञकमेकं, आहारेषु मिथ्यादृष्ट्यादिसंयोगांतानि, नोकर्मापेक्षयैतन्न कवलाहारापेक्षया तस्याऽभावात् नाहारिषु मिथ्यादृष्टिसासादनासंयतसम्यग्दृष्टिसयोग्ययोगिसंज्ञकानि विग्रहप्रतरलोकपूरणापेक्षयेति ॥ १५९ ॥

जीवगुणमार्गणास्थानानि[1] प्रतिपाद्य तत्सूचितं क्षेत्रप्रमाणं द्रव्यप्रमाणं च प्रतिपादयन्नाह;—

**एइंदियाय पंचेंदिया य उड्ढमहोतिरियलोएसु ।**
**सयलविगलिंदिया पुण जीवा तिरियंमि लोयंमि ॥ १६० ॥**

**एकेंद्रियाः पंचेंद्रियाश्च ऊर्ध्वमधस्तिर्यग्लोकेषु ।**
**सकलविकलेंद्रियाः पुनः जीवाः तिर्यग्लोके ॥ १६० ॥**

टीका—एकेंद्रियाः पंचेंद्रियाश्च जीवा ऊर्ध्वलोके तिर्यग्लोके च भवंति विकलेंद्रियाः पुनः सकलाः समस्ताः द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रिया असंज्ञिपंचेंद्रियाश्च तिर्यग्लोक एव नान्यत्र यतस्तेषां नरकादेव लोके सिद्धिक्षेत्रे चाभावः, यद्यपि पंचेंद्रिया ऊर्ध्वाधस्तिर्यग्लोकेषूक्ताः सामान्येन तथापि त्रयाणां लोकानामसंख्यातभागे तिष्ठंतीति कैवल्यापेक्षया पुनर्लोकस्य संख्यातभागेऽसंख्यातभागेचासंज्ञिपंचेंद्रियेष्वपि तथैवेति ॥ १६० ॥

पुनरप्येकेंद्रियाणां विशेषमाह;—

**एइंदियाय जीवा पंचविधा वादरा य सुहुमा य ।**
**देसेहिं वादरा खलु सुहुमेहिं णिरंतरो लोओ ॥ १६१ ॥**

**एकेंद्रिया जीवाः पंचविधा बादराश्च सूक्ष्माश्च ।**
**देशैः बादराः खलु सूक्ष्मैः निरंतरो लोकः ॥ १६१ ॥**

---

1 जीवगुणस्थानानीतिपाठान्तरम् ।

टीका—एकेंद्रिया जीवाः पंचप्रकाराः पृथिवीकायादिवनस्पतिपर्यंतास्ते प्रत्येकं वादरसूक्ष्मभेदेन द्विप्रकारा एकैकशो वादराः सूक्ष्माश्च, लोकस्यैकदेशे वादरा यतो वातवलये पृथिव्यष्टकं विमानपटलानि वाश्रित्य तिष्ठंतीति, सूक्ष्मैः पुनर्निरंतरो लोकः, सूक्ष्माः सर्वस्मिन् लोके तै रहितः कश्चिदपि प्रदेशो नेति ॥ १६१ ॥

यस्मात्—

**अत्थि अणंता जीवा जेहिं ण पत्तो तसाण परिणामो**
**भावकलंकसु पउरा णिगोदवासं अमुंचंता ॥ १६२ ॥**

**सन्ति अनंता जीवा यैः न प्राप्तः त्रसानां परिणामः ।**
**भावकलंकसु प्रचुरा निगोदवासं अमुंचंता ॥ १६२ ॥**

टीका—संति विद्यंतेऽनंता जीवास्ते यैः कदाचिदपि न प्राप्तस्त्रसपरिणामः द्वीन्द्रियादिस्वरूपं, भावकलंकप्रचुरा मिथ्यात्वादिकलुषिताः निगोदवासमत्यजंतः सर्वकालं । सूक्ष्मवनस्पातिस्वरूपेण व्यवस्थिता ये जीवास्ताहृग्भूता अनंताः संतीति ॥ १६२ ॥

सर्वलोके तावत्तिष्ठंति किंतु;—

**एगणिगोदसरीरे जीवा दव्वप्पमाणदो दिट्ठा ।**
**सिद्धेहिं अणंतगुणा सव्वेण वितीदकालेण ॥ १६३ ॥**

**एकनिगोदशरीरे जीवा द्रव्यप्रमाणतो दृष्टाः ।**
**सिद्धैरनंतगुणाः सर्वेणाप्यतीतकालेन ॥ १६३ ॥**

टीका—एकनिगोदशरीरे गुडूच्यादिवनस्पतिसाधारणकाये जीवा अनंतकायिका द्रव्यप्रमाणतः संख्यया दृष्टाः जिनैः प्रतिपादिताः सिद्धैरनंतगुणाः सर्वेणाप्यतीतकालेन । एकनिगोदशरीरे ये तिष्ठंति ते सिद्धैरनंतगुणा इत्यवगाह्यावगाहनमाहात्म्यादसंख्यातप्रदेशे लोके कथमनंतास्तिष्ठं-

तीति नाशंकनीयमिति, एवं सर्वासु मार्गणास्वस्तित्वपूर्वकं क्षेत्रप्रमाणं द्रष्टव्यं स्पर्शनमप्यत्रापि द्रष्टव्यं यतोऽतीतविषयं स्पर्शनं वर्तमानविषयं क्षेत्रमिति ॥ १६३ ॥

द्रव्यप्रमाणं निरूपयन्नाह;—

**एइंदिया अणंता वणप्फदीकायिगा णिगोदेसु ।**
**पुढवी आऊ तेऊ वाऊ लोया असंखिज्जा ॥ १६४ ॥**

**एकेंद्रिया अनंता वनस्पतिकायिका निगोदेषु ।**
**पृथ्वी आपः तेजः वायवः लोका असंख्याताः ॥ १६४ ॥**

**टीका**—निगोदेषु ये वनस्पतिकायिककेंद्रिया जीवास्तेऽनंतास्तथा पृथिवीकायिका अप्कायिकास्तेजस्कायिका वायुकायिकाः सर्व एते सूक्ष्माः प्रत्येकमसंख्यातलोकप्रमाणा असंख्याता लोकानां यावन्तः प्रदेशास्तावन्मात्रा वादराः पुनः प्रतरा असंख्यातभागमात्रा विशेषः परमागमतो द्रष्टव्य इति ॥ १६५ ॥

त्रसकायिकानां संख्यामाह;—

**तसकाइया असंखा सेढीओ पदरछेदणिप्पण्णा ।**
**सेसासु मग्गणासुवि णेदव्वा जीव समासेज्ज ॥ १६५ ॥**

**त्रसकायिका असंख्याताः श्रेण्यः प्रतरछेदनिष्पन्नाः ।**
**शेषासु मार्गणास्वपि नेतव्या जीवाः समाश्रित्य ॥ १६५ ॥**

**टीका**—त्रसकायिका द्वीन्द्रियत्रीन्द्रियचतुरिंद्रियपंचेंद्रियाः प्रत्येकमसंख्याताः श्रेणयः प्रतरच्छेदनिष्पन्नाः प्रतरासंख्येयभागप्रमिताः त्रसकायिकाः प्रतरासंख्येयभागमात्राः स च प्रतरासंख्यातभागः असंख्याताः श्रेणयः प्रतरांगुलस्यासंख्यातभागेन जगच्छ्रेणेः भागे हृते यल्लब्धं तावन्मात्राः श्रेणय इति एवं शेषास्वापि मार्गणासु जीवानाश्रित्य प्रमाणं नेतव्यं ज्ञातव्यमिति आगमानुसारेण । तद्यथानरकगतौ नारकाः प्रथमपृथिव्यां मिथ्यादृष्टयोऽसं-

ख्याताः श्रेणयः घनांगुलकिंचिन्न्यूनाद्वितीयवर्गमूलमात्राः , द्वितीयादिषु सप्तम्यंतासु श्रेण्यसंख्येयभागमात्राः , द्वितीयादिषु सर्वासु पुनः सासादनसम्यङ्मिथ्यादृष्ट्यसंयताः पल्योपमासंख्यातभागमात्राः, तिर्यग्गतौ मिथ्यादृष्टयोऽनंतानंता सासादनादिसंयतासयतांताः पल्योपमासंख्येयसागरप्रमिताः मनुष्यगतौ मिथ्यादृष्टयो मनुष्याः श्रेण्यसंख्येयभागप्रमिताः स चासंख्येयभागः असंख्याताः योजनकोट्यः, सासादनसम्यग्दृष्टयो द्विपंचाशत्कोटीमात्राः सम्यङ्मिथ्यादृष्टयश्चतुरुत्तरैककोटीशतमात्राः, असंयतसम्यग्दृष्टयः सप्तकोटीशतमात्राः संयतास्त्रयोदशकोटीमात्राः प्रमत्ताः पंचकोटयस्त्रिनवतिलक्षाधिका अष्टानवतिसहस्राधिकाः षडुत्तरद्विशताधिकाश्च, अप्रमत्ता द्वे कोट्यौ षण्णवतिलक्षाधिके नवनवतिसहस्राधिके शतत्र्यधिके च, चत्वार उपशमकाः प्रत्येकं प्रवेशेन एको वा द्वौ वा त्रयो वोत्कर्षेण चतुःपंचाशत्स्वकालेन समुदिता द्वे शते नवत्यधिके चत्वारः क्षपका अयोगिकेवलिनश्च प्रत्येकं एको वा द्वौ वा त्रयो वोत्कृष्टेनाष्टोत्तरशतं स्वकालेन समुदिताः पचशतान्यष्टानवत्यधिकानि सयोगिकेवलिनः अष्ट शतसहस्राणि अष्टानवतिसहस्राधिकानि द्व्यधिकपंच-शताधिकानि च अष्ट सिद्धसमया भवंति तत्रोपशमश्रेण्यां प्रवेशन जघन्येनैकेनादिं कृत्वोत्कृष्टेनैकैकसमये षोडश चतुर्विंशतिस्त्रिंशत् षट्त्रिंशद्विचत्वारिंशदष्टचत्वारिंशच्चतुःपंचाशदिति, एवं क्षपकश्रेण्यां एतदेव द्विगुणं द्वात्रिंशदष्टचत्वारिंशच्छष्टिः द्वासप्ततिश्चतुरशीतिः षण्णवतिरष्टोत्तरशतं च वेदितव्यं प्रत्येकं सिद्धसमयं प्रति । देवगतौ देवा मिथ्यादृष्टय ज्योतिष्कव्यंतरा असंख्याताः श्रेणयः प्रतरासंख्येयभागप्रमिताः श्रेणेः संख्येयप्रमितांगुलैर्भागे हृते यल्लब्धं तावन्मात्राः श्रेणयः भवनवासिन असंख्याताः श्रेणयः घनांगुलप्रथमवर्गमूलमात्राः सौधर्मो देवा मिथ्यादृष्टयोऽसंख्येयाः श्रेणयः घनांगुलतृतीयवर्गमूलमात्राः सनत्कुमारादिषु मिथ्यादृष्टयः श्रेण्याः संख्येयभागप्रमिता असंख्यातयोजनकोटीप्रदेशमात्राःसर्वेष्वेतेषु सासादनसम्यङ्मिथ्यादृष्ट्यसयंताः प्रत्येक पल्योपमासंख्येयभाग प्रमिताः शेषासु मार्गणासु नपुंसकमत्यज्ञानश्रुताज्ञानकाययोग्यचक्षुर्दर्शनकृ-

ष्णनीलकापोतलेश्यासंयमक्रोधमानमायालोभमिथ्यादृष्टिभव्याहार्यनाहारिणः प्रत्येकमनंतानंताः केवलज्ञानिकेवलदर्शनिनोनंताश्चक्षुर्दर्शनिनः स्त्रीपुंवेदिनः मनोवाग्योगिसंज्ञिविभंगज्ञानितेजोलेश्यापद्मलेश्याः प्रतरासंख्येयभागप्रमिताः शेषाः क्षायिकक्षायोपशमिकौपशमिकसम्यग्दृष्टिसासादनसम्यग्मिथ्यादृष्टिसयंतासंयतशुक्ललेश्याः पल्योपमासंख्येयभागप्रमिताः, आहाराहारामिश्रसामायिकछेदोपस्थापनपरिहारविशुद्धिसूक्ष्मसांपराययथाख्यातसंयताः संख्याता भवंतीति ॥ १६५ ॥

कुलानि प्रतिपादयन्नाह;—

**वावी सत्त तिण्णि य सत्त य कुलकोडि सदसहस्साइं ।**
**णेया पुढविदगागणिवाऊकायाण परिसंखा ॥ १६६ ॥**
**कोडिसदसहस्साइं सत्तट्ठ व णव य अट्ठवीसं च ।**
**वेइंदियतेइंदियचउरिंदियहरिदकायाणं ॥ १६७ ॥**
**अद्धत्तरेस वारस दसयं कुलकोडि सदसहस्साइं ।**
**जलचर पक्खिचउप्पउरपरिसप्पेसु णव होंति ॥१६८॥**
**छव्वीसं पणवीसं चउदस कुलकोडिसदसहस्साइं ।**
**सुरणेरइयणराणं जहाकमं होइ णायव्वं ॥ १६९**

टीका—एतानि गाथासूत्राणि पंचाचारे व्याख्यातानि अतो नेह पुनर्व्याख्यायते पुनरुक्तत्वादिति । १६६-१६७-१६८-१६९ एतेषां संस्कृतच्छाया अपि तत एव ज्ञेयाः ॥

अल्पबहुत्वं प्रतिपादयन्नाह;—

**मणुसगदीए थोवा तेहिं असंखिज्जसंगुणा णिरये ।**
**तेहिं असंखिज्जगुणा देवगदीए हवे जीवा ॥ १७० ॥**

मनुष्यगतौ स्तोकाः तेभ्यः असंख्येयसंगुणा नरके ।
तेभ्यः असंख्येयगुणा देवगतौ भवेयुः जीवाः ॥ १७० ॥

टीका—मनुष्यगतौ सर्वस्तोका मनुष्या श्रेण्यसंख्येयभागमात्राः । १ । तेभ्यो मनुष्येभ्योऽसंख्यातगुणाः श्रेणयः । २ । नारकाः तेभ्यश्च नारकेभ्यो देवगतौ देवा असंख्यातगुणाः प्रतरासंख्येयभागमात्राः । ४९ । इति ॥१७०॥

तथा;—

**तेहिंतो णंतगुणा सिद्धिगदीए भवंति भवरहिया ।**
**तेहिंतो णंतगुणा तिरयगदीए किलेसंता ॥ १७१ ॥**

**तेभ्योऽनंतगुणाः सिद्धिगतौ भवंति भवरहिताः ।**
**तेभ्योऽनंतगुणा तिर्यग्गतौ क्लिश्यंतः ॥ १७१ ॥**

टीका—तेभ्यो देवेभ्यः सकाशात्सिद्धिगतौ भवरहिताः सिद्धा अनंतगुणास्तेभ्यः सिद्धेभ्यस्तिर्यग्गतौ तिर्यञ्चः क्लिश्यंतोऽनंतगुणाः ॥ १७१ ॥

सामान्येनाल्पबहुत्वं प्रतिपाद्य विशेषेण प्रतिपादयन्नाह;—

**थोवा दु तमतमाए अणंतराणंतरे दु चरमासु ।**
**होंति असंखिज्जगुणा णारइया छासु पुढवीसु ॥ १७२॥**

**स्तोकास्तु तमस्तमायां अनंतरारंतरे तु चरमासु ।**
**भवंति असंख्येयगुणा नारका षट्सु पृथिवीषु ॥ १७२ ॥**

टीका—स्वस्थानगतमल्पबहुत्वमुच्यते—सप्तमपृथिव्यां नारकाः सर्वस्तोकाः श्रेण्यसंख्येयभागप्रमिताः श्रेणिद्वितीयवर्गमूलेन खंडिता श्रेणि $\frac{१}{२}$ । तेभ्यश्च सप्तमपृथिवीनारकेभ्य षष्ठीपृथिवीनारका असंख्यातगुणाः श्रेणितृतीयवर्गमूलेनाहतश्रेणिमात्राः $\frac{१}{३}$ । तेभ्यश्च षष्ठपृथिवीनारकेभ्यः पंचमपृथिवीनारका असंख्यातगुणाः श्रेणिषड्वर्गमूलापहतश्रेणिलब्धमात्राः $\frac{१}{६}$ । तेभ्यश्च पंचमपृथिवीनारकेभ्यश्चतुर्थपृथिवीनारका असंख्यातगुणाः श्रेण्यष्टवर्गमूलापहृतश्रेणिपारिमिताः $\frac{१}{८}$ । तेभ्यश्चतुर्थपृथिवीनारकेभ्यस्तृतीयपृथिवीनारका असंख्यातगुणाः श्रेणिदशवर्गमूलापहतश्रेणिलब्धमात्राः $\frac{१}{१०}$ । तेभ्यस्तृतीयपृथिवीनारकेभ्यो द्वितीयपृथिवीनारका असंख्येयगुणाः श्रेणिदशवर्गमूलखं-

ड्डितश्रेण्येकभागमात्राः $\frac{१}{१२}$ । तेभ्यश्च द्वितीयपृथिवीनारकेभ्यः प्रथमपृथिवी-नारका असंख्यातगुणा घनांगुलद्वितीयवर्गमूलमात्राः श्रेणयः $\frac{१}{२}$ इति ॥१७२॥

तिर्यग्गतावल्पवहुत्वमाहः—

**थोवा तिरिया पंचेंदिया दु चउरिंदिया विसेसहिया ।**
**वेइंदिया दु जीवा तत्तो अहिया विसेसेण ॥ १७३ ॥**
**तत्तो विसेसअहिया जीवा तेइंदिया दु णायव्वा ।**
**तेहिंतोणंतगुणा भवंति एइंदिया जीवा ॥ १७४ ॥**

स्तोकाः तिर्यंचः पंचेंद्रियास्तु चतुरिंद्रिया विशेषाधिकाः ।
द्वींद्रियास्तु जीवाः ततः अधिका विशेषेण ॥ १७३ ॥
ततो विशेषाधिका जीवाः त्रींद्रियास्तु ज्ञातव्याः ।
तेभ्योऽनंतगुणा भवंति एकेंद्रिया जीवाः ॥ १७४ ॥

टीका—तिर्यंचः पंचेंद्रियाः स्तोकाः प्रतरासंख्यातभागमात्राः $\frac{१}{२}$ । तेभ्यश्च पंचेंद्रियेभ्यश्चतुरिंद्रिया विशेषाधिकाः स्वराश्यसंख्यातभागमात्राः [illegible] तेभ्यश्चतुरिंद्रियेभ्यो द्वीन्द्रिया विशेषाधिकाः $\frac{४}{७}$ विशेषाः पुनः स्वराश्यसंख्यातभागमात्राः [illegible] तेभ्यश्च द्वीन्द्रियेभ्यस्त्री-न्द्रिया विशेषाधिकाः विशेषः पुनः स्वराश्यसंख्यातभागमात्रैः [illegible] तेभ्यश्च त्रीन्द्रियेभ्योऽनंतगुणाः भवंत्येकेंद्रिया जीवा ज्ञातव्याः [illegible] इति ॥ १७३-१७४ ॥

मनुष्यगतावल्पवहुत्वमाह,—

**अंतरदीवे मणुया थोवा मणुयेसु होंति णायव्वा ।**
**कुरुवेसु दससु मणुया संखेज्जगुणा तहा होंति ॥ १७५ ॥**
**तत्तो संखेज्जगुणा मणुया हरिरम्मएसु वस्सेसु ।**
**तत्तो संखिज्जगुणा हेमवदहरिण्णवस्साय ॥ १७६ ॥**
**भरहेरावदमणुया संखेज्जगुणा हवंति खलु तत्तो ।**
**तत्तो संखिज्जगुणा णियमादु विदेहगा मणुया ॥ १७७ ॥**
**सम्मुच्छिमा य मणुया होंति असंखिज्जगुणा य तत्तो दु ।**
**ते चेव अपज्जत्ता सेसा पज्जत्तया सव्वे ॥ १७८ ॥**

अंतर्द्वीपेषु मनुजाः स्तोका मनुजेषु भवंति ज्ञातव्या : ।
कुरुषु दशसु मनुजाः संख्येयगुणाः तथा भवंति ॥ १७५ ॥
ततः संख्येयगुणा मनुजा हरिरम्यकेषु वर्षेषु ।
ततः संख्येगुणा हैमवतहैरण्यवर्षयोः ॥ १७६ ॥
भरतैरावतमनुजाः संख्येयगुणा भवंति खलु ततः ।
ततः संख्येयगुणाः नियमात् विदेहका मनुजाः ॥ १७७ ॥
संमूर्छिमाश्च मनुजा भवंति असंख्येयगुणाश्च ततस्तु ।
एते एव अपर्याप्ताः शेषाः पर्याप्ताः सर्वे ॥ १७८ ॥

टीका—मनुष्यगतौ सर्वे स्तोकाः संख्याताः सर्वातर्द्वीपेषु मनुष्याः ऊ । तेभ्यश्च दशसु कुरुषूपभोगभूमिषु मनुष्याः संख्यातगुणा भवंति ज्ञातव्याः । ऊऊ । तेभ्यश्च दशसु भोगभूमिषु हरिरम्यक-वर्षेषु मनुष्याः संख्यातगुणाः । ऊऊऊ । तेभ्यश्च दशसु जघन्य भोग-भूमिषु हैमवतहैरण्यवतसंज्ञकासु मनुष्याः संख्यातगुणाः । ऊऊऊऊ । तेभ्यश्च पंचसु भरतेषु पंचस्वैरावतेषु च मनुष्याः संख्यातगुणाः । ऊऊऊऊऊ । तेभ्यश्च निश्चयेन मनुष्या विदेहेषु संख्यातगुणा भवंति । ऊ ऊ ऊ ऊ ऊ ।

ज्ञातव्याः स्फुटं, तेभ्यश्च सम्मूर्च्छनजा मनुष्या असंख्यातगुणाः श्रेण्यसंख्यातैकभागमात्राः सर्वश्रेण्यसंख्यातभागाः ऊनकोटीकोटीप्रदेशमात्राः सूच्यंगुलप्रथमवर्गमूलेन सूच्यंगुलतृतीयवर्गमूलगुणितेन श्रेणेर्भागे हते यल्लब्धं तावन्मात्रा $\frac{-}{१\,३}$ त एते अपर्याप्ता लब्ध्यपर्याप्ता एव, शेषाः पुनः संख्याता ये मनुष्यास्ते सर्वे पर्याप्ता नास्ति तेषां लब्ध्यपर्याप्तत्वं। एवं देवनारकाणामपि सर्वेषां लब्ध्यपर्याप्तत्वं नास्ति निर्वृत्यपर्याप्तत्वं पुनर्विद्यत एवेति ॥ १७५-१७६-१७७-१७८ ॥

देवगतावल्पबहुत्वमाह;—

**थोवा विमाणवासी देवा देवी य होंति सव्वेवि ।**
**तेहिं असंखेज्जगुणा भवणेसु य दसविहा देवा ॥ १७९ ॥**

**तेहिं असंखेज्जगुणा देवा खलु होंति वाणवेंतरिया ।**
**तेहिं असंखेज्जगुणा देवा सव्वेवि जोदिसिया ॥ १८० ॥**

**स्तोका विमानवासिनो देवा देव्यश्च भवंति सर्वेऽपि ।**
**तेभ्यः असंख्येयगुणा भवनेषु च दशविधा देवाः ॥ १७९ ॥**

**तेभ्यः असंख्येयगुणा देवाः खलु भवंति वानव्यंतराः ।**
**तेभ्यः असंख्येयगुणा देवाः सर्वेपि ज्योतिष्काः ॥ १८० ॥**

**टीका**—देवगतौ देवा-देव्यश्च सर्वे स्तोकाः सौधर्मादिविमानवासिनः असंख्याताः श्रेणिमात्रा घनांगुलतृतीयवर्गमूलमात्राः साधिकाः श्रेणयः $\frac{-}{३}$ । तेभ्यश्चासंख्यातगुणा भवनेषु दशविधा भवनवासिन असंख्याताः श्रेणयः घनांगुलप्रथमवर्गमूलमात्राः श्रेणयः $\frac{-}{१}$। तेभ्यश्चासंख्यातगुणाः स्फुटमष्टप्रकारा व्यंतराः प्रतरासंख्यातभागमात्राः संख्यातप्रतरांगुलैः श्रेणेर्भागे हते यल्लब्धं तावन्मात्राः श्रेणयः $\frac{-}{१}$ । तेभ्यश्च पंचप्रकारा ज्योतिष्का असंख्यातगुणाः प्रतरासंख्यातभागमात्राः पूर्वोक्तासंख्यागुणितैरसंख्येयप्रतरांगुलैः श्रेणेर्भागे

हृते यल्लब्धं तावन्मात्राः श्रेणयः $\frac{१}{४^{१}}$। अथ वा सर्वतः स्तोकाः सर्वार्थसिद्धिदेवाः संख्याताः ततो विजयवैजयन्तजयन्तापराजितनवानुत्तरस्था असंख्यातगुणाः पल्योपमासंख्यातभागप्रमितास्ततो नव ग्रैवेयका आनतप्राणतारणाच्युताश्चासंख्यातगुणाः पल्योपमासंख्यातभागप्रामिताः ९। ततः शतारसहस्रारदेवा असंख्यातगुणाः श्रेणिचतुर्थवर्गमूलखंडितश्रेण्येकभागमात्राः $\frac{१}{४}$। ततः शुक्रमहाशुक्रदेवाः असंख्यातगुणाः श्रेणिपंचमवर्गमूलखंडितश्रेण्येकभागमात्राः $\frac{१}{५}$। ततो लांतवकापिष्ठदेवाः असंख्यातगुणाः श्रेणिसप्तमवर्गमूलखंडितश्रेण्येकभागमात्राः $\frac{१}{७}$। ततो ब्रह्मब्रह्मोत्तरदेवा असंख्यातगुणाः श्रेणिनवमवर्गमूलगुणाः श्रेणिचतुर्थवर्गमूलखंडितश्रेण्येकभागमात्राः $\frac{१}{४}$। नवमवर्गमूलखंडितश्रेण्येकभागमात्राः $\frac{१}{९}$। ततः सनत्कुमारमाहेंद्रदेवा असंख्यातगुणाः श्रेण्येकादशवर्गमूलखंडितश्रेण्येकभागमात्राः $\frac{१}{११}$। ततः सौधर्मैशानदेवा असंख्यातगुणाः $\frac{१}{३}$। शेषं पूर्ववत् द्रष्टव्यमिति। अथ वा सर्वस्तोका अयोगिनश्चत्वार उपशमकाः संख्यातसंगुणाः ततः सयोगिनः संख्यातगुणास्ततोऽप्रमत्ताः संख्यातगुणास्ततः संयतासंयतारितर्यङ्मनुष्या असंख्यातगुणाः पल्योपमासंख्यातभागमात्राः ५९९ ९९। ततश्चतसृषु गतिषु सासादनसम्यग्दृष्टयोऽसंख्यातगुणाः पं०। ततश्चतसृषु गतिषु सम्यङ्मिथ्यादृष्टयः संख्यातगुणाः पल्य ९०। ततश्चतसृषु गतिषु असंयतसम्यग्दृष्टयोऽसंख्यातगुणा एतैः सिद्धा अनंतगुणास्ततः सर्वे मिथ्यादृष्टयोऽनंतानंतगुणाः स्युरिति॥ १७९–१८०॥

पुनरपि देवान् गुणेन निरूपयन्नाह;—

**अणुदिसणुत्तरदेवा सम्मादिट्ठीय होंति बोधव्वा।**
**तत्तो खलु हेट्ठिमया सम्मामिस्सा य तह सेसा॥ १८१॥**

अनुदिशानुत्तरदेवाः सम्यग्दृष्टयो भवंति बोद्धव्याः।
ततःखलु अधस्तनाः सम्यङ्मिश्राश्च तथा शेपाः॥ १८१॥

टीका—पंचानुत्तरनवानुदिशदेवाः सम्यग्दृष्टयो निश्चयेन ज्ञातव्या भवंति तेभ्यः पुनरधो मिथ्यादृष्टयः सासादनाः सम्यङ्मिथ्यादृष्टयोऽसंयत-सम्यग्दृष्टयो भवंति तथा शेषाश्च नारकतिर्यङ्मनुष्या मिश्रा भवंतीति॥ १८१ ॥

अल्पबहुत्वं प्रतिपाद्य बंधकारणं प्रतिपादयन्नाह;—

**मिच्छादंसणअविरदिकसायजोगा हवंति बंधस्स ।**
**आऊसज्झवसाणं हेदव्वो ते दु णायव्वा ॥ १८२ ॥**

**मिथ्यादर्शनाविरतिकषाययोगा भवंति बंधस्य ।**
**आयुषोऽध्यवसानं हेतवस्ते तु ज्ञातव्याः ॥ १८२ ॥**

टीका—मिथ्यात्वाविरतिकषाययोगास्त एव हेतवो बंधस्यायुषो भवंति पुनरध्यवसायः परिणामः हेतुर्भवतीति ज्ञातव्याः । पंच मिथ्यात्वानि पंचेंद्रियाणि मनः षट्कायविराधनानि त्रयोदश योगाः षोडश कषाया नव नोकषायाश्च सर्वे एते पंचपंचाशत्प्रत्ययाः कर्मबंधस्य हेतवो बोद्धव्या भवंति, अन्ये भेदा अत्रैवांतर्भवंतीति ॥ १८२ ॥

बंधस्वरूपं प्रतिपादयन्नाह;—

**जीवो कसायजुत्तो जोगादो कम्मणो दु जे जोग्गा ।**
**गेण्हइ पोग्गलदव्वे बंधो सो होदि णायव्वो ॥ १८३ ॥**

**जीवः कषाययुक्तो योगात् कर्मणस्तु यानि योग्यानि ।**
**गृह्णाति पुद्गलद्रव्याणि बंधः स भवति ज्ञातव्यः ॥ १८३ ॥**

टीका—जीवः कषाययुक्तः क्रोधादिपरिणतः योगान्मनोवाक्कायक्रियाभ्यः कर्मणो योग्यानि यानि पुद्गलद्रव्याणि गृण्हाति स बंधः कषाययुक्त इति पुनर्हेतुनिर्देशस्तीव्रमंदमध्यमकषायानुरूपस्थित्यनुभवविशेषप्रतिपत्त्यर्थमाह—स्वक आत्मा कषति कर्मादत्त इति चेत् नैष दोषो जीवत्वात् जीवो

नामप्राणधारणादायुःसंबंधात्, न पुनरायुर्विरहाज्जीवो येन आत्मना पुरतः पुद्गलानादत्ते कर्मयोग्यानिति लघुनिर्देशात्सिद्धः कर्मणो योग्यानिति पृथग्विभक्त्युच्चारणं वाक्यांतरज्ञापनार्थं, किं पुनस्तद्वाक्यांतरमत आह,— कर्मणो जीवः सकषायो भवतीत्येवं वाक्यं एतदुक्तं भवति कर्मण इति हेतुनिर्देशः, कर्मणो हेतोर्जीवः कषायपरिणतो भवति अकर्मकस्य कषायलोपोऽस्ति ततो जीवः कर्मणो योग्यानिति, तयोरनादिसंबंध इत्युक्तं भवति ततोऽमूर्त्तः जीवः मूर्त्तेन कर्मणा कथ वध्यत इति वोध्यमपाकृतं भवति, इतरथा हि वंधस्यादिमत्त्वे आत्यंतिकी शुद्धिं दधतः सिद्धस्यैव बंधाभावः प्रसज्येत इति द्वितीयवाक्यं योग्यान् पुद्गलान् गृह्णातीति । अर्थवशाद्विभक्तिपरिणाम इति पूर्वं हेतुसंबंधं त्यक्त्वा षष्ठीसंबंधमुपैति कर्मणो योग्यानिति । पुद्गलवचनं कर्मणस्तादात्म्यख्यापनार्थं तेनात्मगुणो दृष्टो निराकृतो भवति संसारहेतुर्न भवति यतो गृण्हातीति हेतुहेतुमद्भावख्यापनार्थः अतो मिथ्यादर्शनाद्यावेशादार्द्रीकृतस्यात्मनः सर्वयोगविशेषसूक्ष्मैकक्षेत्रावगाहिनामनंतप्रदेशानां पुद्गलानां कर्मभावयोग्यानामविभागेनोपश्लेषो बंध इत्याख्यायते, यथा भाजनविशेषक्षिप्तानां विविधरसपुष्पफलानां मदिराभावेन परिणामस्तथा पुद्गलानामप्यात्मनि स्थितानां योगकषायवशात्कर्मभावेन परिणामो वेदितव्यः । स वचनमन्यनिर्वृत्त्यर्थं स एष बंधो नान्योऽस्ति तेन गुणगुणिबंधो निर्वर्त्तितो भवति तुशब्दोऽवधारणार्थः । कर्मादिसाधनो बंधशब्दो व्याख्यात इति ॥ १८३ ॥

आह, किमयं बंध एकरूप एवाहोस्वित्प्रकारा अस्य, तदुच्यते;—

**पयडिट्ठिदिअणुभागप्पदेसबंधो य चदुविहो होइ ।**
**दुविहो य पयडिबंधो मूलो तह उत्तरो चेव ॥ १८४ ॥**

**प्रकृतिस्थित्यनुभागप्रदेशबंधश्च चतुर्विधो भवति ।**
**द्विविधश्च प्रकृतिबंधो मूलस्तथोत्तरश्चैव ॥ १८४ ॥**

टीका—बंधशब्दः प्रत्येकमभिसंबध्यते। प्रकृतिबंधः, स्थितिबंधः, अनुभागबंधः, प्रदेशबंधः इति चतुर्विधो बंधो भवति। प्रकृतिबंधस्तु द्विविधः मूलस्तथोत्तरो, मूलप्रकृतिबंध उत्तरप्रकृतिबंधश्चेति। प्रकृतिः स्वभावः निंबस्य का प्रकृतिस्तिक्तता गुडस्य का प्रकृतिर्मधुरता तथा ज्ञानावरणस्य का प्रकृतिरर्थानवगमः, दर्शनावरणस्यार्थानालोकनं, वेद्यस्य सदसल्लक्षणस्य सुखदुःखसंवेदनं, दर्शनमोहस्य तत्वार्थाश्रद्धानं, चारित्रमोहस्यासंयमः, आयुषो भवधारणं, नाम्नो नरकादिनामकारणं, गोत्रस्योच्चैर्नीचैः स्थानसंशब्दनं, अंतरायस्य दानादिविघ्नकरणं। तदेव लक्षणं कार्यं प्रक्रियते प्रभवत्यस्या इति प्रकृतिः। तत्स्वभावाप्रच्युतिः स्थितिः यथाऽजागोमहिष्यादिक्षीराणां माधुर्यस्वभावादप्रच्युतिः स्थितिः। तद्रसविशेषोऽनुभवः यथाऽजागोमहिष्यादिक्षीराणां तीव्रमंदादिभावेन रसविशेषस्तथा कर्मपुद्गलानां स्वगतसामर्थ्यविशेषोऽनुभवः। इयत्तावधारणं प्रदेशः कर्मभावपरिणतपुद्गलस्कंधानां परमाणुपरिच्छेदेनावधारणं प्रदेश इति। एवं चतुर्विध एव बंध इति॥ १८४॥

तत्राद्यस्य मूलप्रकृतिबंधस्य भेददर्शनार्थमाह,—

**णाणस्स दंसणस्स य आवरणं वेदणीय मोहणियं।**
**आउगणामा गोदं तहंतरायं च मूलाओ॥ १८५॥**

**ज्ञानस्य दर्शनस्य च आवरणं वेदनीयं मोहनीयं।**
**आयुर्नाम गोत्रं तथांतरायं च मूलाः॥ १८५॥**

टीका—आवृणोत्याव्रियतेनेनेति वाऽऽवरणं तत्प्रत्येकमभिसंबध्यते ज्ञानस्यावरणं दर्शनस्यावरणं। वेदयति विद्यतेऽनेनेति वा वेदनीयं। मोहयति मुह्यतेऽनेनेति वा मोहनीयं। एत्यनेन नरकादिभवमित्यायुः। नमयत्यात्मानं नम्यतेऽनेनेति वा नाम। उच्चैर्नीचैश्च गूयते शब्द्यते इति गोत्रं। दातृदेयादीनामंतरं मध्यमे यातीत्यंतरायः। तथा तेन प्रकारेण मूला उत्तरप्रकृत्त्याधारभूता अष्टौ प्रकृतयो भवंतीति। स एष मूलः प्रकृतिबंध इति॥ १८५॥

इदानीमुत्तरप्रकृतिबंधमाह,—

**पंच णव दोण्णि अट्ठावीसं चदुरो तहेव बादालं।**
**दोण्णि य पंच य भणिया पयडीओ उत्तरा चेव॥१८६॥**

**पंच नव द्वे अष्टाविंशतिः चतस्रः तथैव द्वाचत्वारिंशत्।**
**द्वे च पंच च भणिताः प्रकृतय उत्तराश्चैव॥ १८६॥**

**टीका**—ज्ञानावरणस्य पंच प्रकृतयः, दर्शनावरणस्य नव प्रकृतयः, वेदनीयस्य द्वे प्रकृती, मोहनीयस्याष्टाविंशतिः प्रकृतयः, आयुषश्चतस्रः प्रकृतयः, नाम्नो द्विचत्वारिंशत्प्रकृतयः, गोत्रस्य द्वे प्रकृती, अंतरायस्य पंच प्रकृतयः। अथवा पंचप्रकृतयो ज्ञानावरणमित्येवमादि। इत्येवं नामत्रिनवत्यपेक्षयाऽष्टचत्वारिंशच्छतमुत्तरप्रकृतयो भवंतीति वेदितव्यम् ॥ १८६॥

के ते ज्ञानावरणस्य पंच भेदा इत्याशंकायामाह;—

**आभिणिबोहियसुदओहीमणपज्जयकेवलाणं च।**
**आवरणं णाणाणं णादव्वं सव्वभेदाणं॥ १८७॥**

**आभिनिबोधिकश्रुतावधिमनःपर्ययकेवलानां च।**
**आवरणं ज्ञानानां ज्ञातव्यं सर्वभेदानां॥ १८७॥**

**टीका**—अभिमुखो नियतो बोध आभिनिबोधः स्थूलवर्तमानांतरिता अर्था अभिमुखाश्चक्षुरिंद्रिये रूपं नियमितं श्रोत्रेंद्रिये शब्दः घ्राणेंद्रिये गंधः रसनेंद्रिये रसः स्पर्शनेंद्रिये स्पर्शः नोइंद्रिये दृष्टश्रुतानुभूता नियमिताः, अभिमुखेषु नियमितेष्वर्थेषु यो बोधः स अभिनिबोध अभिनिबोध एवाभिनिबोधकं ज्ञानमत्र विशेषस्य सामान्यरूपत्वात्, आभिनिबोधिकं विशेषेणान्येभ्योऽवच्छेदकमतो न पुनरुक्तदोषः। श्रुतं मतिपूर्वमिंद्रियगृहीतार्थात्पृथग्भूतमर्थग्रहणं यथा घटशब्दात् घटार्थप्रतिपत्तिर्धूमाच्चाग्न्युपलंभ इति। अवधानादवधिः पुद्गलमर्यादावबोधः। परकीयमनोगतार्थं मन इत्युच्यत

तत्परि समंतादयत इति मनःपर्ययः । त्रिकालगोचरानंतपर्यायाणां अववोधः केवलं सर्वथा शुद्धः । ज्ञानशब्दः प्रत्येकमभिसंबध्यते । अभिनिवोधिकज्ञानं, श्रुतज्ञानं, अवधिज्ञानं, मनःपर्ययज्ञानं, केवलज्ञानं चेति । आवरणशब्दोऽपि प्रत्येकमभिसंवध्यते; आभिनिवोधिकज्ञानावरणं, श्रुतज्ञानावरणं, अवधिज्ञानावरणं, मनःपर्ययज्ञानावरणं, केवलज्ञानावरणं चेति । एतेषां सर्वभेदानामावरणं ज्ञातव्यं । अभिनिबोधिकं ज्ञानमवग्रहेहावायधारणाभेदेन चतुर्विधं, विषयविषयिसन्निपातानंतरमवग्रहणमवग्रहः, सोऽप्यर्थव्यंजनावग्रहभेदेन द्विविधः, प्राप्तार्थग्रहणमवग्रहः यथा चक्षुरिन्द्रियेण रूपग्रहणं प्राप्तार्थग्रहणं व्यंजनावग्रहो यथा स्पर्शनेंद्रियेण स्पर्शग्रहणं । गृहीतस्यार्थस्य विशेषाकांक्षणमीहा योऽवग्रहेण गृहीतोऽर्थस्तस्य विशेषाकांक्षणं भवितव्यता प्रत्ययं यथा कंचित् दृष्ट्वा किमेषो भव्य उत अभव्यः भव्येन भवितव्यमिति विशेषाकांक्षणमीहा । ईहितस्यार्थस्य भवितव्यतारूपस्य संदेहापोहनमवायः भव्य एवायं नाभव्यः भव्यत्वाविनाभाविसम्यग्दर्शनज्ञानचरणानामुपलंभात् । निर्णीतस्यार्थस्य कालांतरेष्वविस्मृतिर्धारणा यस्याज्ज्ञानात्कालांतरेऽप्यविस्मरणहेतुभूतो जीवे संस्कार उत्पद्यते तज्ज्ञानं धारणा । न चैतेषांमवग्रहादीनां चतुर्णां सर्वत्र क्रमेणैवोत्पत्तिस्तथानुपलंभात् ततः क्वचिदवग्रह एव, क्वचिदवग्रहो धारणा च, क्वचिदवग्रह ईहा च, क्वचिदवग्रहेहावायधारणा इति । तत्र बहुबहुविधक्षिप्रानिःसृतानुक्तध्रुवसेतरभेदेनैकैको द्वादशविधः । तत्र बहूनामेकवारेण ग्रहणं बह्ववग्रहः युगपत्पंचांगुलिग्रहणवत् । बहुप्रकाराणां हस्त्यश्वगोमहिष्यादीनां नानाजातीनां ग्रहणं बहुविधावग्रहः । एकजातिग्रहणमेकविधावग्रहः । आशु ग्रहणं क्षिप्रावग्रहः । चिरकालग्रहणमक्षिप्रावग्रहः । अभिमुखार्थग्रहणं निःसृतावग्रहः । अनभिमुखार्थग्रहणमानिःसृतावग्रहः । अथवोपमानोपमेयभावेन ग्रहणं निःसृतावग्रहस्तद्विपरीतोऽन्यथा, यथा कमलदलनेत्रात्तद्विपरीतो वा । नियमितगुणविशिष्टार्थग्रहणमुक्तावग्रहः यथा चक्षुरिंद्रियेण धवलग्रहणं । अनियमितगुणविशिष्टद्रव्य ग्रहणमनुक्तावग्रहः यथा

चक्षुरिंद्रियेण द्रव्यांतरस्य । निर्णयेन ग्रहणं ध्रुवावग्रहस्तद्विपरीतोऽध्रुवावग्रहः । एवमीहादीनामपि द्वादशभेदा ज्ञातव्याः । "यथा चक्षुरिंद्रियस्याष्टचत्वारिंशद्भेदास्तथा पंचानामिंद्रियाणां षष्ठस्य मनसश्चैवमष्टाशीत्युत्तरद्विशतभेदा भवंति तेषु व्यंजनावग्रहस्याष्टचत्वारिंशद्भेदानां मिश्रणे कृते सति षट्त्रिंशदुत्तरत्रिशतभेदा आभिनिवोधिकस्य ज्ञानस्य भवंति" ज्ञानभेदादावरणस्यापि भेदो द्रष्टव्य इति । श्रुतज्ञानमपि पर्यायादिभेदेन विंशतिभेदं । पर्यायः, पर्यायसमासः अक्षरं, अक्षरसमासः, पदं, पदसमासः संघातः संघातसमासः प्रतिपत्तिः, प्रतिपत्तिसमासः, अनियोगः, अनियोगसमासः, प्राभृतकः, प्राभृतकसमासः, प्राभृतकप्राभृतकः, प्राभृतकप्राभृतकसमासः, वस्तुः, वस्तुसमासः, पूर्वं, पूर्वसमासः । तत्राक्षराणां भावादक्षरं केवलज्ञानं तस्यानंतभागः पर्यायलब्ध्यक्षरसंज्ञकं केवलज्ञानमिव निरावरणं सूक्ष्मनिगोदस्य तदपि भवति तत्स्वकीयानंतभागेनाधिकं पर्यायसंज्ञकं भवति ज्ञानं तस्मादुत्पन्नं श्रुतमपि पर्यायसंज्ञकं कार्ये कारणोपचारात् । ततस्तदेवानंतभागेन स्वकीयेनाधिकं पर्यायसमासः । एवमनंतभागासंख्यातगुणानंतगुणवृद्ध्या चैकाक्षरं भवति वृद्धीरीदृशीः असंख्यातलोकमात्राः षड्वृद्धीरतिक्रम्य पर्यायाक्षरसमासस्य सर्वपाश्चिमो विकल्पो भवति तदनंतभागाधिकमक्षरं नाम श्रुतज्ञानं भवति । कथं ? द्रव्यश्रुतप्रतिबद्धैकाक्षरोत्पन्नस्योपचारेणाक्षरव्यपदेशात् । तस्योपर्येकाक्षरे वृद्धिं गतेऽक्षरसमासः अक्षरस्यानंतभागे वा वृद्धिं गतेऽक्षरसमासो भवति एवं यावत्पदं न प्राप्तं तावदक्षरसमासं । तस्योपर्येकाक्षरे वृद्धिं गते पदं षोडशशतचतुस्त्रिशत्कोटीभिस्त्र्यशीतिलक्षाधिकाभिरष्टसप्ततिशताधिकाभिरष्टाशीत्यक्षराधिकाभिश्चाक्षराणां गृहीताभिरेकं द्रव्यं श्रुतपदं तस्मादुत्पन्नज्ञानमप्युपचारेण पदसंज्ञकं श्रुतं । तस्योपर्येकाक्षरे वृद्धिं गते पदसमासः । एवमेकैकाक्षरवृद्धिक्रमेण यावत्संघातं

---

१—"अस्माच्चिह्नादारभ्य" एतच्चिह्नान्त न वर्तते उपलब्धलिखितपुस्तके पाठः परंतु विज्ञायावश्यकं लिखितो मया । निवेदकः—इंद्रलालजैनः ।

न प्राप्नोति तावत्सर्वं पदसमासः। तत एकाक्षरे वृद्धिं गते संघातः। संघातः पदैर्यावद्भिर्नरकगतिः प्ररूप्यते तावद्भिर्भवति तस्मादुत्पन्नं ज्ञानमपि संघातसंज्ञकं, एतस्योपर्येकाक्षरे वृद्धिं गते संघातसमासः। एकाक्षरे प्रविष्टे प्रतिपत्तिः स्यात् यावद्भिः पदैरेकगतींद्रियकाययोगादयः प्ररूप्यंते तावद्भिः पदैर्गृहीतैः प्रतिपत्तिश्रुतं भवति तस्योपर्येकाक्षरे वृद्धिं गते प्रतिपत्तिसमासः यावदनुयोगो न भवति। एकाक्षरे वृद्धिं गतेऽनियोगो भवति चतुर्दशमार्गणा-प्ररूपकस्तत एकाक्षरे वृद्धेऽनियोगसमासः। एकाक्षरेण प्राभृतकप्राभृतकं भवति संख्यातानियोगद्वारैस्तत एकैकाक्षरवृद्धिक्रमेण यावत्प्राभृतकं न परिपूर्णं तत्सर्वं प्राभृतकसमासस्तत एकाक्षरेण प्राभृतकप्राभृतकं भवति तत एकाक्षरेण वृद्धिर्यावद्वस्तु एकाक्षरेणोनं तत्सर्वं प्राभृतकप्राभृतकसमासः एकाक्षरेण वस्तु विंशतिप्राभृतकैस्तत एकाक्षरवृद्ध्या नेतव्यं यावत्सर्वमेकाक्षरेणोनं तत्सर्वं वस्तुसमासः। तत एकाक्षरेण पूर्वं भवति संख्यातवस्तुभिस्तत एकैकाक्षर-वृद्ध्या तावन्नेतव्यं यावल्लोकविंदुसारश्रुतं। एकाक्षरेणोनं तेनाधिकं पूर्वं पूर्वसमासः। एतस्य श्रुतस्यावरणं श्रुतावरणं श्रुतज्ञानभेदावरणस्यापि भेद इति॥ अवधिज्ञानं देशावधिपरमावधिसर्वावधिभेदेन त्रिविधमेकैकमपि जघ-न्योत्कृष्टभेदेन द्विविधं। तत्र जघन्यदेशावधिर्द्रव्यत एकजीवौदारिकशरीरस्य लोकोनभागे हत एकभागं जानाति, क्षेत्रतः घनांगुलस्यासंख्यातभागं जानाति, कालत आवल्या असंख्यातभागं जानाति, भावतो जघन्यद्रव्यपर्यायेषु आव-ल्यसंख्यातभागेषु कृतेषु तत्रैकखंडं जानाति। उत्कृष्टदेशावधिर्द्रव्यतः कार्माणवर्गणाया मनोवर्गणानंतभागेन भागे हते तत्रैकखंडं जानाति क्षेत्रतः संख्यातलोकं जानाति कालतः पल्योपमं जानाति भाव-तोऽसंख्यातलोकपर्यायान् जानाति। तत्र परमावधिर्जघन्यद्रव्यतो देशाद्यु-त्कृष्टद्रव्यस्य मनोवर्गणानंतभागस्यानंतभागेन

भागे हते तत्रैकभागं जानाति क्षेत्रतोऽसंख्यातलोकं जानाति कालत पल्योपमं जानाति भावतोऽसंख्यातलोकपर्यायान् जानाति। उत्कृष्टो द्रव्यतो

मनोवर्गणाया अनंतभागं जानाति क्षेत्रतोऽसंख्यातॉल्लोकान् जानाति कालतोऽसंख्यातलोकसमयान् भावतोऽसंख्यातलोकपर्यायान् जानाति। सर्वावधिद्रव्यत एकं परमाणुं जानाति क्षेत्रतोऽसंख्यातॉल्लोकान् जानाति कालतोऽसंख्यातलोकसमयान् जानाति भावतोऽसंख्यातलोकपर्यायान् जानाति। सर्वत्रासंख्यातगुणो गुणकारो द्रष्टव्यः पूर्वपूर्वापेक्षयाऽनुगाम्यननुगामिवर्द्धमानहीयमानावस्थितभेदात् षड्विधो वावधिः, एतस्यावधिज्ञानस्यावरणमवधिज्ञानावरणं। मनःपर्ययज्ञानमृजुविपुलमतिभेदेन द्विविधमृजुमतिमनःपर्ययज्ञानं विपुलमतिमनःपर्ययज्ञानं चेति। ऋज्वी प्रगुणा निर्वर्तिता वाक्कायमनस्कृतार्थस्य परमनोगतस्य विज्ञानं निर्वर्तिता कुटिला विपुला च मतिर्विपुलमतिर्निवार्तिता वाक्कायमनस्कृतार्थस्य परकीयमनोगतस्य विज्ञानात्, अथवा ऋज्वी मतिर्यस्य ज्ञानविशेषस्यासौ ऋजुमतिर्विपुला मतिर्यस्यासौ विपुलमतिः। ऋजुमतिर्विपुलमतिश्च मनःपर्ययः। तत्र ऋजुमतिर्द्रव्यतो जघन्येनैकसामयिकीं सौदारिकशरीरनिर्जरां जानात्युत्कृष्टत एकसामयिकीं चक्षुरिंद्रियनिर्जरां जानाति, क्षेत्रतो जघन्येन गव्यूतिपृथक्त्वं, उत्कृष्टतो योजनपृथक्त्वं जानाति, कालतो जघन्येन द्वौ वा त्रीन्वा भवान्, उत्कृष्टतः सप्ताष्टौ भवान् जानाति, भावतो जघन्येनोत्कृष्टेन चासंख्यातभावान् जानाति किं तु जघन्यादुत्कृष्टानां साधिकत्वं इति। विपुलमतिर्द्रव्यतो जघन्येनैकसमयिकीं चक्षुरिन्द्रियनिर्जरां जानाति उत्कृष्टेनैकसमयप्रबद्धकर्मद्रव्यस्य मनोवर्गणाया अनंतभागेन भागे हृते एकखंडं जानाति, क्षेत्रतो जघन्येन योजनपृथक्त्वं साधिकं जानाति उत्कृष्टतो मनुष्यक्षेत्रं जानाति, कालतो जघन्येन सप्ताष्टभवान् जानात्युत्कृष्टतोऽसंख्यातान् भवान् जानाति, भावतो जघन्येनासंख्यातपर्यायान् जानाति उत्कृष्टतस्ततोऽधिकान् पर्यायान् जानाति। एतस्य मनःपर्ययस्यावरणं मनःपर्ययावरणं। केवलज्ञानमसहायमन्यनिरपेक्षं तस्यावरणं केवलज्ञानावरणं। एवं पंचप्रकारमावरणं; ज्ञानावारकः पुद्गलस्कंधनिचयः प्रवाहस्वरूपेणानादिबन्धः ज्ञानावरणमिति॥ १८७॥

दर्शनावरणप्रकृतिभेदानाह;—

**णिद्दाणिद्दा पयलापयला तह थीणगिद्धि णिद्दा य।**
**पयला चक्खु अचक्खू ओहीणं केवलस्सेदं ॥ १८८ ॥**

**निद्रानिद्रा प्रचलाप्रचला तथा स्त्यानगृद्धिः निद्रा च।**
**प्रचला चक्षुः अचक्षुः अवधीनां केवलस्येदं ॥ १८८ ॥**

**टीका**—आवरणमित्यनुवर्तते तेन सह संबंधः। निद्रानिद्रा प्रचलाप्रचला स्त्यानगृद्धिः निद्रा प्रचला अत्र दर्शनावरणं सामानाधिकरण्येन दृश्यते निद्रानिद्रा चासौ दर्शनावरणं च एवं प्रचलाप्रचला दर्शनावरणं स्त्यानगृद्धिर्दर्शनावरणं निद्रा दर्शनावरणं प्रचला दर्शनावरणं, उत्तरत्र वैयधिकरण्येन चक्षुर्दर्शनावरणमचक्षुर्दर्शनावरणमवधिदर्शनावरणं केवलदर्शनावरणं चेति नवविधं दर्शनावरणमेतदिति। तत्र मदखेदक्लमविनोदार्थं स्वापो निद्रा तस्या उपर्युपरि वृत्तिर्निद्रानिद्रा, स्वापक्रिययात्मानं प्रचलयति सा प्रचला शोकश्रममदादिप्रभवा आसीनस्यापि नेत्रगात्रविक्रितिसूचिकासौ च पुनः पुनर्वर्तमाना प्रचलाप्रचला, स्वप्ने वीर्यविशेषाविर्भावः सा स्त्यानगृद्धिः स्त्यायतेरनेकार्थत्वात् स्वापार्थ इह गृह्यते गृधेरपि दीप्तिः स्त्याने स्वप्ने गृध्यते दृप्यते यदुदयादात्मा रौद्रं बहुकर्म करोति स्त्यानगृद्धिः। तत्र निद्रानिद्रादर्शनावरणोदयेन वृक्षाग्रे समभूमौ यत्र तत्र देशे घोरं खं घोरयन्निर्भरं स्वापिति, प्रचलाप्रचलातीव्रोदयेन आसीन उत्थितो वा गलल्लालामुखं पुनः शरीरं शिरः कंपयन् निर्भरं स्वापिति, स्त्यानगृद्धिदर्शनावरणोदयेन उत्थितोऽपि पुनः स्वपिति सुप्तोऽपि कर्म करोति दंतान् कटकटायमानः शेते इति। निद्रायास्तीव्रोदयेनाल्पकालं स्वपिति उत्थाप्यमानः सोऽपि शीघ्रमुत्तिष्ठति अल्पशब्देन चेतयते। प्रचलायास्तीव्रोदयेन वालुकाभृते इव लोचने भवतः गुरुभारावष्टब्धमिव शिरो भवति पुनः पुनर्लोचने उन्मीलयति स्वपंतमात्मानं वारयाति। चक्षुर्ज्ञानोत्पादकप्रयत्नानुविद्धगुणीभूतविशेषसामान्यालोचनं

चक्षुर्दर्शनरूपं दर्शनक्षमं तस्यावरणं चक्षुर्दर्शनावरणं । शेषेंद्रियज्ञानोत्पादकप्रयत्नानुविद्धगुणीभूताविशेषसामान्यालोचनमचक्षुर्दर्शनं तस्यावरणमचक्षुर्दर्शनावरणं । अवधिज्ञानोत्पादकप्रयत्नानुविद्धसन्निपातगुणीभूतविशेषरूपिवस्तुसामान्यालोचनमवधिदर्शनं तस्यावरणमवधिदर्शनावरणं । युगपत्सर्वद्रव्यपर्यायसामान्यविशेषप्रकाशकं केवलं केवलं जानाति भाविकेवलदर्शनं तस्यावरणं केवलदर्शनावरणं । मिथ्यात्वासंयमकषाययोगैकरूपेण परिणतो जीवसमवेतदर्शनगुणप्रतिबंधकस्तद्दर्शनावरणामिति ॥ १८८ ॥

वेदनीयमोहनीययोरुत्तरप्रकृतीः प्रतिपादयन्नाह;—

**सादमसादं दुविहं वेदणियं तहेव मोहणीयं च ।**
**दंसणचरित्तमोहं कसाय तह णोकसायं च ॥ १८९ ॥**

**सातमसातं द्विविधं वेदनीयं तथैव मोहनीयं च ।**
**दर्शनचरित्रमोहः कषायस्तथा नोकषायश्च ॥ १८९ ॥**

**टीका**—सातमसातं द्विविधं वेदनीयं, तथैव मोहनीयमपि द्विविधं दर्शनमोहनीयं चरित्रमोहनीयं च, द्विविधमुत्तरत्र भणति तेन सह संबंधः । चरित्रमोहनीयमपि द्विविधं कषायमोहनीयनोकषायमोहनीयभेदेन सातं सुखं सांसारिकं तद्भोजयति वेदयति जीवं सातवेदनीयं, असातं दुःखं तद्भोजयति वेदयति जीवमसातवेदनीयं । यदुदयाद्देवादिगतिपु शारीरिकमानसिकसुखप्राप्तिस्तत्सातवेदनीयं, यदुदयान्नरकादिगतिषु शारीरमानसदुःखानुभवनं तदसातवेदनीयं । एवं वेदनीयकर्मणो द्वे प्रकृती सुखदुःखानुभवननिबंधनः पुद्गलस्कंधचयो मिथ्यात्वादिप्रत्ययवशेन कर्मपर्यायपरिणतो जीवः समवेतो वेदनीयमिति । अप्राप्तसमयपदार्थेषु रुचिः श्रद्धा दर्शनं तन्मोहयति परतंत्रं करोति दर्शनमोहनीयं, पापक्रियानिवृत्तिश्चारित्रं तत्र घातिकर्माणि पापं तेषां क्रिया मिथ्यात्वासंयमकषायास्तेषामभावश्चारित्रं दुःखसस्यं कर्मक्षेत्रं कृषंति फलवत्कुर्वंतीति कषायाः, ईषत्कषाया नोक-

षायाः, स्थित्यनुभागोदये कषायेम्य एतेषां स्तोकत्वं यत ईषत्कषायत्वं युक्तमिति ॥ १८९ ॥

दर्शनमोहनीयस्य कषायनोकषायाणां च भेदानाह;—

**तिण्णिय दुवेय सोलस णवभेदा जहाकमेण णायव्वा ।**
**मिच्छत्तं सम्मत्तं सम्मामिच्छत्तमिदि तिण्णि ॥ १९० ॥**

**त्रयो द्वौ षोडश नव भेदा यथाक्रमेण ज्ञातव्याः ।**
**मिथ्यात्वं सम्यक्त्वं सम्यङ्मिथ्यात्वमिति त्रयः ॥ १९० ॥**

टीका—त्रयो, द्वौ–षोडश नव भेदा यथाक्रमेण ज्ञातव्याः । दर्शनमोहनीयस्य त्रयो भेदाः । चारित्रमोहनीयस्य द्वौ भेदौ, चारित्रकषायमोहनीयस्य षोडश भेदाः चारित्रनोकषायमोहनीयस्य नव भेदाः । अथ दर्शनमोहनीयस्य के ते त्रयो भेदा इत्याशंकायामाह;—मिथ्यात्वं सम्यक्त्वं सम्यङ्मिथ्यात्वमिति त्रयो भेदाः दर्शनमोहनीयस्य, यस्योदयेनाप्तागमपदार्थेषु श्रद्धा न भवति तन्मिथ्यात्वं कोद्रवतुषरूपं, यस्योदयेनाप्तागमपदार्थेषु श्रद्धायाः शैथिल्यं तत्सम्यक्त्वं कोद्रवतंदुलसदृशं, यस्योदयेनाप्तानाप्तागमपदार्थेषु अक्रमेण श्रद्धे उत्पद्येते तत्सम्यङ्मिथ्यात्वं, दर्शनमोहनीयस्य पूर्वादिकरणैर्दलितस्य कोद्रवस्येव त्रिधा गतिर्भवति । तच्च बंधं प्रत्येकं सत्ताकर्म प्रति त्रिविधं तत्सम्यङ्मिथ्यात्वस्यैककारणत्वादिति ॥ १९० ॥

षोडशकषायभेदं प्रतिपादयन्नाह;—

**कोहो माणो माया लोहोणंताणुबंधिसण्णा य ।**
**अप्पच्चक्खाण तहा पच्चक्खाणो य संजलणो ॥ १९१ ॥**

**क्रोधो मानो माया लोभोऽनंतानुबंधिसंज्ञा च ।**
**अप्रत्याख्यानं तथा प्रत्याख्यानं च संज्वलनः ॥ १९१ ॥**

टीका—क्रोधो रोषसंरंभः मानो गर्वः स्तब्धत्वं माया निकृतिर्वंचना अनृ-

जुत्वं लोभो गृहमूर्च्छा अनंतानुभवान्मिथ्यात्वासंयमादौ अनुबंधः शीलं येषां तेऽनंतानुबंधिनस्ते च ते क्रोधमानमायालोभा अनंतानुवंधिक्रोधमानमाया-लोभाः, अथ वाऽनंतेषु भवेष्वनुवंधो विद्यते येषां तेऽनंतानुबंधिनः संसारापेक्ष-यानंतकालत्वं एते सम्यक्त्वचारित्रविरोधिनः शक्तिद्वयापनोदायेति, अथ वाऽनंतानुवंधिन इति संज्ञा भवंति एत इति । प्रत्याख्यानं संयम ईषत्प्रत्या-ख्यानं संयमासंयम इत्यर्थः, अत्रावरणशब्दो द्रष्टव्यः, अप्रत्याख्यानमावृ-ण्वंतीत्यप्रत्याख्यानावरणाः । प्रत्याख्यानं संयममावृण्वंतीति प्रत्याख्याना-वरणाः । अथवा येषु सत्सु प्रत्याख्यानसंयमादिरहितं सम्यक्त्व भवतीति अप्रत्याख्यानसंज्ञाः क्रोधमानमायालोभास्तादर्थ्यात्ताच्छब्द्यमिति । तथा येषु सत्सु प्रत्याख्यानं सम्यक्त्वसहितः संयमासंयमो भवति क्रोधमानमायालोभाः प्रत्याख्यानसंज्ञा भवंत्यत्रापि तादर्थ्यात्ताच्छब्द्यमिति । तथा संयमेन सहैकी-भूय संज्वलंति संयमो वा ज्वलत्येषु सत्स्विति वा संज्वलनाः क्रोधमानमाया-लोभा इति । आद्याः सम्यत्क्वसंयमघातिनः, द्वितीया देशसंयमघातिनः, तृतीयाः संयमघातिनः, चतुर्थाः, यथाख्यातसंयमघातिन इति ॥ १९१ ॥

नोकषायभेदान्प्रतिपादयन्नाह;—

**इत्थीपुरिसणउंसयवेदा हास रदि अरदि सोगो य ।**
**भयमेतोय दुगंछा णवविह तह णोकसायभेयं तु ॥१९२॥**

**स्त्रीपुरुषनपुंसकवेदाः हासो रतिः अरतिः शोकश्च ।**
**भयमेतस्मात् जुगुप्सा नवविधस्तथा नोकषायभेदस्तु ॥१९२॥**

**टीका**—स्तृणाति छादयति दोषैरात्मानं परं च स्त्री । पुरौप्रकृष्टे कर्मणि ांते प्रमादयति तानि करोतीति वा पुरुषः । न पुमान् न स्त्री नपुंसकं । येषां ुद्गलस्कंधानामुदयेन पुरुष आकांक्षोत्पद्यते तेषां स्त्रीवेद इति संज्ञा । येषामुद-ोन पुद्गलस्कंधानां वनितायामाकांक्षा जायते तेषां पुंवेद इति संज्ञा । येषां च द्गलस्कंधानामुदयेनेष्टकाग्निसदृशेन द्वयोराकांक्षा जायते तेषां नपुंसकवेद

इति संज्ञा। हसनं हासो यस्य कर्मस्कंधस्योदयेन हास्यनिमित्तो जीवस्य राग उत्पद्यते तस्य हास इति संज्ञा कारणे कार्योपचारात्। रम्यतेऽनयेति रमणं वा रतिः कुत्सिते रमते येषां कर्मस्कंधानामुदयेन द्रव्यक्षेत्रकालभावेषु रतिरुत्पद्यते तेषां रतिरिति संज्ञा। न रमते न रम्यते वा यया साऽरतिर्यस्य पुद्गलस्कंधस्योदयेन द्रव्यादिष्वरतिर्जायते तस्यारातिरितिसंज्ञा। शोचनं शोचयतीति वा शोकः यस्य कर्मस्कंधस्योदयेन शोकः समुत्पद्यते जीवस्य तस्य शोक इति संज्ञा। भीतिर्यस्माद्बिभेति वा भयं यैः कर्मस्कंधैरुदयमागतैर्जीवस्य भयमुत्पद्यते तेषां भयमिति संज्ञा। जुगुप्सनं जुगुप्सा येषां कर्मस्कंधानामुदयेन द्रव्यादिषु जुगुप्सा उत्पद्यते तेषां जुगुप्सेति संज्ञा। एवं नवविधमेव नोकषायवेदनीयं ज्ञातव्यमिति। कषायवेदनीयाख्यभेदास्तूर्द्ध्वमेतस्माच्चागमाज्ज्ञातव्या इति॥ १९२॥

आयुषो नाम्नश्च प्रकृतेर्भेदान् प्रतिपादयन्नाह:—

**णिरियाऊ तिरियाऊ माणुसदेवाण होंति आऊणी।**
**गदिजादिसरीराणि य बंधणसंघादसंठाणा॥ १९३॥**

**नारकायुः तैरश्चायुः मानुषदेवानां भवंति आयूंषि।**
**गतिजातिशरीराणि च बंधनसंघातसंस्थानानि॥ १९३॥**

**टीका**—नारकादिषु संबंधत्वेनायुषो भेदव्यपदेशः क्रियते नारकेषु भवं नारकायुः, तिर्यक्षु भवं तैरश्चायुः, मनुष्येषु भवं मानुष्यायुः, देवेषु भवं दैवायुः, एवमायूंषि चत्वारि। येषां कर्मस्कंधानामुदयेन जीवस्याधोगतिस्वभावेषु नरकेषु तीव्रशीतोष्णवेदनेषु दीर्घजीवनेनाधः स्थानं भवति तेषां नारकायुरिति संज्ञा, येषां पुद्गलस्कंधानामुदयेन तिर्यङ्मनुष्यदेवभवानामेव स्थानं भवति तेषां तैरश्चमानुषदैवायूंषि इति संज्ञेति। गतिर्भवः संसारः यदुदयादात्मा भवांतरं गच्छति सा गतिर्यदि गतिनाम कर्म न स्यात्तदाऽगतिर्जीवः स्यात्। यस्मिन् जीवभावे सत्यायुःकर्मणो यथावस्थानं शरीरादीनि कर्माणि

उदयं गच्छंति स भावो यस्य पुद्गलस्कंधस्य मिथ्यात्वादिकारणैः प्राप्त-कर्मण उदयाद्भवति तस्या गतिरिति संज्ञा। सा चतुर्विधा–नरकगतिः, तिर्यग्गतिः, मनुष्यगतिः, देवगतिश्चेति। येषां कर्मस्कंधानामुदयादात्मनां नारकादिभवस्तेषां नरकगत्यादयः संज्ञाश्चतस्रो भवंति नरकादिगतिषु। तदव्यभिचारिणा सादृश्येनैकीकृतात्मा जातिर्जीवानां सदृशःपरिणामः यदि जातिनामकर्म न स्यात्तदा मत्कुणा मत्कुणैर्वृश्चिका वृश्चिकैर्व्रीहयो व्रीहिभिः समाना न जायेरन्, दृश्यते च सादृश्यं तस्माद्यतः कर्मस्कंधाच्च याति सादृश्यं तस्य जातिरिति संज्ञा। सा च पंचविधा, एकेंद्रियद्वीन्द्रिय-त्रीन्द्रियचतुरिंद्रियपंचेंद्रियजातिभेदेन। यदुदयादात्मा एकेंद्रियः स्यात्तदेकें-द्रियजातिनामकर्म एवं शेषेष्वपि योज्यं। यदुदयादात्मनः शरीरनिर्वृतिस्त-च्छरीरनाम, यस्य कर्मस्कंधस्योदयेनाहारतेजःकार्माणवर्गणापुद्गलस्कंधाः शरीरयोग्यपरिणामैः परिणता जीवेन संबध्यंते तस्य शरीरमिति संज्ञा। यदि शरीरनामकर्म न स्यादात्मा विमुक्तः स्यात्। तच्छरीरं पंचविधं, औदारिकवैक्रियिकाहारकतैजसकार्माणशरीरभेदेन। यदुदयादाहारवर्गत णागतपुद्गलस्कंधा जीवगृहीता रसरुधिरमांसास्थिमज्जाशुक्रस्वभावौदारिक-शरीरं भवंति तदौदारिकशरीरनाम, एवं सर्वत्र यदुदयादाहारवर्गणापुद्गल-स्कधाः सर्वशुभावयवाहारशरीरस्वरूपेण परिणमंति तदाहारकशरीरं नाम-कर्म, तथा यदुदयात्तैजसवर्गणापुद्गलस्कंधा निःसरणानिःसरणप्रकामप्राप्त-समस्तप्रत्येकस्वरूपेण भवंति तत्तैजसशरीरं नाम, तथा यदुदयादाहारवर्ग-णागतपुद्गलस्कंधा अणिमादिगुणोपलक्षितास्तद्वैक्रियकं शरीरं, यदुदयात्कू-ष्मांडफलवृंताकफलवृंतवत्सर्वकर्माश्रयभूतं तत्कार्माणशरीरं। शरीरार्थागत-पुद्गलस्कंधानां जीवसंबंधानां यैः पुद्गलस्कंधैः प्राप्तोदयैरन्योन्यसंश्लेषणसं-बंधो भवति तच्छरीरबंधनं नामकर्म। यदि शरीरबंधननामकर्म न स्याद्वा-लुकाकृतपुरुषशरीरमिव शरीरं स्यात् तदौदारिकशरीरबंधनादिभेदेन पंचविधं। यदुदयादौदारिकशरीराणां विवरविरहितान्योन्यप्रवेशानुप्रवेशेन-

कृत्वापादनं भवति तत्संघातनाम । यदि संघातनामकर्म न स्यात्तिलमोदक इव जीवशरीरं स्यात् । तच्चौदारिकशरीरसंघातादिभेदेन पंचविधं । यदुदयादौदारिकादिशरीराकृतेनिर्वृतिर्भवतितत्संस्थाननाम, येषां कर्मस्कंधानामुदयेन जातिकर्मोदयपरतंत्रेण शरीरस्य संस्थानं क्रियते तच्छरीरसंस्थानं । यदि तन्न स्याज्जीवशरीरमसंस्थानं स्यात् । तच्च षोढा विभज्यते—समचतुरस्रसंस्थाननाम, न्यग्रोधपरिमंडलसंस्थाननाम, सातिशरीरसंस्थाननाम, वामनसंस्थाननाम, कुब्जसंस्थाननाम, हुंडकसंस्थाननाम । समचतुरस्रं समचतुरस्रमिव विभक्तमित्यर्थः । न्यग्रोधो वृक्षस्तस्य परिमंडलमिव परिमंडलं यस्य तन्न्योग्रोधपरिमडलं नाभेरूर्ध्वं सर्वावयवपरमाणुबहुत्वं न्यग्रोधपरिमंडलमिव न्यग्रोधपरिमंडलशरीरसंस्थानमायतवृत्तमित्यर्थः । साति वाल्मीकं शाल्मलिर्वा तस्य संस्थानमिव संस्थानं यस्य तत्सातिशरीरसंस्थानं नाभेरधोवयवानां विशालत्वमूर्ध्वे सौक्ष्म्यं । कुब्जस्य शरीरं कुब्जशरीरं तस्य संस्थानमिव संस्थानं यस्य तत्कुब्जशरीरसंस्थानं यस्योदयेन शाखानां दीर्घत्वं भवति तत्कुब्जशरीरसंस्थाननाम । वामनस्य शरीरं वामनशरीरं तस्य संस्थानं वामनशरीरसंस्थान नाम यस्योदयात् शाखानां ह्रस्वत्वं कायस्य च दीर्घत्वं भवति । विषमपाषाणभृताद्रिरिव विषमं हुंडं यस्य शरीरं तस्य संस्थानमिव संस्थानं यस्य तद्धुंडकशरीरसंस्थानं यस्योदयेन पूर्वोक्तपंचसंस्थानेभ्योऽन्यद्वीभत्सं संस्थानं भवति । अथ बंधनसंघातसंस्थानेषु को भेद इति चेन्नैष दोषो यस्य कर्मण उदयेनौदारिकशरीरपरमाणवोऽन्योन्यं बंधमागच्छंति तदौदारिकशरीरबंधनं नाम । यस्य कर्मण उदयेनौदारिकशरीरस्कंधानां शरीरभावमुपगतानां बंधननामकर्मोदयेनैकबंधनबद्धानामौदर्यं भवति तदौदारिकशरीरसंघात नाम । यस्य च कर्मण उदयेन शरीरस्कंधानामाकृतिर्भवति तत्संस्थानमिति महान्भेदो यत । एवं सर्वत्र द्रष्टव्यमिति ॥ १९३ ॥

तथा;—

**संघडणंगोवंगं वण्णरसगंधफासमणुपुव्वी।**
**अगुरुलहुगुवघादं परघादमुस्सास णामं च ॥ १९४॥**

**संहननमंगोपांगं वर्णरसगंधस्पर्शा आनुपूर्वी।**
**अगुरुलघूपघाताः परघात उच्छ्वास नाम च ॥ १९४॥**

**टीका**—यस्योदयादस्थिसंधिवंधविशेषो भवति तत्संहननं नाम, एतस्याभावे शरीरसंहननं न भवेत्। तत् षड्विधं; वज्रर्षभनाराचसंहननं, वज्रनाराचसंहननं, नाराचसंहननं, अर्द्धनाराचसंहननं, कीलकसंहननं, असंप्राप्तासृपाटिकासंहननं चेति। अस्थिसंचयं ऋषभवेष्टनं वज्रवदभेद्यत्वाद्दृषभः वज्रश्च नाराचश्च वज्रनाराचौ तौ द्वावपि यस्य शरीरसंहननं तद्वज्रर्षभनाराचसंहननं यस्य कर्मण उदयेन वज्रास्थीनि वज्रवेष्टनेन वेष्टितानि वज्रनाराचेन च कीलितानि भवंति। एष एवास्थिवंधो ऋषभरहितो यस्योदयेन भवति तत् द्वितीयं। यस्य कर्मण उदयेन वज्रविशेषणरहितोऽस्थिवंधो नाराचकीलितो भवति तत्तृतीयं। यस्य कर्मण उदयेनास्थिसंचयो नाराचेनार्द्धकीलितो तच्चतुर्थं। यस्य कर्मण उदयेन वज्रास्थीनि वज्रवेष्टनेन वेष्टितानि वज्रनाराचेनैव कीलितानि न भवंति तत्पंचमं। यस्य कर्मण उदयेनान्योन्यसंप्राप्तानि असृपाटिका णिरावद्धानि भवंति तत् षष्ठमिति॥ यदुदयादंगोपांगविवेकनिष्पत्तिः तदांगोपांग नाम यस्य कर्मण उदयेनानलकवाहूरूदरनितंवोरःपृष्ठशिरांस्यष्टावंगानि उपांगानि च मूर्द्धकरोटिमस्तकललाटसंधिभुजकर्णनासिकानयनाक्षिकूपहनुकपोलाधरौष्ठसृक्तालुजिह्वाग्रीवास्तनचुच्चुकांगुल्यादीनि भवंति। तदंगोपांगं त्रिविधमौदारिकशरीरांगोपांगं, वैक्रियकशरीरांगोपांगं, आहारकशरीरांगोपांगं चेति। यस्य कर्मण उदयेनौदारिकांगोपांगानि भवंति तदौदारिकांगोपांगं नामैवमन्यत्रापि योज्यम्॥ यदुदयाच्छरीरे वर्णनिष्पत्तिस्तद्वर्णनाम स्यात्तदभावे शरी-

मवर्णं स्यात् तत्पंचविधः; कृष्णवर्णनाम, नीलवर्णनाम, रक्तवर्णनाम, हरितवर्णनाम, शुक्लवर्णनाम चेति । यस्य कर्मण उदयेन शरीरपुद्गलानां कृष्णवर्णता भवति तत्कृष्णवर्णनामैवं शेषाणामपि द्रष्टव्यं ॥ यस्य कर्मस्कंधस्योदयाज्जीवशरीरे जातिप्रतिनियततिक्तादिरसो भवति तद्रस इति संज्ञा, एतस्य कर्मणोऽभावे जातिप्रतिनियतरसो न भवेत् निंबादीनां प्रतिनियतरसोपलंभात्। तत्पंचविधं; तिक्तनाम कटुकनाम, कषायनाम, आम्लनाम, मधुरनाम चेति । यस्य कर्मण उदयेन शरीरपुद्गलास्तिक्तरसस्वरूपेण परिणमंति तत्तिक्तनामैवं शेषाणामप्यर्थो वाच्य इति ॥ यस्य कर्मस्कंधस्योदयेन जीवशरीरे जातिप्रतिनियतोगंध उत्पद्यते तस्य गंध इति संज्ञा, न च तस्याभावो हस्त्यजादिषु प्रतिनियतगंधोपलंभात् । तत् द्विविधं सुरभिगंधनामासुरभिगंधनाम चेति । यस्य कर्मस्कंधस्योदयेन शरीरपुद्गलाः सुरभिगंधयुक्ता भवंति तत्सुरभिगंधनाम, यस्य कर्मस्कंधस्योदयेन शरीरपुद्गला दुर्गंधा भवति तद्दुर्गंधनामेति ॥ यस्य कर्मस्कंधस्योदयेन जीवशरीरे जातिप्रतिनियतः स्पर्शं उत्पद्यते तत्स्पर्शनाम न चैतस्याभावः सर्वोत्पलकमलादिषु प्रतिनियतस्पर्शदर्शनात्तदष्टविधं; कर्कशनाम, मृदुनाम, गुरुनाम, लघुनाम, स्निग्धनाम, रूक्षनाम, शीतनाम, उष्णनाम चेति । यस्य कर्मस्कंधस्योदयेन शरीरपुद्गलानां कर्कशभावो भवति तत्कर्कशनामैवं शेषस्पर्शनामप्यर्थो वाच्यः ॥ आनुपूर्व्यं; पूर्वोत्तरशरीरयोरंतराले एकद्वित्रिसमयेषु वर्तमानस्य यस्य कर्मस्कंधस्योदयेन जीवप्रदेशानां विशिष्टः संस्थानविशेषो भवति तदानुपूर्व्यं नाम, न च तस्याभावो विग्रहगतौ जातिप्रतिनियतसंस्थानोपलंभात् उत्तरशरीरग्रहणं प्रति गमनोपलंभात् । तच्चतुर्विधं; नरकगतिप्रायोग्यानुपूर्व्यं, तिर्यग्गतिप्रायोग्यानुपूर्व्यं, मनुष्यगतिप्रायोग्यानुपूर्व्यं, देवगतिप्रायोग्यानुपूर्व्यं चेति । यस्य कर्मस्कंधस्योदयेन नरकगतिं गतस्य जीवस्य विग्रहगतौ वर्तमानस्य नरकगतिप्रायोग्यसंस्थानं भवति तन्नरकगतिप्रायोग्यानुपूर्व्यं नामैवं शेषाणामप्यर्थो वाच्य इति ॥ यस्य कर्मस्कंधस्योदयाज्जीवोऽनंतानंतपुद्गलपूर्णोऽयःपिंडवद्गुरुत्वान्नाधः पतति न

चार्कतूलवल्लघुत्वादूर्ध्वं गच्छति तदगुरुलघुनाम ॥ उपेत्य घात उपघातः यस्योदयात् स्वयंकृतोद्बंधनमरुत्पतनादिनिमित्त उपघातो भवति तदुपघातनाम, अथ वा यत्कर्म जीवस्य स्वपीडाहेतूनवयवान्महाशृंगलाध्वस्तानुदरादीन् करोति तदुपघातं ॥ परेषां घातः परघातः यस्य कर्मण उदयात्परघातहेतवः शरीरपुद्गलाः सर्पदंष्ट्रावृश्चिकपुच्छादिभवाः परशस्त्राद्याघाता वा भवंति तत्परघातनाम ॥ उच्छ्वसनमुच्छ्वासः यस्य कर्मण उदयेन जीव उच्छ्वासनिःश्वासकार्योत्पादनसमर्थः स्यात्तदुच्छ्वासनिःश्वासनाम ॥ अयं नामशब्दः सर्वत्राभिसंबध्यत इति ॥ १९४ ॥

तथा;—

**आदावुज्जोदविहायगइजुयलतस सुहुमणामं च ।**
**पज्जतसाहारणजुग थिरसुह सुहगं च आदेज्जं ॥ १९५ ॥**

**अथिरअसुहदुब्भगयाणादेज्जं दुस्सरं अजसकित्ती ।**
**सुस्सरजसकित्ती विय णिमिणं[1] तित्थयर णामबादालं १९६**

**आतपोद्योतविहायोगतियुगलत्रसाः सूक्ष्मनाम च ।**
**पर्याप्तसाधारणयुगं स्थिरंशुभं सुभगं च आदेयं ॥ १९५ ॥**

**अस्थिराशुभदुर्भगा अनादेयं दुःस्वरमयशस्कीर्तिः ।**
**सुस्वरयशःकीर्तिरपि च निर्माणं तीर्थकृत्वं नाम द्वाचत्वारिंशत् ॥ १९६ ॥**

**टीका**—आतपनमातपः यस्य कर्मस्कंधस्योदयेन जीवशरीर आतपो भवति तदातापननाम, न च तस्याभावः सूर्यमंडलादिषु पृथिवीकायिकतापोपलंभात् ॥ उद्योतनमुद्योतः यस्य कर्मस्कंधस्योदयाज्जीवशरीर उद्योत

---

१ संस्कृतटीकायां लिखितपुस्तके " णिमिण " इत्यस्य छाया " निमान"मिति कृता । निर्माणकर्मणो विख्यातत्वात् "निर्माण"मिति छाया कृतास्ति । द्वयमपि शुद्धम्।

उत्पद्यते तदुद्योतनाम, न चास्याभावः चन्द्रनक्षत्रादिमंडलेषु खद्योतादिषु च पृथिवीकायिकशरीराणामुद्योतदर्शनात् ॥ विहाय आकाशं विहायसि गतिर्विहायोगतिर्येषां कर्मस्कंधानामुदयेन जीवस्याकाशे गमनं तद्विहायोगतिनाम, न चास्याभावो वितस्तिमात्रपादजीवप्रदेशैर्भूमिमवगाह्यसकलजीवप्रदेशानामाकाशे गमनोपलंभात्, तत् द्विविधं प्रशस्तविहायोगतिनामाप्रशस्तविहायोगतिभेदेन; यस्य कर्मण उदयेन सिंहकुंजरहंसवृषभादीनामिव प्रशस्ता गतिर्भवति तत्प्रशस्तविहायोगतिनाम ॥ यस्य कर्मण उदयेनोष्ट्रशृगालश्वादीनामिवाप्रशस्ता गतिर्भवति तदप्रशस्तविहायोगतिनाम ॥ यस्य कर्मण उदयेन जीवः स्थावरेषूत्पद्यते तत्स्थावरनामान्यथा स्थावराणामभावः स्यात् । यस्य कर्मण उदयादन्यबाधाकरशरीरेषूत्पद्यते जीवस्तद्बादरनामान्यथाऽप्रतिहतशरीरा जीवाः स्युः ॥ यस्य कर्मण उदयेन सूक्ष्मेषूत्पद्यते जीवस्तत् सूक्ष्मशरीरानिवर्तकं ॥ यदुदयादाहारादि षट्पर्याप्तिनिर्वृत्तिस्त त्पर्याप्तिनाम । तत् षड्विधं तद्यथा;—शरीरनामकर्मोदयात्पुद्गलविपाकिन आहारवर्गणागतपुद्गलस्कंधाः समवेतानंतपरमाणुनिष्पादिता आत्मावष्टब्धक्षेत्रस्थाः कर्मस्कंधसंबंधतो मूर्तीभूतमात्मानं समवेतत्वेन समाश्रयंति तेषामागतानां पुद्गलस्कंधानां खलरसपर्यायैः परिणमनशक्तिराहारपर्याप्तिः । सा च नांतमुर्हूर्त्तमंतरेण समयेनैकेन जायते शरीरोपादानात्प्रथमसमयादारभ्यांतर्मुहूर्त्तेनाहारपर्याप्तिर्निष्पाद्यते खलभागं तिलखलोपमास्थ्यादिस्थिरावयवैस्तिलतैलसमानं रसभागं रसरुधिरवसाशुक्रादिद्रव्यं तदवयवपरिणमनशक्तिनिष्पत्तिः शरीरपर्याप्तिः साहारपर्याप्तेः पश्चादंतर्मुहूर्त्तेन निष्पद्यते । योग्यदेशस्थितरूपादिविशिष्टार्थग्रहणशक्तेर्निष्पत्तिरिन्द्रियपर्याप्तिः सापि ततः पश्चादंतर्मुहूर्त्तादुपजायते न चेंद्रियनिष्पत्तौ सत्यामपि तस्मिन् क्षणे बाह्यार्थज्ञानमुत्पद्यते तदा तदुपकरणाभावात् । उच्छ्वासनिःसरणशक्तेर्निष्पत्तिरानपानपर्याप्तिरेषापि तदंतर्मुहूर्त्तकाले समतीते भवति । भाषावर्गणायाश्चतुर्विधभाषाकारपरिणमनशक्तेः परिसमाप्तिर्भाषापर्याप्तिरेषापि पश्चादंत-

र्मुहूर्त्तादुपजायते । मनोवर्गणाभिर्निष्पन्नद्रव्यमनोवष्टंभभेदानुभूतार्थस्मरण-शक्तेरुत्पत्तिर्मनःपर्याप्तिः । प्रारंभोऽक्रमेण जन्मसमयादारभ्य तासां सत्वा-भ्युपगमान्निष्पत्तिस्तु पुनः क्रमणैतासामनिष्पत्तिरपर्याप्तिः । न च पर्याप्ति-प्राणयोरभेदो यत आहारादिशक्तीनां निष्पत्तिः पर्याप्तिः प्राणत्येभिरात्मेति प्राणः । षड्विधपर्याप्तिहेतुर्यत्कर्मतत्पर्याप्तिनाम ॥ शरीरनामकर्मोदयान्निर्वर्त्त्य-मानं शरीरमेकात्मोपभोगकारणं यतो भवति तत्प्रत्येकशरीरनाम । बहूनामा-त्मनामुपभोगहेतुत्वेन साधारणशरीरं यतो भवति तत्साधारणशरीरनाम ।यस्य कर्मण उदयात् रसरुधिरमेदमज्जास्थिमांसशुक्राणां सप्तधातूनां स्थिरत्वं भवति तत्स्थिरनाम । यदुदयादेतेषामस्थिरत्वमुत्तरोत्तरपरिणामो भवति तदास्थिर-नाम । यदुदयादंगोपांगनामकर्मजनितानामंगानामुपांगानां च रमणीयत्वं तच्छुभनाम, तद्विपरीतमशुभनाम । यदुदयात्स्त्रीपुंसयोरन्योन्यप्रीतिप्रभवं सौभाग्यं भवति तत्सुभगनाम । यदुदयाद्रूपादिगुणोपेतोऽप्यप्रीतिकरस्तद्दुर्भ-गनाम । चशब्दो नामशब्दस्य समुच्चयार्थः । यस्य कर्मणः उदयेनादेयत्वं प्रभोपेतशरीरं भवति तदादेयनाम । यदुदयादनादेयत्वं निष्प्रभशरीरं तदना-देयनाम, अथवा यदुदयादादेयवाच्यं तदादेयं विपरीतमनादेयमिति । शोभनः स्वरः मधुरस्वरः यस्योदयात्सुस्वरत्वं मनोज्ञस्वरनिर्वर्त्तनं भवति तत्सुस्वरनाम । यदुदयात् दुःस्वरताऽमनोज्ञस्वरनिर्वर्त्तनं तत् दुःस्वरनाम । पुण्यगुणाख्यापनकरणं यशःकीर्तिनाम, अथवा यस्य कर्मण उदयात्सद्भूतानां च ख्यापनं भवति तद्यशःकीर्त्तनं नाम । तत्प्रत्यनीकमपरमयशस्कीर्तिनाम यदुदयात्सद्भूतानामसद्भूतानां चाप्यगुणानां ख्यापनं तदयशस्कीर्तिनाम । नियतं मानं निमानं तत् द्विविधं प्रमाणनिमानं स्थाननिमानं चेति यस्य कर्मण उदयेन द्वे अपि निमाने भवतस्तन्निमाननाम, अन्यथा कर्णनयन-नासिकादीनां स्वजातिप्रतिरूपणमात्मनः स्थानेन प्रमाणेन च नियमो न स्यात् । यस्य कर्मण उदयेन परममार्हंत्यं त्रैलोकपूजाहेतुर्भवति तत्परमो-त्कृष्टं तीर्थंकरनाम । एवं पिंडप्रकृतीनां द्वाचत्वारिंशन्नाम्न एकैकापेक्षया त्रिनवतिर्वा भेदा भवंतीति ॥ १९५—१९६ ॥

गोत्रप्रकृतिभेदमंतरायप्रकृतिभेदं चाह;—

**उच्चाणिच्चागोदं दाणं लाभंतराय भोगो य।**
**परिभोगो विरियं चेव अंतरायं च पंचविहं ॥ १९७ ॥**

**उच्चैर्नीचैर्गोत्रं दानं लाभांतरायो भोगश्च ।**
**परिभोगो वीर्यं चैव अंतरायश्च पंचविधः ॥ १९७ ॥**

**टीका**—गोत्रशब्दः प्रत्येकमभिसंवध्यते; उच्चैर्गोत्रं, नीचैर्गोत्रं। यदुदयाल्लोकपूजितेषु कुलेषु जन्म तदुच्चैर्गोत्रं, यदुदयाद्गर्हितेषु कुलेषु जन्म तन्नीचैर्गोत्रं ॥ अंतरायशब्दः प्रत्येकमभिसंबध्यते अनुग्रहार्थं स्वस्यातिसर्गो दानं तस्यांतरायः दातृदेयादीनामंतरायो दानांतरायः, । लाभः समीप्सितवस्तु तस्यांतरायो लाभांतरायः, सकृद्भुज्यते भोगस्तस्यांतरायो भोगांतरायः, पुनर्भुज्यते परिभोगस्तस्यांतरायः परिभोगांतरायः, वीर्यः शक्तिरुत्साहस्तस्यांतरायोवीर्यांतरायः । दानादिपरिणामव्याघातहेतुत्वात् तद्व्यपदेशः। यदुदयाद्दातुकामोऽपि न ददाति, लब्धुकामोऽपि न लभते, भोक्तुमिच्छन्नपि न भुंक्ते, उपभोक्तुमभिवांछन्नपि न परिभुंक्ते, उत्सहितुकामोऽपि नोत्सहते। इत्येवमंतरायः पंचविधो भवति उत्तरप्रकृतिभेदेन ॥१९७॥

एवमुत्तरप्रकृतिभेदोष्टचत्त्वारिंशच्छतं भवति ॥

प्रकृतिस्वामित्वं प्रतिपादयन्नाह;—

**सयअडयालपईणं बंधं गच्छंति वीसअहियसयं।**
**सव्वे मिच्छादिट्ठी बंधदि णाहारतित्थयरा ॥ १९८ ॥**

**शताष्टचत्वारिंशत्प्रकृतीनां बंधं गच्छंति विंशत्यधिकशतं।**
**सर्वा मिथ्यादृष्टिः बध्नाति नाहारतीर्थकराः ॥ १९८ ॥**

**टीका**—अष्टचत्वारिंशच्छतप्रकृतीनां मध्ये शतं विंशत्युत्तरं बंधप्रकृतयो भवंति, अष्टाविंशतिरबंधप्रकृतयः। पंच शरीरबंधनानि पंच शरीरसं-

घातानि चत्वारो वर्णाः चत्वारो रसाः एको गंधः सप्त स्पर्शा सम्यक्त्वसम्यङ्मिथ्यात्वे द्वे इत्येवमष्टाविंशतिः। एताभ्यः शेषाणां प्रकृतीनामाहारद्वयतीर्थकररहितानां सप्तदशाधिकं शतं मिथ्यादृष्टिर्बध्नाति। एतासां मिथ्यादृष्टिःस्वामीति। तीर्थकरं सम्यक्त्वेन आहारद्वयं च संयमेनातो न मिथ्यादृष्टिर्बध्नाति, आहारकाहारकांगोपांगतीर्थकरनामानीति ॥ १९८ ॥

सासादनादीनां बंधप्रकृतीः प्रतिपादयन्नाह,—

**वज्जिय तेदालीसं तेवण्णं चेव पंचवण्णं च।**
**बंधइ सम्मादिट्ठी दु सावओ संजदो तहा चेव ॥ १९९॥**

वर्जयित्वा त्रिचत्वारिंशत् त्रिपंचाशत् चैव पंचपंचाशच्च।
बध्नाति सम्यग्दृष्टिस्तु श्रावकः संयतस्तथाचैव ॥ १९९ ॥

टीका—चशब्देन सूचिताः सासादनसम्यग्दृष्टिमिथ्यादृष्ट्योर्बंधप्रकृतीस्तावन्निरूपयामः—मिथ्यात्वनपुंसकवेदनरकायुर्नरकगत्येकद्वित्रिचतुरिंद्रियजातिहुंडसंस्थानासंप्राप्तासृपाटिकासंहनननरकगतिप्रायोग्यानुपूर्व्यातपस्थावरसूक्ष्मापर्याप्तकसाधारणशरीरसंज्ञकाः षोडश प्रकृतीस्त्यक्त्वा शेषा मिथ्यादृष्टिबंधप्रकृतीरेकोत्तरशतं सासादनसम्यग्दृष्टिर्बध्नातीति। सम्यङ्मिथ्यादृष्टिःसम्यग्दृष्टिबंधप्रकृतीस्तीर्थकरदेवमनुष्यायूरहिताश्चतुः सप्ततिसंख्याका बध्नातीति, निद्रानिद्राप्रचलाप्रचलास्त्यानगृद्ध्यनंतानुबंधिक्रोधमानमायालोभस्त्रीवेदतिर्यगायुस्तिर्यग्गतिमध्यमचतुः संस्थानमध्यमचतुः संहननतिर्यग्गतिप्रायोग्यानुपूर्व्योद्योताप्रशस्तविहायोगति दुर्भगदुःस्वरानादेयनीचैर्गोत्रसंज्ञकाः पंचविंशतिप्रकृतीः परिहृत्य तीर्थकरसहिताः सासादनबंधप्रकृतीर्वासप्तसप्ततिरसंयतसम्यग्दृष्टिर्बध्नाति। अप्रत्याख्यानावरणक्रोधमानमायालोभमनुष्यगत्यौदारिकशरीरांगोपांगमनुष्यायुर्वज्रर्षभनाराचसंहननमनुष्यगतिप्रायोग्यानुपूर्व्यनाम्नी दशप्रकृतीः परिहृत्य शेषा असंयतसम्यग्दृष्टिबंधप्रकृतीस्त्रिपंचाशद्रहिततीर्थकराहारद्वयसहितमिथ्यादृष्टिप्रकृतीर्वा सप्तषष्टिसंज्ञकाः संयता-

संयतो बध्नाति । प्रत्याख्यानावरणक्रोधमानमायालोभसंज्ञकाश्चतस्रः प्रकृतीः परिहृत्य शेषाः संयतासंयतबंधप्रकृतीः पंचपंचाशद्रहितामिथ्यादृष्टिबंधप्रकृतीर्वा तीर्थकराहारद्वयबंधसहिताः पंचषष्टिप्रकृतीः प्रमत्तसंयतो बध्नाति । तथा तेनैव प्रकारेणाप्रमत्तादीनां बंधप्रकृतयो द्रष्टव्यास्तद्यथाअसद्वेद्यारतिशोकास्थिराशुभायशस्कीर्तिसंज्ञकाः षट् प्रकृतीः परिहृत्य शेषा अप्रमत्तो बध्नातीति । अप्रमत्तप्रकृतीस्त्यक्तदेवायुः प्रकृतीरष्टापंचाशत्संज्ञका अपूर्वकरणो बध्नातीति । ता एव निद्राप्रचलारहिताः षट्पंचाशत्प्रकृतीः स एवापूर्वकरणसंख्यातभागेषु बध्नाति तत ऊर्ध्वं संख्येयभागे पंचेंद्रियजातिवैक्रियिकाहारतैजसकार्मणशरीरसमचतुरस्रसंस्थानवैक्रियकाहारकशरीरोगोपांगवर्णगंधरसस्पर्शदेवगतिदेवगतिप्रायोग्यानुपूर्व्यागुरुलघूपघातपरघातोच्छ्वासविहायोगतित्रसवादरपर्याप्तकप्रत्येकशरीरस्थिरसुभगसुस्वरादेयनिर्माणतीर्थकराख्याः प्रकृतीः परिहृत्य शेषाः षड्विंशतिप्रकृतीः स एवापूर्वकरणो बध्नाति ततोऽनिवृत्तिप्रथमभागे ता एव प्रकृतीर्हास्यरतिभयजुगुप्सारहिता द्वाविंशतिसंख्याका बध्नाति, अनिवृत्तिवादरस्तत ऊर्ध्वं पुंवेदरहिता एकविंशतिप्रकृतीरनिवृत्तिद्वितीयभागे बध्नाति ततः संज्वलनक्रोधरहिता विंशतिप्रकृतीस्तृतीयभागे बध्नाति ततः संज्वलनमानरहिता एकोनविंशतिप्रकृतीश्चतुर्थभागे बध्नाति तत ऊर्ध्वं मायारहिता अष्टादशप्रकृतीः पंचमभागे बध्नाति । तत ऊर्ध्वं ता एव लोभरहिताः सप्तदशप्रकृतीः सूक्ष्मसांपरायो बध्नाति, ज्ञानांतरायदशकदर्शनचतुष्कोच्चैर्गोत्रयशः कीर्तिषोडशप्रकृतीर्मुक्त्वैकं सद्वेद्यं द्वितीयभागे सूक्ष्मसांपरायो बध्नाति, तत ऊर्ध्वं सातवेदनीयाख्यामेकां प्रकृतिमुपशांतकषायक्षीणकषायायोगिकेवलिनो बध्नंति । अयोगकेवली अबंधको न किंचित्कर्म बध्नातीति ॥ १९९ ॥

व्याख्यातः प्रकृतिबंधविकल्पः, इदानीं स्थितिबंधविकल्पो वक्तव्यः, सा च स्थितिर्द्विविधोत्कृष्टा जघन्या च; तत्र यासां कर्मप्रकृतीनामुत्कृष्टा

स्थितिः समाना तन्निर्देशार्थमुच्यते;—

**तिण्हं खलु पढमाणं उक्कस्सं अंतरायस्सेव।**
**तीसं कोडाकोडी सायरणामाणमेव ठिदी ॥ २०० ॥**

**त्रयाणां खलु प्रथमानां उत्कृष्टं अंतरायस्यैव।**
**त्रिंशत् कोटीकोट्यः सागरनाम्नामेव स्थितिः ॥ २०० ॥**

टीका—त्रयाणां प्रथमानां ज्ञानावरणदर्शनावरणवेदनीयानां सामीप्यात्साहचर्याद्वा सर्वेषां प्रथमत्वमंतरायस्य च उत्कृष्टा स्थितिः सागरनाम्नां त्रिंशत्कोटीकोट्यो नाधिकाः। पंचानां ज्ञानावरणीयानां नवानां दर्शनावरणीयानां सातवेदनीयस्यासातवेदनीयस्य पंचांतरायाणां चोत्कृष्टः स्थितिवंधः स्फुटं त्रिंशत्सागरोपमकोटीकोट्यः। एत कर्मरूपपुद्गला एतावता कालेन कर्मस्वरूपाभावे क्षयमुपव्रजंतीति ॥ २०० ॥

तथाः—

**मोहस्स सत्तरिं खलु वीसं णामस्स चेव गोदस्स।**
**तेतीसमाउगाणं उवमाओ सायराणं तु ॥ २०१ ॥**

**मोहस्य सप्ततिः खलु विंशतिः नाम्नश्चैव गोत्रस्य।**
**त्रयस्त्रिंशत् आयुष उपमाः सागराणां तु ॥ २०१ ॥**

टीका—मोहस्य मिथ्यात्वस्य सागरोपमानां कोटीकोटीनां सप्ततिरुत्कृष्टा स्थितिः, नामगोत्रयोः कर्मणोरुत्कृष्टस्थितिःसागराणां कोटीकोटीनां विंशतिः पूर्वोक्तेन सागरनाम्नां कोटीकोटी इत्यनेन संवंधः। आयुषः पुनः कोटीकोटीशब्दो नास्तीति संवंधस्तथानभिधानादागमे इत्यतः सागरशब्देनैव संवंधः। कुतः पुनः सागरोपमग्रहणादायुष उत्कृष्टस्थितिः उपमा सागराणां त्रयस्त्रिंशत्स्थितेः सागरैस्त्रयास्त्रिंशद्भिरुपमा। तुशब्दः सर्वविशेषणसंग्रहार्थ–

स्तद्यथा, सातवेदनीयस्त्रीवेदमनुष्यगतिप्रायोग्यानुपूर्व्यनाम्नामुत्कृष्टा स्थितिर्दशसागरोपमकोटीकोट्यः, षोडशकषायाणामुत्कृष्टः स्थितिबंधश्चत्वारिंशत्कोटीकोट्यः सागराणां, पुंवेदहास्यरतिदेवगतिसमचतुरस्रसंस्थानवज्रर्षभनाराचसंहननदेवगतिप्रायोग्यानुपूर्व्यप्रशस्तविहायोगतिस्थिरसुभगशुभस्वरादेययशः कीर्तिरुच्चैर्गोत्राणामुत्कृष्टः स्थितिबंधः दशसागरोपमकोटीकोट्यः, नपुंसकवेदारतिशोकभयजुगुप्सानरकगतितिर्यग्गत्यकेंद्रियपंचेंद्रियजात्यौदारिकवैक्रियिकतैजसकार्माणशरीरहुंडसंस्थानौदारिकवैक्रियिकांगोपां–गासंप्राप्तासृपाटिकासंहननवर्णरसगंधस्पर्शनरकगातितिर्यग्गतिप्रायोग्यानुपूर्व्यागुरुलघूपघातपरघातोच्छ्वासातपोद्योताप्रशस्तविहायोगतित्रसस्थावरबादरपर्याप्तप्रत्येकशरीरास्थिराशुभदुर्भगदुःस्वरानादेयायशस्कीर्तिनाम्नां नीचैर्गोत्राणामुत्कृष्टः स्थितिबंधो विंशतिसागरोपमकोटीकोट्यो नरकदेवायुषोस्त्रयस्त्रिंशत्सागरोपमाण्युत्कृष्टास्थितिः, तिर्यङ्मनुष्यायुष उत्कृष्टा स्थितिस्त्रीणि पल्योपमानि द्वीन्द्रियत्रीन्द्रियचतुरिंद्रियजातिवामनसंस्थानकीलकसंहननसूक्ष्मापर्याप्तसाधारणनाम्नामुत्कृष्टास्थितिः अष्टादशसागरोपमंकोटीकोट्यः, आहारशरीरांगोपांगतीर्थकरनाम्नामुत्कृष्टा स्थितिः अंतःकोटीकोट्यः न्यग्रोधसंस्थाननाराचसंहननयोरुत्कृष्टास्थितिश्चतुर्दशसागरोपमकोटीकोट्यः, कुब्जसंस्थानार्द्धनाराचसंहननयोरुत्कृष्टा स्थितिः षोडशसागरोपमकोटीकोट्यः । सर्वत्र यावंत्यः सागरोपमकोटीकोट्यस्तावंति वर्षशतान्यावाधाकर्मस्थितिः कर्मनिषेधकः, येषां तु अंतःकोटीकोट्यः स्थितिस्तेषामंर्मुहूर्त्त आवाधा, आयुषः पूर्वकोटीत्रिभाग उत्कृष्टावाधा आवाधानां कर्मस्थितिः कर्मस्थितिकर्मनिषेधक इति इयं संज्ञिपंचेंद्रियस्योत्कृष्टा स्थितिरेकेंद्रियस्य पुनर्मिथ्यात्वस्योत्कृष्टः स्थितिबंध एकं सागरोपमं । कषायाणां सप्त चत्वारो भागा ज्ञानावरणदर्शनावरणांतरायसातवेदनीयानामुत्कृष्टः स्थितिबंधः सागरोपमस्य त्रयः सप्त भागाः; नामगोत्रकषायाणां सागरोपमस्य द्वौ सप्तभागौ । एवं शेषाणां त्रैराशिकक्रमेणैकेंद्रियस्योत्कृष्टा स्थितिः

साध्या, तस्याः संदृष्टिरेवं

| १ | ४ | ३ | २ |
|---|---|---|---|
| | ७ | ७ | ७ |

एवं द्वीन्द्रियाद्यसंज्ञिपंचेंद्रियपर्यंतानामुत्कृष्टा स्थितिः साध्या। द्वीन्द्रियस्य मिथ्यात्वस्योत्कृष्टा स्थितिः पंचविंशतिः सागरोपमाणां, त्रींद्रियस्य पंचाशत्, चतुरिंद्रियस्य शतं असंज्ञिपंचेंद्रियस्य सहस्रं। तद्विभागेनैव शेषकर्मणामप्युत्कृष्टा स्थितिः साध्या त्रैराशिकक्रमेण। तेषां संदृष्टयः।

| २५ | | १०० ७४ ४४ |
|---|---|---|
| १०० | ४०० | ७ ७ ७ |
| १००० | ७ | |

द्वीन्द्रियस्य मिथ्यात्वदीनां

| ५० | २०० | १५० | १०० |
|---|---|---|---|
| | ७ | ७ | ७ |

त्रीन्द्रियस्य मिथ्यात्वादीनां

| ४००० | ३००० |
|---|---|
| ७ | ७ |

| ३०० | २०० |
|---|---|
| ७ | ७ |

चतुरिंद्रियास्यमिथ्यात्वदीनां असांज्ञि | २००० | पंचेंद्रियस्य मिथ्यात्वादीनामुत्कृष्टः स्थितिबंधः। सर्वत्र चाल्पः संख्यातभाग एव आवाधा इति॥ २०१॥

उत्कृष्टस्थितिबंधं प्रतिपाद्य जघन्यस्थितिबंधं प्रतिपादयन्नाह;—

**बारस य वेदणीए णामागोदाणमट्ठय मुहुत्ता।**
**भिण्णमुहुत्तं तु ठिदी जहण्णं सेस पंचण्हं॥ २०२॥**

**द्वादश च वेदनीयस्य नामगोत्रयोरष्टौ मुहूर्ताः।**
**भिन्नमुहूर्तं तु स्थितिः जघन्या शेषाणां पंचानां॥ २०२॥**

**टीका**—वेदनीयस्य कर्मणो जघन्या स्थितिः द्वादश मुहूर्ताः, नामगोत्रयोः कर्मणोरष्टौ मुहूर्त्ताः जघन्या स्थितिः। शेषाणां पुनः पंचानां ज्ञानावरणदर्शनावरणमोहनीयायुरंतरायाणां जघन्या स्थितिरंतर्मुहूर्त्तमात्रेति च॥ जघन्यस्थितेर्विशेषं प्रतिपादयन्नाह;—पंचज्ञानावरणचतुर्दर्शनावरणलोभसंज्वलनपंचांतरायाणां जघन्या स्थितिरन्तर्मुहूर्त्ता सातवेद्यस्य द्वादशमुहूर्ता यशः

कीर्त्युच्चगोत्रयोरष्टौ मुहूर्त्ताः क्रोधसंज्वलनस्य द्वौ मासौ मानसंज्वलनस्यैक-मासः मायासंज्वलनस्यार्द्धमासः पुरुषवेदस्याष्टौ संवत्सराः निद्रानिद्राप्रचला-प्रचलास्त्यानगृद्धिनिद्राप्रचलाऽसातवेदनीयानां सागरोपमस्य त्रयः सप्तभागाः पल्योपमासंख्यातभागहीनाः । मिथ्यात्वस्य सागरोपमस्य सप्तदशभागाः पल्योपमासंख्यातभागहीना अनंतानुवंध्यप्रत्याख्यानप्रत्याख्यानानां सागरो-पमस्य चत्वारः सप्तभागाः पल्योपमासंख्यातभागहीना अष्टानां नोकषायाणां सागरोपमस्य द्वौ सप्तभागौ पल्योपमासंख्यातभागहीनौ नरकदेवायुंषादशव-र्षसहस्राणि तिर्यङ्मनुष्यायुषोरंतर्मुहूर्त्तः नरकगतिवैक्रियिकशरीरांगोपांगदेवग-तिप्रायोग्यानुपूर्व्याणां सागरोपमस्य द्वौ सप्तभागौ पल्योपमासंख्यातभागहीनौ आहाराहारांगोपांगतीर्थकराणां सागरोपमाणां कोटीकोट्योंऽतः कोटीकोटी शेषाणां सागरोपमस्य द्वौ सप्तभागौ पल्योपमासंख्यातभागहीनौ । सर्वत्र जघन्या स्थितिरिति संबंधनीया । सर्वत्र चांतर्मुहूर्त्तमावाघा आवाधो नाम कर्मस्थितिः कर्मनिषेधकः । सर्वोऽयं जघन्यस्थितिबंधः सामान्यापेक्षया संज्ञिपंचेंद्रियस्यैकेंद्रियद्वींद्रियत्रीन्द्रियचतुरिंद्रियासंज्ञिपंचेंद्रियाणां सर्वक-र्मणां जघन्यस्थितिबंधः य एवोत्कृष्ट उक्तः स एव पल्योपमासंख्यातभाग-हीनो द्रष्टव्य इति ॥ २०२ ॥

अनुभागबंधं निरूपयन्नाह;—

**कम्माणं जो दु रसो अज्झवसाणजणिद सुह असुहो वा**
**बंधो सो अणुभागो पदेसबंधो इमो होइ ॥ २०३ ॥**

**कर्मणां यस्तु रस अध्यवसानजनितः शुभोऽशुभो वा ।**
**बंधः सः अनुभागः प्रदेशबंधः अयं भवति ॥ २०३ ॥**

**टीका**—कर्मणां ज्ञानावरणादीनां यस्तु रसः सोऽनुभवोऽध्यवसानैः परि-णामैर्जनितः क्रोधमानमायालोभतीव्रादिपरिणामभावतः शुभः सुखदः अशुभः असुखदः वा विकल्पार्थः सोऽनुभागबंधः । यथा अजागोमाहिष्यादीनांक्षीण-तीव्रमंदादिभावेन रसविशेषस्तथा कर्मपुद्गलानां तीव्रादिभावेन स्वगतसाम-

र्थ्यविशेषः शुभोऽशुभो वा यः सोऽनुभागवंधः । शुभपरिणामानां प्रकर्षभावाच्छुभप्रकृतीनांप्रकृष्टोऽनुभवोऽशुभप्रकृतीनां निकृष्टः अशुभपरिणामानां प्रकृष्टभावादशुभप्रकृतीनां प्रकृष्टोऽनुभवः शुभप्रकृतीनां निकृष्टः । स एवं प्रकृतिवशादुपपन्नो रसविशेषः द्विधा प्रवर्त्तते स्वमुखेन परमुखेन चैवं सर्वासां मूलप्रकृतीनां स्वमुखेनैवानुभवः उत्तरप्रकृतीनां तुल्यजातीनां परमुखेनापि आयुर्दर्शनचारित्रमोहवर्ज्यानां, न हि नरकायुर्मुखेन तिर्यगायुर्मनुष्यायुर्वा विपच्यते नापि दर्शनमोहश्चारित्रमोहमुखेन चारित्रमोहो वा दर्शनमोहमुखेनेति । तथा देशघातिसर्वघातिभेदेनानुभागो द्विविधः, देशं घातयतीति देशघाती सर्वं घातयतीति सर्वघाती । निद्रानिद्राप्रचलाप्रचलास्त्यानगृद्धिप्रचलानिद्राः चतुः संज्वलनवर्ज्या द्वादश कषाया मिथ्यात्वादीनां विंशतिप्रकृतीनामनुभागः सर्वघाती ज्ञानादिगुणं सर्वं घातयतीति वनदाह इव । मतिज्ञानश्रुतज्ञानावधिज्ञानमनःपर्ययज्ञानावरणपंचांतरायसंज्वलनक्रोधमानमायालोभनवनोकषायाणामुत्कृष्टानुभागबंधः सर्वघाती वा जघन्यो देशघाती सातासातचतुरायुः सर्वनामप्रकृत्युच्चैर्नीचैर्गोत्राणामुत्कृष्टाद्यनुभागवंधः घातिनां प्रतिभागो देशघाती घातिविनाशे स्वकार्यकरणसामर्थ्याभावात् एता अघातिप्रकृतयः पुण्यपापसंज्ञाः शेषाः पुनः पूर्वोक्ता घातिसंज्ञाःपापा भवंतीति । अशुभप्रकृतीनां चत्वारि स्थानानि निंवकांजीरविषकालकूटानीति, शुभप्रकृतीनां च चत्वारि स्थानानि गुडखंडशर्करामृतानीति । मोहनीयांतरायवर्जितानां षण्णां कर्मणामुत्कृष्टानुभागवंधः चतुः स्थानिको जघन्यानुभागवंधो द्विस्थानिकः शेषः द्वित्रिचतुः स्थानिकः, मोहनीयांतराययोरुत्कृष्टानुभागवंधश्चतुः स्थानिको जघन्यानुभागवंध एकस्थानिकः शेषा एकद्वित्रिचतुः स्थानिकाः । चतुर्ज्ञानावरणत्रिदर्शनावरणपुंवेदचतुःसंज्वलनपंचांतरायाणां सप्तदशप्रकृतीनामुत्कृष्टानुभागवंधश्चतुःस्थानिको जघन्यानुभागवंध एकस्थानिकः । शेषाः सर्वेऽपि केवलज्ञानावरणसातासातमिथ्यात्वद्वादशकषायाष्टनोकषायचतुरायुःसर्वनामप्रकृत्युच्चैर्नीचैर्गोत्राणामुत्कृष्टानुभागवं-

घश्चतुःस्थानिक जघन्यो द्विस्थानिकः शेषो द्वित्रिचतुः स्थानिकः । घातिनामेकस्थानं नास्ति । पुंवेदरहितानां नोकषायाणामेकस्थानं नास्ति निंबवदेकस्थानं कांजीरवत् द्विस्थानं विषवत् त्रिस्थानं कालकूटवत् चतुः स्थानं अशुभप्रकृतीनामेतत् । गुडवदेकस्थानं खंडवत् द्विस्थानं शर्करावत् त्रिस्थानं अमृतवत् चतुः स्थानं शुभप्रकृतीनामेतादिति । पंचशरीरषट्संस्थानत्र्यंगोपांगषट्संहननपंचवर्णद्विगंधपंचरसाष्टस्पर्शागुरुलघूपघातपरघातातपोद्योतनिमानप्रत्येकसाधारणस्थिरास्थिरशुभाशुभा एता प्रकृतयः पुद्गलविपाकाः पुद्गलपरिणामिन्यो यत इति चत्वार्यायूंषि भवविपाकानि भवधारणत्वाच्चत्वार्यानुपूर्व्याणि क्षेत्रविपाकानि क्षेत्रमाश्रित्य फलदानात् । शेषास्तु प्रकृतयो जीवविपाका जीवपरिणामनिमित्तत्वात् इति ॥ २०३ ॥

अनुभागबंधं व्याख्याय प्रदेशबंधं प्रतिपादयन्नाह;—

**सुहुमे जोगविसेसेण एगखेत्तावगाढठिदियाणं ।**
**एक्केक्के दु पदेसे कम्मपदेसा अणंता दु ॥ २०४ ॥**

**सूक्ष्मा योगविशेषात् एकक्षेत्रावगाहस्थिताः ।**
**एकैकस्मिन् तु प्रदेशे कर्मप्रदेशा अनंतास्तु ॥ २०४ ॥**

**टीका**—सुहुमे सूक्ष्माः न स्थूलाः ओगविसेसेण योगविशेषेण मनोवचनकायविशिष्टव्यापारात् एकखेत्तोवगाढ एकक्षेत्रावगाहिनो न क्षेत्रांतरावगाहिनः यस्मिन्नेवात्मा कर्मादानरतस्ततः परस्मिन् क्षेत्रे ये पुद्गलास्ते इति ठिदियाणं स्थिताः न गच्छंतः एक्केक्के दु पदेसे सर्वात्मप्रदेशेषु कम्मपदेसा कर्मप्रदेशाः ज्ञानावरणादिनिमित्तपरमाणवः अणंता दु अनंतास्तु । सूक्ष्मग्रहणं ग्रहणयोग्यपुद्गलस्वभावानुवर्णनार्थं वर्णग्रहणयोग्याः पुद्गलाः सूक्ष्माः न स्थूलाः, एकक्षेत्रावगाहवचनं क्षेत्रांतरनिवृत्त्यर्थं एकक्षेत्रे कर्मादानशक्तियुक्तजीवसहचरितप्रदेशे अवगाहो येषां एकक्षेत्रावगाहः, स्थिता इति क्रियांतरनिवृत्त्यर्थं स्थिता न गच्छंतः, एकैकप्रदेशे इत्यत्र वीप्सानिर्देशेन सर्वात्मप्रदेशसंग्रहः कृतस्तेनाधारनिर्देशः कृतस्तेनैकप्रदेशादिषु न कर्मप्रदेशाः प्रवर्त्तंते

क्व तर्हि ऊर्ध्वमधः स्थितास्तिर्यक्च सर्वेष्वात्मप्रदेशेषु व्याप्य स्थिता इति। कर्मग्रहणं सर्वकर्मप्रकृतिसंग्रहार्थं अनेनोपादानहेतुसंग्रहः कृतः, प्रदेशा इति पुद्गलग्रहणं तेनाकाशादिप्रदेशनिवृत्तिः। अनंतानंत इति परिमाणः अनंतरव्यपोहार्थं,तुशब्दः अनुक्तसर्वविशेषसंग्रहार्थं, न संख्येया नचासंख्येयाः नाप्यनंतास्ते पुद्गलस्कंधाः किं तु अभव्यानंतगुणाः सिद्धानंतभागप्रमिताः घनांगुलस्य संख्येयभागावगाहिनः एकद्वित्रिचतुः समयस्थितिकाः पंचवर्णरसद्विगंधचतुःस्पर्शभवाः सूक्ष्मा अष्टविधकर्मप्रकृतियोग्या एकक्षेत्रावगाहिनः स्थिताः सर्वात्मप्रदेशेषु योगवशादात्मना प्रदेशाः कर्मरूपेणात्मसात्क्रियंते। अयं प्रदेशबंधः। अथवाऽऽत्मनो योगवशादष्टविधकर्महेतवोऽनंतानंतप्रदेशा एकैकप्रदेशे ये स्थितास्ते प्रदेशबंधा इति। अष्टविधकर्मयोग्यपुद्गलानां एकैकसमयेन बंधनमागतानां आयुर्भाग एकः नामगोत्रयोरन्योन्यसमोऽधिक एकतरो भाग आयुर्भागात् ज्ञानावरणदर्शनावरणांतरायाणां भागोऽन्योन्यसदृश एकतरः नामगोत्रयोरेकतरभागाधिकः मोहस्य भाग आवरणांतरायैकतरभागादधिकः मोहभागाद्वेदनीयभागोऽधिकः। सर्वत्र आवल्याः संख्यातभागेन भागे हृते यल्लब्धं तेनाधिक इति। एवं सप्तविधबंधकानां षड्विधबंधकानां च ज्ञातव्यं। ज्ञानावरणादीनामात्मप्रदेशभाग आत्मात्मेतरप्रकृतयो यावंत्यस्तावद्भागैरभिगच्छंति ॥ २०४ ॥

एवं बंधपदार्थो व्याख्यातः संक्षेपतः, इत उर्ध्वमुपशमनविधिं क्षपणविधिं च प्रपंचयन्नाह;—

**मोहस्सावरणाणं खयेण अह अंतरायस्स य एव।**
**उववज्जइ केवलयं पयासयं सव्वभावाणं ॥ २०५ ॥**

***मोहस्यावरणयोः क्षयेण अथ अंतरायस्य चैव।***
***उत्पद्यते केवलं प्रकाशकं सर्वभावानां ॥ २०५ ॥***

टीका—मोहस्यावरणयोरंतरायस्य च क्षयेण विनाशेनैवोत्पद्यते केवलं केवलज्ञानं प्रकाशकं सर्वभावानां सर्वद्रव्यपर्यायपरिच्छेदकं अथशब्देन सूत्रेणैवमुपशमनविधिं तावत्प्रतिपादयामि—अनंतानुवंधिक्रोधमानमायालोभसम्यक्त्व-

मिथ्यात्वसम्यङ्मिथ्यात्वानीत्येताः सप्त प्रकृतीः असंयतसम्यग्दृष्टिसंयतासंयत-प्रमत्ताप्रमत्तादीनां मध्ये कोऽप्येक उपशमयति तत्राधःप्रवृत्त्यपूर्वकरणानिकर-णानिकृत्वा अनिवृत्तिकरणकालस्य संख्येयेषु भागेषु गतेषु विशेषघातेन हन्य-मानमनंतानुबंधिचतुष्कं स्थितिसत्कर्मोपशमं याति स्वस्वरूपं परित्यज्यान्यस्य प्रकृतिस्वरूपेण स्थानमनंतानुबंधिनामुपशमः पुनरधःप्रवृत्त्यपूर्वानिवृत्तिकरणा-नि कृत्वा अनिवृत्तिकरणकालस्य संख्येयेषु भागेषु गतेषु दर्शनमोहत्रिकस्यो-दयाभाव उपशमस्तेषामुपशांतानामप्युत्कर्षापकर्षपरप्रकृतिसंक्रमणानामस्तित्वं च्यत इति । अपूर्वकरणेनैकमपि कर्मोपशाम्यति किंत्वपूर्वकरणः प्रतिसमयमनंतगुणविशुद्ध्या वर्द्धमानः अंतर्मुहूर्त्तेनैकैकस्थितिखंडकं पात-यन् संख्यातशतसहस्राणि स्थितिखंडकानि पातयति तावन्मात्राणि च स्थितिबंधापसरणानि करोति एकैकस्थितिबंधाभ्यतरे संख्यातसहस्राण्यनु-भागखंडकानि पातयति प्रतिसमयमसंख्यातगुणश्रेण्या प्रदेशनिर्जरां करोति अप्रशस्तकर्मांशान्न वध्नाति तेषां प्रदेशग्रमसंख्यातगुणश्रेण्या अन्यासु प्रकृ-तिषु वध्यमानस्ततोऽस्तिपरि संक्रामयति । पुनरपूर्वकरणमतिक्रम्यानिवृत्तिक-रणं प्रविश्यांतर्मुहूर्त्तमात्रमनेन विधानेन स्थित्वा द्वादशानां कषायाणां नवानां नोकषायाणामंतरमंतर्मुहूर्तेन करोति । अंतरे क्षते प्रथमसमयादुपरि अंतर्मुहूर्त्तं गन्वा असंख्येयगुणश्रेण्या नपुसंकवेदमुपशमयति ततोंऽतर्मुहूर्त्तं गत्वा नपुंस-कवेदोपशमनविधिना स्त्रीवेदमुपशमयति ततोंऽतर्मुहूर्तेन तेनैव विधिना षण्णां कषायाणां पुरुषवेदं चिरंतनसत्कर्मणा सह युगपदुपशमयति तत ऊर्ध्वं सम-योने द्वे आवल्यौ ग.वा पुंवेदनवकबंधमुपशमयति ततोंऽतर्मुहूर्त्तं गत्वा अप्रत्या-ख्यानप्रत्याख्यानसंज्ञकौ क्रोधौ क्रोधसंज्वलन चिरंतनसत्कर्मणा सह युगप-दुपशमयति ततः समयोने द्वे आवल्यौ गत्वा क्रोधसंज्वलननवकबंधमुपशम-यति ततोंऽतर्मुहूर्त्तं गत्वा अप्रत्याख्यान प्रत्याख्यानमानौअसंख्यातगुणश्रेण्या मानसंज्वलनं चिरंतनसत्कर्मणा सह युगपदुपशमयति, ततः समयोने द्वे आवल्यौ गत्वा मानसंज्वलननवकबंधमुपशमयति ततः प्रतिसमयमसंख्या-

तगुणश्रेण्या उपशमयन्नंतर्मुहूर्तं गत्वा द्विप्रकारां मायां मायासंज्वलनं चिरंतनसत्कर्मणा सह युगपदुपशमयाति ततो द्वे आवल्यौ समयोने गत्वा मायासंज्वलननवकबंधमुपशमयति ततोंऽतर्मुहूर्त्तं गत्वा द्विप्रकारं लोभं लोभसंज्वलनेन चिरंतनसत्कर्मणा सह लोभवेदकाद्धा द्वितीयत्रिभागे सूक्ष्मां किट्टिकां मुक्त्वा शेषं बादरलोभं स्पर्द्धकगतं सर्वनवकबंधोच्छिष्टावालिकवर्ज्यं अनिवृत्तिचरमसमयैर्निवृत्तिरुपशयमति नपुंसकवेदमादिं कृत्वा यावल्लोभसंज्वलनं एतेषामनिवृत्तेरुपशमकं भवति ततोऽनंतरसमये सूक्ष्माकिट्टिकास्वरूपं वेदलोभं वेदयन् नष्याऽनिवृत्तिसंज्ञो सूक्ष्मसांपरायो भवाति ततश्चात्मनश्चरमसमये लोभसंज्वलनं सूक्ष्मकिट्टिकास्वरूपं निःशेषमुपशमयति तत उपशांतकषायः वीतरागछद्मस्थो भवति। उदयोदीरणात्कर्षणोपकर्षणपरप्रकृतिसंक्रमणस्थित्यनुभागखंडकघातैर्विना स्थानमपि समंनाम्नैष मोहनीयोपशमनविधिः इति।

अथ क्षपणविधिं वक्ष्ये। क्षपणं नाम अष्टकर्मणां मूलोनरभेद इति न प्रकृतिस्थित्यगुभागप्रदेशानां जीवा ज्योतिः शेषे विन्यास इति ?। अनंतानुवंधिक्रोधमानमायालोभमिथ्यात्वसम्यङ्मिथ्यात्वसम्यत्क्वाख्याः सप्तप्रकृतीरेता असंयतसम्यग्दृष्टिः संयतासंयतः प्रमत्तसंयतोऽप्रमत्तो वा क्षपयाति, किमक्रमेण नेत्याह;—पूर्वमनंतानुवंधिचतुष्कं त्रीन् करणान् कृत्वाऽनिवृत्तिकरणचरणमसमयेऽक्रमेण क्षपयाति पश्चात्पुनरपि त्रीन् करणान् कृत्वा अधः प्रवृत्तिकरणापूर्वकरणौ द्वावतिक्रम्यानिवृत्तिकरणकालसंख्येयभागं गत्वा मिथ्यात्वं क्षपयाति ततोंऽतर्मुहूर्तं गत्वा सम्यङ्मिथ्यात्वं क्षपयति ततोंऽतर्मुहूर्तं गत्वा सम्यक्त्वं क्षपयति ततोऽधः प्रवृत्तिकरणं कृत्वांऽतर्मुहूर्त्तेनापूर्वकरणो भवति स एकमपि कर्म क्षपयति किंतु समयं प्रति असंख्येयगुणस्वरूपेण प्रदेशनिर्जरां करोति अंतर्मुहूर्त्तेनैकैकस्थितिखंडकं पातयन्नात्मनः कालाभ्यंतरे असंख्यातसहस्राणि स्थितिखंडकानि पातयति तावन्मात्राणि च स्थितिबंधापसरणानि करोति तेभ्यश्च संख्यातसहस्रगुणानुभागखंडकघातान् करोति यत एकानुभागखंडकोत्कीर्णकालादेकस्य स्थितिखंडकोत्कीर्णकालः संख्यातगुण

इति । एवंविधं कृत्वाऽनिवृत्तिगुणस्थानं प्रविश्यानिवृत्तिसंख्यातभागोऽपूर्व-करणविधानेन गमयित्वाऽनिवृत्तिकालसंख्यातिभागे शेषे स्त्यानगृद्धित्रय नरकगतितिर्यग्गत्येकेंद्रियद्वीन्द्रियत्रींद्रियचतुरिंद्रियजातिनरकगतितिर्यग्गति-प्रायोग्यानुपूर्व्यातपोद्योतस्थावरसूक्ष्मसाधारणसंज्ञकाः षोडशप्रकृतीः क्षपयति ततोंऽतर्मुहूर्त्तं गत्वा अप्रत्याख्यानावरणक्रोधमानमायालोभान् क्रमेण क्षपयति स एष कर्मप्राभृतस्योपदेशः, कषायप्राभृतोपदेशः पुनः अष्टसु कषायेषु क्षीणेषु पश्चादन्तमुहूर्तं गत्वा षोडशकर्माणि द्वादश वा क्षपयत्यत उपदेशो ग्राह्यौद्वावप्यवद्यभीरुभिरिति । ततोंऽतमुहूर्त्तं गत्वा चतुर्णां संज्वलनानां नवानां नोकषायाणां अंतरं करोति, सोदयानामंत-र्मुहूर्त्तमात्रं प्रथमस्थितिं स्थापयाति अनुदयानां समयोनाबलिकामात्रां प्रथम-स्थितिं स्थापयति ततोंतरं कृत्वांऽतर्मुहूर्त्तेन नपुंसकवेदं क्षपयति ततोंऽतर्मु-हूर्त्तं गत्वा स्त्रीवेदं क्षपयाति ततोंऽतर्मुहूर्तं गत्वा षण्णो कषायाणां वेदं चिरं-तनसत्कर्मणा सह वेदविद्विचरमसमये युगपत् क्षपयति तत आवलीमात्र-कालं गत्वा पुंवेदं क्षपयति ततोंऽतर्मुहूर्त्तेन क्रोधसंज्वलनं क्षपयति ततोंऽत-र्मुहूर्त्तेन मानसंज्वलनं क्षपयाति ततोऽन्तर्मुहूर्तेन मायासंज्वलनं क्षपयति ततों-ऽतर्मुहूर्तं गत्वा सूक्ष्मसांपरायगुणस्थानं प्रतिपाद्यते एतेषु सोऽपि सूक्ष्मसांपराय-मात्मनश्चरमसमये किट्टिकागतं सर्वं लोभसंज्वलनं क्षपयति ततोऽनंतरं क्षीणकषायो भवति सोऽप्यंतर्मुहूर्तं गमयित्वा आत्मनो द्विचरमसमये निद्राप्र-चलासंज्ञके द्वे प्रकृती क्षपयाति ततोऽनंतरं चरमसमये पंचज्ञानावरणचतुर्द-र्शनावरणपंचांतरायाख्याश्चतुर्दश प्रकृतीः क्षपयति एतेषु त्रिषष्टिकर्मसु क्षीणेषु सयोगिजिनो भवति ॥ २०५ ॥

सयोगिकेवली भट्टारको न किंचिदपि कर्म क्षपयति ततः क्रमेण विहृत्य योगनिरोधं कृत्वा अयोगिकेवली भवति स यत्कर्म क्षपयति तन्निरूपयन्नाह;

**तत्तोरालियदेहो णामा गोदं च केवली युगवं ।**
**आऊण वेदणीयं चदुहिं खिविइत्तु णीरओ होइ॥२०६॥**

तत औदारिकदेहं नामगोत्रं च केवली युगपत्।
आयुः वेदनीयं चत्वारि क्षपयित्वा नीरजा भवति॥ २०६॥

टीका—तत ऊर्ध्वं सयोगिकेवली औदारिकशरीरं सनिश्वास एवायं नामगोत्रे कर्मणी आयुर्वेदनीयं च युगपत् क्षपयित्वा नीरजाः सिद्धो भवति। विशेषमाह,—अयोगिकेवली आत्मकालद्विचरमसमयेऽनुदय वेदनीयदेवगतिपंचशरीरपंचसंघातपंचशरीरबंधनषट्संस्थानत्र्यंगोपांगषट्संहननपंचवर्णद्विगंधपंचरसाष्टस्पर्शदेवगतिप्रायोग्यानुपूर्व्यागुरुलघूपघातपरघातोच्छ्वासद्विविहायोगत्यपर्याप्तस्थिरास्थिरशुभाशुभसुभगदुर्भगसुस्वरदुःस्वरानादेयायशःकीर्तिनिमाननीचैर्गोत्राणि एता द्वासप्ततिप्रकृतीः क्षपयति ततोनंतरं सोदयवेदनीयमनुष्यायुर्मनुष्यगतिपंचेंद्रियजातिमनुष्यगतिप्रायोग्यानुपूर्व्यत्रसबादरपर्याप्तोच्चैर्गोत्रप्रत्येकतीर्थकरनामादेययशःकीर्तिसंज्ञकास्त्रयोदशप्रकृतीश्चरमसमये क्षपयति, ततो द्रव्यरूपमौदारिकशरीरं त्यक्त्वा नीरजा निर्मलः सिद्धो निर्लेपः सर्वद्वंद्वरहितोऽनंतज्ञानदर्शनसुखवीर्यसमन्वितोऽक्षयो युगपत्सर्वद्रव्यपर्यायावभासकोऽनंतगुणाधारः परमात्मा भवतीति॥ २०६॥

इतिश्रीमदाचार्यवर्यवट्टकेरिप्रणीतमूलाचारे श्रीवसुनंदिप्रणीतटीकासहिते द्वादशोऽधिकारः।

स्रग्धरावृत्तम्।

वृत्तिः सर्वार्थसिद्धिः सकलगुणनिधिः सूक्ष्मभावानुवृत्ति—
राचारस्याप्तनीतेः परमजिनपतेः ख्यातनिर्देशवृत्तेः।
शुद्धैर्वाक्यैः सुसिद्धा कलिमलमथनी कार्यसिद्धिर्मुनीनां
स्थेयाज्जैनेंद्रमार्गे चिरतरमवनौ वासुनंदी शुभा वः॥

इति॥

इति मूलाचारविवृतौ द्वादशोऽध्यायः। कुन्दकुन्दाचार्यप्रणीतमूलाचाराख्यविवृतिः। कृतिरियं वसुनन्दिनः श्रीश्रमणस्य।

## अथ प्रशस्ति-पाठः ।

प्रणमामि महावीरं सिद्धं शुद्धं जिनेश्वरं ।
यस्य ज्ञानाम्बुधौ भाति जगद्विन्दूपमं स्थितं ॥ १ ॥
कृतात्मनो जना यत्र कर्म प्रक्षिप्य हेलया ।
रमन्ते मुक्तिलक्ष्मीं तज्जैनं जयति शासनं ॥ २ ॥
जयन्तु गौतमस्वामिप्रमुखा गणनायकाः ।
सूरयो जिनचन्द्रान्ताः श्रीमन्तः क्रमदेशकाः ॥ ३ ॥
वर्षे षडेकपंचैकपूरणे विक्रमे नतः ( ? ) ।
शुक्ले भाद्रपदे मासे नवम्यां गुरुवासरे ॥ ४ ॥
श्रीमद्वट्टेरकाचार्यकृतसूत्रस्य सद्विधेः ।
मूलाचारस्य सद्वृत्तेर्दातुर्नामावलीं ब्रुवे ॥ ५ ॥

अथ—

श्रीजंवूपपदे द्वीपे क्षेत्रे भरतसंज्ञके ।
कुरुजाङ्गलदेशोऽस्ति यो देशः सुखसम्पदां ॥ ६ ॥
तत्रास्ति हस्तिना नाम्ना नगरी मागरीयसी ।
शान्तिकुंथ्वरतीर्थेशा यत्रासन्निन्द्रवंदिताः ॥ ७ ॥
विद्यते तत्समीपस्था श्रीमती योगिनीपुरी ।
यां पाति पातिसाहिश्रीर्न्हलोलाभिधो नृपः ॥ ८ ॥
तस्याः प्रत्याग्दिशि ख्यातं श्रीहिसारपिरोजकं ।
नगरं नगरंभाद्विवर्ल्लारााजिविराजितं ॥ ९ ॥
तत्र राज्यं करोत्येष श्रीमान् कुतवखानकः ।
तथा हैवतिखानश्च दाता भोक्ता प्रतापवान् ॥ १० ॥
अथ श्रीमूलसंघेऽस्मिन्नन्दिसंघेऽनघेऽजनि ।
बलात्कारगणस्तत्र गच्छः सारस्वतस्त्वभूत् ॥ ११ ॥

[illegible]: सूरिचन्द्रो जिताङ्गजः ।
दर्शनज्ञानचारित्रतपोवीर्यसमन्वितः ॥ १२ ॥

श्रीमान् बभूव मार्तण्डस्तत्पट्टोदयभूधरे ।
पद्मनन्दी बुधानन्दी तमश्छेदी मुनिप्रभुः ॥ १३ ॥

तत्पट्टाम्बुधिसच्चन्द्रः शुभचन्द्रः सतां वरः ।
पंचाक्षवनदावाग्निः कषायक्ष्माधराशनिः ॥ १४ ॥

तदीयपट्टाम्बरभानुमाली
क्षमादिनानागुणरत्नशाली ।
भट्टारकश्रीजिनचन्द्रनामा
सैद्धान्तिकानां भुवि योऽस्ति सीमा ॥ १५ ॥

स्याद्वादामृतपानतृप्तमनसो यस्यातनोत् सर्वतः
कीर्तिर्भूमितले शशाङ्कधवला सज्ज्ञानदानात् सतः ।
चार्वाकादिमतप्रवादितिमिरोष्णांशोर्मुनीन्द्रप्रभोः
सूरिश्रीजिनचन्द्रकस्य जयतात् संघो हि तस्यानघः ॥ १६ ॥

तच्छिष्या बहुशास्त्रज्ञा हेयादेयविचारकाः ।
शमसंयमसम्पूर्णा मूलोत्तरगुणान्विताः ॥ १७ ॥
जयकीर्तिश्चारुकीर्तिर्जयनन्दी मुनीश्वरः ।
भीमसेनादयोऽन्ये च दशधर्मधरा वराः ॥ १८ ॥ युग्मं ॥

अस्ति देशव्रताधारी ब्रह्मचारी गणाग्रणीः ।
नरसिंहोऽभिधानेन नानाग्रन्थार्थपारगः ॥ १९ ॥

तथा भूरिगुणोपेतो भूरानामा महत्तमः ।
श्रीमानश्वपतिश्चान्यः सुमतिर्गुरुभक्तिकृत् ॥ २० ॥

अन्यो नेमाभिधानोऽस्ति नेमिर्द्धर्मरथस्य यः ।
परस्तीकमसंज्ञश्च ज्ञातयज्ञोऽस्तमन्मथः ॥ २१ ॥

भवाङ्गभोगनिर्विण्णस्तिहुणाख्योऽपरो मतः ।
सम्यक्त्वादिगुणोपेतः कषायदववारिदः ॥ २२ ॥
ढाकाख्यो ब्रह्मचार्यास्ति संयमादिगुणालयः ।
सर्वे ते जिनचन्द्रस्य सूरेः शिष्या जयन्त्विह ॥ २३ ॥
श्रीमान् पंडितदेवोऽस्ति दाक्षिणात्यो द्विजोत्तमः ।
यो योग्यः सूरिमंत्राय वैयाकरणतार्किकः ॥ २४ ॥
अग्रोतवंशजः साधुर्लवदेवाभिधानकः ।
तत्सुतो धरणः संज्ञा तद्भार्या भीषुही मता ॥ २५ ॥
तत्पुत्रो जिनचन्द्रस्य पादपकंजषट्पदः ।
मीहाख्यः पंडितस्त्वस्ति श्रावकव्रतभावकः ॥ २६ ॥
तदन्वयेऽथ खंडेलवंशे श्रेष्ठीयगोत्रके ।
पद्मावत्याः समाम्नाये यक्षाः पार्श्वजिनेशिनः ॥ २७ ॥
साधुः श्रीमोहणाख्योऽभूत् संघभारधुरंधरः ।
तत्पुत्रो रावणो नाम पंचाणुव्रतपालकः ॥ २८ ॥
तस्य पुत्रौ समुत्पन्नौ पार्श्वचोषाभिधानकौ ।
कल्पवृक्षसमौ दाने जिनपादाब्जषटपदौ ॥ २९ ॥
साधोः पार्श्वस्य भार्याऽभूदाद्या पद्मिनिसंज्ञिका ।
पद्मानघस्य पद्मेव सती पद्मानना मता ॥ ३०
सूहोनाम्नी द्वितीयाभूद्या सौभाग्येन पार्वती ।
रतिं रूपेण शीलेन सीता जितवती सती ॥ ३१ ॥
सा धन्याः सन्ति पद्मिन्यास्त्रयः पुत्रा हितावहाः ।
रूपवन्तः कलावन्तो दयावन्तः प्रियंवदः ॥ ३२ ॥
तत्राद्यः साधुभीमाख्यो निजवंशविभूषणः ।
उपार्जयति वित्तं यः पात्रदानाय केवलं ॥ ३३ ॥

रुक्मिणी नाम्नी तस्य गेहनी शीलशालिनी ।
स्ववाचा कोकिला जिग्ये कान्त्या भा सवितुर्यया ॥ ३४ ॥
चत्वारः सन्ति तत्पुत्रास्तोल्हातेजाभिधानकौ ।
भोजाषिउराजनामानौ प्रफुल्लकमलाननाः ॥ ३५ ॥
तोल्हाख्यस्य मता भार्या तोल्हश्रीः श्रीनिवासिनी ।
साढाभिधोऽस्ति तत्पुत्रो दीर्घायुः स भवेदिह ॥ ३६ ॥
पत्नी तेजाभिधानस्य तेजश्रीर्लज्जयान्विता ।
भोजाख्यस्य तथा भार्या भोजश्रीर्भक्तिकारिणी ॥ ३७ ॥
पार्श्वसाधोद्वितीयोऽस्ति खेतानामा तनूद्भवः ।
श्रीमान्विनयसम्पन्नः सज्जनानन्ददायकः ॥ ३८ ॥
गेहिनी तस्य नीकाख्या रतिर्वा मन्मथस्य वै ।
या जिगाय स्वनेत्राभ्यां स्फुरद्भ्यां चकितां मृगी ॥ ३९ ॥
तस्याः पुत्रोऽस्ति वींझाख्यो विद्याधारः प्रियंवदः ।
ज्ञातीनानन्दयामास विनयादिगुणेन यः ॥ ४० ॥
पार्श्वपुत्रस्तृतीयोऽस्ति नेमाख्यो नियमालयः ।
देवपूजादिषट्कर्मपद्मिनीखंडभास्करः ॥ ४१ ॥
साभूनाम्नी तु तज्जाया रूपलज्जावती सती ।
वस्तासुरजनौ तस्याः सुतौ जनमनोहरौ ॥ ४२ ॥
पार्श्वभार्या द्वितीया या सूहोनाम्नीति तत्सुतः ।
ईश्वराह्वो कलावासः कलुपापेतमानसः ॥ ४३ ॥
साधुचोपाभिधानस्य स्ववंशाम्बरभास्करः ( स्वतः ) ।
माऊनाम्न्यास्ति सद्भार्या शीलानेककलालया ॥ ४४ ॥
तस्या अङ्गरुहौ ख्यातौ सत्यभूषाविभूषितौ ।
लक्ष्मीवंतौ महान्तौ तौ पात्रदानरतौ हितौ ॥ ४५ ॥

तयोराद्योऽस्ति संघेशो नृसिंहः पद्मसिंहकः ।
चकार नेमिनाथस्य यात्रां यो दुःखहारिणीं ॥ ४६ ॥

तत्कलत्रं लसद्गात्रं पद्मश्रीर्नाम कामदं ।
गृहे पात्रे समायाते यदानन्दयते चिरं ॥ ४७ ॥

तस्य पुत्रास्त्रयः सन्ति दीर्घायुषो भवन्तु ते ।
हेमराजो गजमल्लोऽपरः श्रवणसंज्ञकः ॥ ४८ ॥

चोषापुत्रो द्वितीयोऽस्ति रूल्हानामा गुणाकरः ।
रूल्हश्रीर्महिला तस्य देवराजाख्य अंगजः ॥ ४९ ॥

एतैः श्रीसाधुपार्श्वस्य चोषाख्यस्य च कायजैः ।
वसाद्भिर्झूंझणूस्थाने रम्ये चैत्यालयैर्वरैः ॥ ५० ॥

चाहमानकुलोत्पन्ने राज्यं कुर्वीति भूपतौ ।
श्रीमत्समसखानाख्ये (?) न्यायान्यायविचारके ॥ ५१ ॥

सूरिश्रीजिनचन्द्रस्य पादपंकजषट्पदैः ।
साधुभीमादिभिः सर्वैः साधुपद्मादिभिस्तथा ॥ ५२ ॥

कारितं श्रुतपंचम्यां महदुद्यापनं च तैः ।
श्रीमद्देशव्रताधारिनरसिंहोपदेशतः ॥ ५३ ॥ चतुष्कलं ।

तदा तैर्जिनबिम्बानामाभिषेकपुरस्सरा ।
कारितार्चा महाभक्त्या यथायुक्ति च सोत्सवा ॥ ५४ ॥

भृंगारकलशादीनि जिनावासेषु पंचसु ।
क्षिप्तानि पंच पंचैव चैत्योपकरणानि च ॥ ५५ ॥

एतच्छास्त्रादिभक्त्या तैर्ज्ञानदानमदायि च ।
ब्रह्मश्रीनरसिंहाख्यतिहुणादियतीशिने ॥ ५६ ॥

चतुर्विधाय संघाय सदाहारश्चतुर्विधः ।
प्रादाय्यौषधदानं च वस्त्रोपकरणादि च ॥ ५७ ॥

मित्रयाचकहीनेभ्यः प्रीतितुष्टिकृपादि च ।
दानं प्रदत्तमित्यादि धन्यव्ययो व्यधायि तैः ॥ ५८ ॥

इत्थं सप्तक्षेत्र्यां वपते यो दानमात्मनो भक्त्या ।
लभते तदनन्तगुणं परत्र सोऽत्रापि पूज्यः स्यात् ॥ ५९ ॥

एतच्छास्त्रं लेखयित्वा हिसारादानाय्य स्वोपार्जितेन स्वराया ।
संघेशश्रीपद्मसिंहेन भक्त्या सिद्धान्ताय श्रीनराय प्रदत्तं ॥ ६० ॥

यो दत्ते ज्ञानदानं भवति हि स नरो निर्जराणां प्रपूज्यो,
भुक्त्वा देवाङ्गनाभिर्विषयसुखमनुप्राप्य मानुष्यजन्मं ।
भक्त्वा राज्यस्य सौख्यं भवतनुष (?) सुखान्निस्पृहीकृत्य चित्तं,
लात्वा दीक्षां च बुध्वा श्रुतमपि सकलं ज्ञानमन्त्यं लभेत ॥ ६१ ॥

ज्ञानदानाद्भवेज्ज्ञानी सुखी स्याद्भोजनादिह ।
निर्भयोऽभयतो जीवो नीरुगौषधदानतः ॥ ६२ ॥

धर्मतः सकलमंगलावली धर्मतो भवति मुंडकेवली ।
धर्मतो जिनसुचक्रभृद्बली नाथतद्रिपुमुखो नरो बली ॥ ६३ ॥

ज्ञात्वेति कुर्वन्तु जनाः सुधर्मं सदैहिकामुष्मिकसौख्यकामाः ।
देवार्चनादानतपोव्रताद्यैर्धान्यं न लभ्यं कृषिमन्तरेण ॥ ६४ ॥

खंडेलान्वयमंडनेन्दुवदन त्वं पद्मसिंहाख्य भो,
हेमाद्यैस्त्रिभिरंगजैर्गतिमितैर्भीमादिभिर्बन्धुभिः ।
भव्यांभोरुहखंडवासरमणेश्चारित्रचूडामणेः
सूरिश्री जिनचन्द्रकस्य वचनान्नन्द्याश्चिरं भूतले ॥ ६५ ॥

शास्त्रं शस्त्रं पापवैरिक्षयेदः शास्त्रं नेत्रं त्वन्तरार्थप्रदृष्टौ ।
शास्त्रं पात्रं सर्वचंचद्गुणानां शास्त्र तस्माद्यत्नतो रक्षणीयं ॥ ६६ ॥

श्रुत्वा शास्त्रं पापशत्रुं हिनस्ति श्रुत्वा शास्त्रं पुण्यमित्रं धिनोति ।
श्रुत्वा शास्त्रं सद्विवेकं दधाति तस्माद्भव्यो यत्नतस्तद्धि पाति ॥६७॥

यावत्तिष्ठति भूतले सुरनदी रत्नाकरो भूधरः।
कैलाशः किल चाक्रिकारितजगद्वन्द्यज्ञचैत्यालयः।
यावद्व्योम्नि शशाङ्कवासरमणी प्रस्फेटयन्तौ तम—
स्तावत्तिष्ठतु शास्त्रमेतदमलं सम्पद्यमानं बुधैः॥ ६८॥

सूरिश्रीजिनचन्द्रांह्रिस्मरणाधीनचेतसा।
प्रशस्तिर्विहिता चासौ मीहाख्येन सुधीमता॥ ६९॥

यद्यत्र काप्यवद्यं स्यादर्थे पाठे मयादृतं।
तदाशोध्य बुधैर्वाच्यमनन्तः शब्दवारिधिः॥ ७०॥

इति श्रीभव्यकुमुदचन्द्रस्य सूरेः श्रीजिनचन्द्रस्य पादांभोरुहषट्पदेन पंडितश्रीमेधाविसंज्ञेन काव्यबन्धेन विरचिता प्रशस्ताप्रशस्तिः समाप्ताः।

(इति पर्यन्तः ख-ग-पुस्तकीयः पाठः सदृशः।)

**ख—पुस्तकीयपाठः**—संवत् १८८७ का पोषमासे कृष्णपक्षातिथौ ६ रविवासरे लिषाइतं पंडितसरूपचन्द तत्शिष्यसदासुषलिप्यकृतं म्हात्मा संभुराम सवाईजैपुरमध्ये। सं. १८८७ ऋषिवसुसिन्द्वीन्दयुते पोष-मासे कृष्णपक्षे दशमीगुरुवासरे अनेकशोभाशोभिते श्रीसपादजयपुराह्वये नगरे श्रीमन्महाराजाधिराजराजराजेन्द्रश्रीसवाईजयसिंहजिद्राज्यप्रवर्तमाने नानाविधिवादित्रशोभिते विचित्रवेदिकान्विते मं..................

**ग—पुस्तकीयपाठः**—लिषितं भारतीपुरवास्तव्यपंडितपुरुषोत्तमपुत्र धाराधरसंज्ञेन॥ छ॥ शुभं भूयात् लेखकपाठकयोः॥॥ छ॥ छ॥ श्रीः॥ ॥ छ॥ शुभं भवतु॥ छ॥